न्दितपादपद्म। नानाफणामण्डलराजमान गृहाण०। ओं आशीविषसमोपेत नागकन्याविराजित। आगच्छ नागराजेन्द्र स्तम्भे०। ओं भूर्भुवः स्वरित्यादिनावाह्य आयं गौरित्यादिक-(२३ पृ० २२पं०) मुचार्य्याचर्चयेत्। ततः ओं नमः खेटक-हस्ताय त्रिनेत्राय नमो नमः। नमो भीषणदेवाय खड्गहस्ताय ते नम इति नत्वा ओं खड्गखेटधराः सर्वे फणामण्डलमण्डिताः। एकभोगाः साक्षसूत्रा वरदाः सन्तु मे सदा। इति प्रार्थयेत्। ततः ओं मध्यसन्ध्यायै नमः धरायै पद्मायै महापद्मायै नम इति पूजयेत्। अन्यत् पूर्ववत्।

आग्नेयदक्षिणयोरन्तरालस्तम्भे ओं आवाहयामि देवेशं षण्मुखं कृत्तिकासुतम्। रुद्रतेजःसमुत्पन्नं देवसेनासमन्वितम्। मयूरवाहनं शक्तिपाणिं वै ब्रह्मचारिणम्। आगच्छ भगवन् स्कन्द स्तम्भे०। ओं भूर्भुवः स्वरित्यादिनावाह्य यदक्रन्द इत्यस्य भार्गवजमदग्निदीर्घतमा ऋषिस्त्रिष्टुप् छन्दः स्कन्दो देवता स्कन्द-पूजने वि०। ओं यदक्रन्दः प्रथमं जायमान उद्यन् समुद्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् (य० २९, अ० १२) इत्यनेनाभ्यर्च्य ओं नमः स्कन्दाय शैवाय घण्टाकुक्कुटधारिणे। पताकाशक्तिहस्ताय षण्मु-खाय च ते नम इति नत्वा ओं मयूरवाहन स्कन्द गौरीसुत षडानन। कार्त्तिकेय महाभाग दयां कुरु दयानिधे इति प्रार्थ्य ओं पश्चिमसन्ध्यायै नमः ओं कौमार्य्यै नम इति संपूज्य प्राग्वत् स्तम्भालम्भनं कार्य्यम्।

दक्षिणनैर्ऋतान्तरालस्तम्भे ओं आवाहयामि देवेशं भूतानां देहधारिणम्। सर्वाधारं महावेगं मृगवाहनमीश्वरम्। ओं खड्गहस्त महावेग त्रैलोक्यान्तरचारण। आगच्छ भगवन् वायो स्तम्भे०। ओं भूर्भुवः स्वरित्यादिनावाह्य वायो ये

ते इत्यस्य गृत्समद ऋषिर्गायत्री छन्दो वायुर्देवता वायुपूजने वि०। ओं वायो ये ते सहस्त्रिणो रथासस्तेऽभिरागहि। नियुत्वान् सोमपीतये (य० २७, अ० ३१) इत्यनेनाभ्यर्च्य ओं नमो हरिणपृष्ठस्थ समीरण नमोऽस्तु ते। धूम्रवर्ण नमस्तेऽस्तु शीघ्रगामिन् नमोऽस्तु ते इति नत्वा ओं धावद्धरिणपृष्ठस्थ ध्वजहस्त समीरण। दण्डहस्त मृगारूढ़ वरं देहि वरप्रद इति प्रार्थ्य ओं वायव्यै नमः गायत्र्यै नमः मध्यसन्ध्यायै नम इति संपूज्य स्तम्भालम्भनादि पूर्ववत् कुर्य्यात्।

नैऋतस्तम्भे ओं आवाहयामि देवेशं शशाङ्कं रजनीपतिम्। क्षीरोदधिसमुद्भूतं हरमौलिविभूषणम्। सुधाकरं द्विजाधीशं त्रैलोक्यप्रीतिकारकम्। ओषध्याप्यायनकर सोम कन्दर्पवर्द्धन। आगच्छ भगवन् सोम स्तम्भे ०। ओं आप्यायस्वेत्यस्य गौतम ऋषिर्गायत्री छन्दः सोमो देवता सोमपूजने वि०। ओं आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य संगथे (य० १२, अ० ११२) इत्यनेनाभ्यर्च्य ओं अत्रिपुत्र नमस्तेऽस्तु नमस्ते शशलाञ्छन। श्वेताम्बर नमस्तेऽस्तु ताराधिप नमोऽस्तु ते इति नत्वा ओं अत्रिपुत्र निशानाथ द्विजराज सुधाकर। सोम त्वं सौम्यभावेन ग्रहपीड़ां निराकुरु इति प्रार्थ्य ओं सावित्र्यै नमः अमृतकलायै नमः विजयायै पश्चिमसन्ध्यायै नम इति संपूज्य स्तम्भालम्भनादिकं पूर्ववत् कुर्य्यात्।

ततो नैऋतपश्चिमयोरन्तरालस्तम्भे ओं आवाहयामि देवेशं सलिलस्याधिपं प्रभुम्। शङ्खपाशधरं सौम्यं वरुणं यादसां पतिम्। ओं गम्भीरथसमारूढ़ मणिरत्नसमन्वित। आगच्छ देव वरुण स्तम्भे ०। ओं भूर्भुवः स्वरित्यावाह्य इमं मे वरुणेत्यस्य शुनःशेफ ऋषिर्गायत्री छन्दो वरुणो देवता वरुणोपासने वि०। ओं इमं मे वरुण श्रुधी हवमद्या च मृड़य। त्वामव-

सुराचक्रे (य० २१, अ० १) इत्यनेनाभ्यर्च्य ओं वरुणाय नमस्तेऽस्तु नमः स्फटिकदीप्तये। नमस्ते श्वेतहाराय जलेशाय नमो नमः इति नत्वा शुद्धस्फटिकवर्णाभ श्वेतहाराम्बरावृत। पाशहस्त महाबाहो दयां कुरु दयानिधे इति प्रार्थ्य ओं वारुण्यै नमः एवं पाशधारिण्यै बृहत्यै इत्यभ्यर्च्य प्राग्वत् स्तम्भसंस्कारं कुर्य्यात्।

ततः पश्चिमवायव्यान्तरालस्तम्भे ओं आवाहयामि देवेशान् वसूनष्टौ महाबलान्। सौम्यमूर्त्तिधरान् देवान् दिव्यायुधकरान्वितान्। शुद्ध-स्फटिक-संकाशान्नाना-वस्तु-विराजितान्। अश्वारूढ़ान् दिव्यवस्त्रान् सर्वालङ्कारभूषितान्। आवाहयामि स्तम्भेऽस्मिन् वसूनष्टौ सुखावहान्। ओं भूर्भुवः स्वर्वसव इहागच्छतेत्यादिनावाह्य वसवस्त्वेत्यस्य ब्रह्मा ऋषिरनुष्टुप् छन्दो वसवो देवता वसुपूजने वि०। ओं वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाङ्गिरस्वद्ध्रुवासि पृथिव्यसि। धारया मयि प्रजां रायस्पोषं गौपत्यं सुवीर्य्यं सजातान् यजमानाय (य० ११, अ० ५८) इत्यनेनाभ्यर्च्य ॐ नमस्करोमि देवेशान् नानावस्तुविराजितान्। शुद्धस्फटिकसङ्काशान् दिव्यायुधकरान् वसून् इति नत्वा ॐ दिव्यवस्त्रा दिव्यदेहाः पुष्पमालाविभूषिताः। वसवोऽष्टौ महाभागा वरदाः सन्तु मे सदा इति प्रार्थ्य ॐ विनतायै नमः एवं अणिमायै भूत्यै गरिमायै इत्यभ्यर्च्य स्तम्भालम्भनं प्राग्वत् कुर्य्यात्।

वायव्यस्तम्भे ओं आवाहयामि देवेशं धनदं यक्षपूजितम्। महाधनं दिव्यदेहं नरयानगतिं विभुम्। दिव्यमाल्याम्बरधर गदाहस्त महाभुज। आगच्छ यक्षराज त्वं स्तम्भे०। ओं भूर्भुवः स्वरित्यादिनावाह्य सोमो धेनुमित्यस्यादित्ययाज्ञवल्क्यौ ऋषी त्रिष्टुप् छन्दः सोमो देवता सोमपूजने वि०। ओं सोमो

धेनुं सोममर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति। सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै (य० ३४, अ० २१) इत्यनेनाभ्यर्च्य ओं यक्षराज नमस्तेऽस्तु नमस्ते नरयानग। पीताम्बर नमस्तेऽस्तु गदापाणे नमोऽस्तु ते इति नत्वा दिव्यदेह धनाध्यक्ष पीताम्बर गदाधर। उत्तरेश महाबाहो वाञ्छितार्थ-फलप्रद इति प्रार्थ्य ओं आदित्यै नमः एवं लघिमायै सिनीवाल्यै इत्यभ्यर्च्य प्राग्वत् स्तम्भालम्भनं कुर्य्यात्।

उत्तरवायव्यान्तरालस्तम्भे ओं आवाहयामि देवेशं गुरुं त्रिदशपूजितम्। हेमगोरोचनावर्णं पीनस्कन्धं सुवक्षसम्। शङ्खञ्च कलसञ्चैव पाणिभ्यामिह बिभ्रतम्। बृहस्पते समागच्छ स्तम्भे ०। ओं भूर्भुवः स्वरित्यादिनावाह्य बृहस्पते इत्यस्य गृत्समद ऋषिस्त्रिष्टुप् छन्दो गुरुर्देवता गुरुपूजने वि०। ओं बृहस्पते अति यदर्य्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं देहि चित्रम्। (य० २६, अ० ३) इत्यनेनाभ्यर्च्य ओं ब्रह्मपुत्र नमस्तेऽस्तु पीतध्वज नमोऽस्तु ते। त्रिदशार्चित देवेश सिन्धूद्भव नमोऽस्तु ते इति नत्वा ओं पूजितोऽसि यथाशक्त्या दण्डहस्त बृहस्पते। क्रूर-ग्रहाभिभूतस्य शान्तिं देवगुरो कुरु इति प्रार्थ्य ओं पूर्णनाम्न्यै नम एवं सावित्र्य इत्यर्चयित्वा पूर्ववत् स्तम्भालम्भनं कुर्य्यात्।

तत उत्तरैशानयोरन्तरालस्तम्भे ओं आवाहयामि देवेशं विश्वकर्म्माणमीश्वरम्। मूर्त्तामूर्त्तकरं देवं सर्वकर्त्तारमीश्वरम्। त्रैलोक्यसूत्रकर्त्तारं द्विभुजं सर्वदर्शिनम्। आगच्छ विश्वकर्म्मं-स्त्वं स्तम्भे ०। ओं भूर्भुवः स्वरित्यादिनावाह्य विश्वकर्म्मन्नि-त्यस्य भुवनपुत्रविश्वकर्म्मा ऋषिस्त्रिष्टुप् छन्दो विश्वकर्म्मा देवता तदुपासने वि०। ओं विश्वकर्म्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम्। मुह्यन्त्वन्ये अभितः सपत्ना इहा-

स्माकं मघवा सूरिरस्तु (य० १७, अ० २२) इत्यनेनाभ्यर्च्य ओं नमामि विश्वकर्म्माणं द्विभुजं विश्वदर्शिनम्। त्रैलोक्यसूत्रकर्त्तारं महाबलपराक्रमम्। इति नत्वा ओं प्रसीद विश्वकर्म्मंस्त्वं शिल्पिशास्त्रविशारद। सहण्डपाणे द्विभुज तेजोमूर्त्तिधर प्रभो इति प्रार्थ्य ओं सिनीवाल्यै नमः एवं वास्तुदेवतायै सावित्र्यै इति संपूज्य स्तम्भालम्भनादि प्राग्वत् कुर्य्यादिति स्तम्भसंस्कारः।

अथ तोरणपूजा। तत्र पूर्वस्यां मण्डपाद्बहिर्हस्तमालान्तरिते देशे वटतोरणमाश्वत्थं वा त्रिशूलचिह्नितं वा अग्निमीड़े इत्यस्य मधुच्छन्दा ऋषिर्गायत्री छन्दोऽग्निर्देवता पूर्वतोरणस्थापने वि०। ओं अग्निमीड़े पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम् (ऋ० १, अ० १) इत्यनेन निधाय ओं सुदृढ़ाय नम इति ओं सुशोभनाय नम इति वा नाममन्त्रेण संपूज्य चन्दनपुष्पमालावस्त्रादिभूषितं कृत्वा तत्र राहुवृहस्पती आवाह्य पूजयेत्। ततस्तोरणस्तम्भयोर्म्मध्ये कलसमेकं स्थापयेद्यथा। भूरसीत्यस्य प्रजापतिर्ऋषिः प्रस्तारपङ्क्तिश्छन्दो भूमिर्देवता भूमिस्पर्शे वि०। ओं भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्त्री। पृथिवीं यच्छ पृथिवीं दृंह पृथिवीं मा हिंसीः। (य० १३, अ० १८) इत्यनेन भूमिं स्पृष्ट्वा ओषधय इत्यस्य बन्धुर्ऋषिरनुष्टुप् छन्दः ओषधयो देवता घटे यवदाने वि०। ओं ओषधयः समवदन्त सोमेन सह राज्ञा। यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि (य० १२, अ० ९६) इत्यनेन भूमौ यवान्निधाय आजिघ्रमित्यस्य कुसुरुविन्धुर्ऋषिर्महापङ्क्तिश्छन्दः कलसस्पर्शे वि०। ओं आजिघ्र कलसं मह्या त्वा विशन्त्विन्दवः। पुनरूर्ज्जा निवर्त्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्म्मा विशताद्रयिः (य०

८, अ० ४२) इत्यनेन तेषु यवेषु कलसं स्थापयेत्। वरुण-स्योत्तम्भनमसीत्यस्य सूर्य्य ऋषिश्छन्दोऽभावो वरुणो देवता कलसे जलदाने वि०। ओं वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनीस्थः वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीत् (य० ४, अ० ३६) इत्यनेन जलं गृहीत्वा मही द्यौरित्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दो द्यावापृथिव्यौ देवते कलसपूरणे वि०। ओं मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्। पिपृतां नो भरीमभिः (य० ८, अ० ३२) इति तीर्थोदकेन कलसमापूर्य्य या ओषधीरित्यस्याथर्वपुत्रभिषगृषिरनुष्टुप् छन्द ओषध्यो देवताः कलसे तद्दाने वि०। ओं या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु। बृहस्पतिप्रसूता अस्यै संदत्त वीर्य्यम् (य० १२, अ० ९३) इति सर्वौषधीर्दत्त्वा हिरण्यगर्भ इत्यस्य हिरण्यगर्भ ऋषिस्त्रिष्टुप् छन्दो हिरण्यगर्भो देवता कलसे हिरण्यादिदाने वि०। ओं हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम (य० १३, अ० ४) इत्यनेन पञ्चरत्नं हिरण्यं वा दत्त्वा अश्वत्थे व इत्यस्याथर्वपुत्रभिषगृषिरनुष्टुप् छन्द ओषध्यो देवता घटे पञ्चपल्लवदाने वि०। ओं अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता गोभाज इत् किलासथ यत् सनवथ पूरुषम् (य० १२, अ० ७९) इति पञ्चपल्लवान् दत्त्वा स्योना पृथिवीत्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दः पृथिवी देवता कलसे सप्तमृत्तिकादाने वि०। ओं स्योना पृथिवी नो भवानृक्षरा निवेशनी। यच्छा नः शर्म्म सप्रथाः (य० ३५, अ० २१) इति सप्त पञ्च वा मृत्तिका दद्यात्। ततः पूर्णा दर्वीत्यस्य और्णनाभ ऋषिरनुष्टुप् छन्द इन्द्रो देवता कलसे पूर्णपात्रदाने वि०। ओं पूर्णा दर्वि परापत सुपूर्णा

पुनरापत। वस्नेव विक्रीणावहा इषमूर्ज्जं शतक्रतो (य० ३, अ० ४९) इति मन्त्रेण घटे तण्डुलपूर्णं ताम्रादिमयं पूर्णपात्रं निधाय श्रीश्च ते इत्यस्य नारायण ऋषिस्त्रिष्टुप् छन्दः श्रीर्देवता घटे पुष्पमालादिदाने वि०। ओं श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विने व्यात्तम्। इष्णन्निषाणामुं मइषाण सर्वलोकं मइषाण (य० ३१, अ० २२) इत्यनेन मालां पुष्पं वा दद्यात्। याः फलिनीरित्यस्याथर्वपुत्रभिषगृषिरनुष्टुप् छन्द ओषध्यो देवताः कलसे फलदाने वि०। ओं याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः (य० १२, अ० ८९) इत्यनेन पूर्णपात्रे नारिकेलादिफलं दत्त्वा सुजात इत्यस्य सिन्धुद्वीप ऋषिरनुष्टुप् छन्दोऽग्निर्देवता कलसे वस्त्रदाने वि०। ओं सुजातो ज्योतिषा सह शर्म्म वरूथमासदत् स्वः। वासो अग्ने विश्वरूपं संव्ययस्व विभावसो (य० ११, अ० ४०) इत्यनेन वासोयुग्मेन वाससा वा कलसमावेष्ट्य मनो जूतिरित्यस्याङ्गिरसो बृहस्पतिर्ऋषिश्छन्दोऽभावः विश्वेदेवा देवताः प्राणप्रतिष्ठायां वि०। ओं मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोतु। अरिष्टं यज्ञं समिमं दधातु विश्वे देवास इह मादयन्तामों प्रतिष्ठ (य० २, अ० १३) इत्यनेन कलसः सुप्रतिष्ठो भवेति कलसं प्रतिष्ठाप्य गन्धादिभिः संपूज्य प्रार्थयेत्। ओं देवदानवसंवादे मथ्यमाने महोदधौ। उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम्। त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः। शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः। आदित्या वसवो रुद्रा विश्वेदेवा सपैतृकाः। त्वयि तिष्ठन्ति कलस यतः कामफलप्रदः। त्वत्प्रसादादिमं यज्ञं कर्त्तुमीहे जलोद्भव। सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा इति।

ओं कलशस्य मुखे ब्रह्मा ग्रीवायाञ्च महेश्वरः। मूले तु संस्थितो विष्णुर्मध्ये मातृगणाः स्थिताः। शेषास्तु देवताः सर्वा वेष्टयन्ति चतुर्दिशम्। पृथिव्यां यानि तीर्थानि कलशे निवसन्ति हि। ग्रहशान्तिश्च पुष्टिश्च प्रीतिश्च मतिरेव च। ऋग्वेदश्च यजुर्वेदः सामवेदस्तथैव च। अथर्ववेदसहिताः सर्वे कलशसंस्थिता इति पठेत्। अत्र कुम्भे ध्रुव इहागच्छेत्यादिना-वाह्य ओं ध्रुवाय नम इति पूजयेत्। ततो दक्षिणे औदम्बरं प्लक्षं वा तोरणम् ओं इषे त्वोर्ज्जे त्वा वायवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मण आप्यायध्वमघ्न्या इन्द्राय भागं प्रजापतिरनमीवा अयक्ष्मा मा वस्तेन ईशत माघशंसो ध्रुवा अस्मिन् गोपतौ स्यात बह्वीः। यजमानस्य पशून् पाहि (य० १, अ० १) इति मन्त्रेण निधाय ओं सुभद्राय तोरणाय नम इति संपूज्य चन्दनादिभिर्भूषयित्वा सूर्य्यमङ्गारकञ्च तत्रावाह्य पूजयेत्। ततस्तोरणस्तम्भयोर्म्मध्ये पूर्ववत् कलसं स्थापयित्वा तत्र धरे इहागच्छेत्यादिना धरामावाह्य ओं धरायै नम इति पूजयेत्। ततः पश्चिमे प्लाक्षमौदुम्बरं वा तोरणम् ओं अग्ने आयाहि वीतये गृणानो हव्यदातये। निहोता सत्सि वर्हिषि इत्यनेन निधाय ओं सुकर्म्मणे तोरणाय नम इति संपूज्य चन्दनादिभिर्भूषितं कृत्वा शुक्रं बुधञ्च तत्रावाह्यार्चयेत्। अथ तोरणस्तम्भयोर्मध्ये पूर्ववत् कलसं संस्थाप्य वाक्पतिं पूर्ववदावाहयेत्। अथोत्तरे नैयग्रोधमाश्वत्थं वा तोरणं ओं शन्नो देवीरभिष्टय आपो भवन्तु पीतये शंयोरभिस्रवन्तु न इति मन्त्रेण निधाय ओं सुहोत्राय तोरणाय नम इति गन्धादिभिः संपूज्य सोमं केतुं शनिञ्च तत्रावाह्यार्चयेत्। ततस्तोरणस्तम्भयोर्मध्ये पूर्ववत् कलसं संस्थाप्य विघ्नेशमावाह्य गन्धादिभिर्यथाविभवं समभिपूजयेत्। इति तोरणपूजा।

अथ ध्वजपताकादिसंस्कारः। पूर्वद्वारे द्वारशाखाद्वयमूले द्ध्यक्षतादियुक्तं कलसद्वयं पूर्ववन्मन्त्रावृत्त्या संस्थाप्य तत्र कलसद्वये ऐरावतमावाह्य पूजयेत्। ओं द्वारश्रियै नम इति द्वारादूर्द्धम् देहल्यै नम इत्यधः वामे स्तम्भे ओं गणेशाय नमः दक्षिणे ओं स्कन्दाय नमः वामस्थकुम्भे गङ्गायै नमः दक्षिणस्थ-कुम्भे यमुनायै नम इति पूजयेत्। तत ऋग्वेदिनावृत्विजौ पूर्वद्वारे शान्तिसूक्तजपार्थत्वेन प्रत्येकमस्मिन् काले वा वृणुयात्। ओं ऋग्वेदः पद्मपत्राक्षी गायत्रः सोमदैवतः। अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भवेति प्रत्येकं संप्रार्थ्य अग्निमीले इत्यस्य मधुच्छन्दा ऋषिर्गायत्री छन्दोऽग्निर्देवता ऋग्वेदवि-प्रपूजने वि०। ओं अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम् इति मन्त्रेण गन्धादिभिरभ्यर्चयेत्। ततः एह्येहि सर्वामरसिद्धसंघैरभिष्टुतो वज्रधरामरेश। संवीज्य-मानोऽप्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते। भो इन्द्र इहागच्छेत्यादिना साङ्गं सपरिवारं सायुधं सशक्तिकमिन्द्रं द्वारकलसयोरावाह्य त्रातारमित्यस्य गर्ग ऋषिस्त्रिष्टुप् छन्द इन्द्रो देवता तत्पूजने वि०। ओं त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं शूरमिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः (य० २०, अ० ५०) इत्यनेन संपूज्य आशुः शिशान इत्यस्याप्रतिरथऋषिस्त्रिष्टुप् छन्द इन्द्रो देवता शाक्र-पताकाद्युच्छ्रयने वि०। ओं आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्। संक्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत् साकमिन्द्रः (य० १७, अ० ३३) इति मन्त्रेण पीतां पताकां पीतध्वजं च पूर्वोक्तप्रकारमुच्छ्रयेत्। ऐरावत-स्थितं पीतवर्णं सहस्राक्षं किरीटकुण्डलधरं दक्षिणवामकरस्थ-वज्रोत्पलमिन्द्रं ध्यात्वा ओं इन्द्रः सुरपतिः श्रेष्ठो वज्रहस्तो

महाबलः । शतयज्ञाधिपो देवस्तस्मै नित्यं नमो नम इति नत्वा इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय बलिं समर्पयामीति कलसयोरग्रतो बलिं दद्यात् ।

अथाचम्याग्नेये गत्वा पूर्ववत् कलसं स्थापयित्वा तत्र पुण्डरीकमक्षतं च संपूज्य ओं एह्येहि सर्वामरहव्यवाह मुनिप्रवर्य्यैरभितोऽभिजुष्ट । तेजोवता लोकगणेन सार्द्धं ममाध्वरं पाहि कवे नमस्ते । भो अग्ने इहागच्छेत्यादिना साङ्गं सपरिवारं सायुधं सशक्तिकमग्निमावाह्य त्वं नो अग्ने इत्यस्यादित्ययाज्ञवल्क्यावृषी जगती छन्दोऽग्निर्देवता अग्निपूजने वि० । ओं त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य । त्राता तोकस्य तनये गवामस्यनिमिषं रक्षमाणस्तव व्रते (य० ३४, अ० १३) इत्यनेन संपूज्य अग्निं दूतमित्यस्य विश्वामित्र ऋषिर्गायत्री छन्दोऽग्निर्देवता आग्नेयपताकाद्युच्छ्रयणे वि० । ओं अग्निं दूतं पुरोदधे हव्यवाहमुपब्रुवे । देवाँ आसादयादिह (य० २२, अ० १७) इत्यनेन रक्तां पताकां रक्तं ध्वजं च समुच्छ्रयेत् । ततश्छागस्थं रक्तं दक्षिणवामकरधृतशक्तिकमण्डलुं यज्ञोपवीतिनमग्निं ध्यात्वा ओं आग्नेयः पुरुषो रक्तः सर्वदेवमयोऽव्ययः । धूमकेतुरजाध्यक्षस्तस्मै नित्यं नमो नम इति नत्वा ओं अग्नये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एतं माषभक्तबलिं समर्पयामीति कुम्भस्याग्रे बलिं दद्यात् ।

अथाचम्य दक्षिणद्वारे द्वारशाखाद्वयमूले कलसद्वयं पूर्ववत् स्थापयित्वा तयोर्वामनं दिग्गजमावाह्यार्चयेत् । ततः ओं द्वारश्रियै नम इति द्वारादूर्द्ध्वम् ओं देहल्यै नम इत्यधः वामस्तम्भे ओं पुष्पदन्ताय नमः दक्षिणस्तम्भे ओं कपर्दिने नमः द्वारस्थवामकलसे ओं गोदायै नमः दक्षिणकलसे ओं कृष्णायै

नम इति पूजयेत्। ततो यजुर्वेदिनाहृत्त्विजो दक्षिणद्वारे शान्तिसूक्तजपार्थत्वेनास्मिन्नेव वा काले वृणुयात्। यथा ओं कालराच्चो यजुर्वेदस्त्रैष्टुभो विष्णुदैवतः। काश्यपेयस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भवेति प्रत्येकमभ्यर्थ्य इषे त्वोर्य्ये इत्यादिना (८ पृ०, १२ पं०) प्रत्येकं गन्धादिभिरर्चयेत्। ततः ओं एह्येहि वैवस्वत धर्म्मराज सर्वामरैरर्चितधर्म्ममूर्त्ते। शुभाशुभानन्दशुचामधीश शिवाय नः पाहि मखं नमस्ते इत्यनेन भो यम इहागच्छेत्यादिना साङ्गं सपरिवारं सायुधं सशक्तिकं यमं कलसयोरावाह्य यमाय त्वेत्यस्य दध्यङ्ङाथर्वण ऋषिश्छन्दोऽभावो यमो देवता यमपूजने वि०। ओं यमाय त्वाङ्गिरस्वते पितृमते स्वाहा। स्वाहा घर्म्माय। स्वाहा घर्म्मः पित्रे (य० ३८ अ० ९) इत्यनेन संपूज्य आय गौरित्यस्य सर्पराज्ञी ऋषिर्गायत्रीच्छन्दः सर्पमाता देवता याम्यपताकाद्युच्छ्रयणे वि०। ओं आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः। पितरं च प्रयन् स्वः (य० ३ अ० ६) इत्यनेन कृष्णां पताकां कृष्णञ्च ध्वजं समुच्छ्रयेत्। ततो महिषारूढं धृतदण्डपाशदक्षिणवामकरमञ्जनाभरूपमग्नितुल्यलोचनं यमं ध्यात्वा ओं महामहिषमारूढं दण्डहस्तं महाबलम्। आवाहयामि यज्ञेऽस्मिन् पूजेयं प्रतिगृह्यतामिति नत्वा साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एतं माषभक्तवलिमर्पयामीति द्वारकुम्भयोरग्रे वलिं दद्यात्।

अथाचम्य नैर्ऋत्यां पूर्ववत् कलसं संस्थाप्य तत्र कुमुदं दिग्गजं दुर्जयञ्चावाह्यार्चयेत्। ओं एह्येहि रक्षोगणनायकस्त्वं विशालवेतालपिशाचसङ्घैः। ममाध्वरं पाहि पिशाचनाथ लोकेश्वरस्त्वं भगवन्नमस्ते इति पठित्वा भो निर्ऋते इहागच्छेत्यादिना साङ्गं सपरिवारं सायुधं सशक्तिकं निर्ऋतिं तत्रावाह्य

असुन्वन्तमित्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दो निर्ऋतिर्देवता तत्पूजने वि० । ओं असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य । अन्यमस्मदिच्छ सात इत्यानमो देवि निर्ऋति तुभ्यमस्तु ( य० १२ अ० ६२ ) इत्यनेनाभ्यर्च्य मो षू ण इत्यस्य कण्व ऋषिर्गायत्री छन्दो निर्ऋतिर्देवता नैर्ऋतपताकाद्युच्छ्रयणे वि० । ओं मो षू णः परापरा निर्ऋतिर्दुर्हणा बधीत् । पदीष्ट तृष्णया सह ( ऋ० १ अ० ३७७ पृ० ) इत्यनेन नीलां पताकां नीलं ध्वजं च समुच्छ्रयेत् । ततो नरारूढं खड्गहस्तं नीलवर्णं महाबलं महाकायं बहुराक्षसवेष्टितं सर्वाभरणभूषितं निर्ऋतिं ध्यात्वा ओं निर्ऋतिं खड्गहस्तं च सर्वलोकैकपावनम् । आवाहयामि यज्ञेऽस्मिन् पूजेयं प्रतिगृह्यतामिति नत्वा साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय निर्ऋतये एतं माषभक्तबलिं समर्पयामीति कलसस्याग्रतो बलिं दद्यात् ।

अथाचम्य पश्चिमद्वारे द्वारशाखयोर्मूले कलसद्वयं पूर्ववत् संस्थाप्य तत्राञ्जनं दिग्गजमावाह्यार्चयेत् । ओं द्वारश्रियै नम इति द्वारादूर्ध्वम् देहल्यै नम इत्यधः वामे स्तम्भे ओं नन्दिनै नमः दक्षिणे चण्डायै नमः द्वारवामस्थकलसे ओं रेवायै नमः दक्षिणस्थकुम्भे ताप्यै नम इति पूजयेत् । अथास्मिन्नेव वा समये सामवेदिनावृत्विजौ शान्तिसूक्तजपार्थत्वेन वृणुयात् । पूजनप्रार्थनादिकं ( ६ पृ० २४ पं० ) प्राग्वत् । ओं एह्येहि यादोगणवारिधीनां गणेन पर्जन्यसहाप्सरोभिः । विद्याधरेन्द्रामरगीयमान पाहि त्वमस्मान् भगवन्नमस्ते इति पठित्वा भो वरुण इहागच्छेत्यादिनावाह्य साङ्गं सपरिवारं सायुधं सशक्तिकं वरुणं द्वारकलसयोरावाह्य तत्त्वा यामीत्यस्य शुनःशेफ ऋषिस्त्रिष्टुप्छन्दो वरुणो देवता वरुणपूजने वि० ।

ओं तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः (य० १८ अ० ४९) इत्यनेन संपूज्य इमं मे इत्यस्य शुनःशेफ ऋषिर्गायत्री छन्दो वरुणो देवता वारुणपताकाद्युच्छ्रयणे वि०। ओं इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके। (य० २१ अ० १) इत्यनेन श्वेतां पताकां श्वेतं ध्वजञ्च समुच्छ्रयेत्। ततो मकरस्थं पाशहस्तं शुक्लवर्णं किरीटिनं वरुणं ध्यात्वा ओं पाशहस्तञ्च वरुणमर्णसां पतिमीश्वरम्। आवाहयामि यज्ञेऽस्मिन् वरुणाय नमो नम इति नत्वा साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एतं माषभक्तबलिं समर्पयामीति कलसयोरग्रतो बलिं दद्यात्।

तत आचम्य वायव्यां कलसं संस्थाप्य पुष्पदन्तं सिद्धार्थञ्च तत्रावाह्य पूजयेत्। ततः ओं एह्येहि यज्ञे मम रक्षणाय मृगाधिरूढः सह सिद्धसंघैः। प्राणाधिपः कालकवेः सहायः गृहाण पूजां भगवन्नमस्ते इति पठित्वा भो वायो इहागच्छेत्यादिनावाह्य साङ्गं सपरिवारं सायुधं सशक्तिकं वायुं तत्रावाह्य तव वायवित्यस्य व्यश्व ऋषिर्गायत्री छन्दो वायुर्देवता तत्पूजने वि०। ओं तव वायवृतस्पते त्वष्टुर्जामातरद्भुत। अवांस्यावृणीमहे (य० २७ अ० ३४) इत्यनेन संपूज्य वायो ये ते इत्यस्य प्रजापतिर्ऋषिर्गायत्री छन्दो वायुर्देवता वायव्यपताकाद्युच्छ्रयणे वि०। ओं वायो ये ते सहस्रिणो रथासस्तेभिरागहि। नियुत्वान् सोमपीतये (य० २७ अ० ३२) इत्यनेन धूम्रां पताकां धूम्रं ध्वजञ्च समुच्छ्रयेत्। ततो मृगाधिरूढं चित्राम्बरधरं युवानमङ्कशध्वजवरदक्षिणवामहस्तकरं वायुं धूम्रवर्णं ध्यात्वा ओं वायुमाकाशगञ्चैव परमं वेगवन्नतिम्। आवाहयामि यज्ञेऽस्मिन् पूजयेयं प्रतिगृह्यतामिति प्रार्थ्य अनाकारो महौजाश्च

यस्मादृष्टगतिर्दिवि । तस्मै पूज्याय जगतो वायवे ते नमाम्यहमिति नत्वा साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय वायवे एतं माषभक्तबलिं समर्पयामीति कलस्याग्रे बलिं दद्यात् ।

अथाचम्योत्तरद्वारे द्वारशाखयोर्मूले कलसद्वयं पूर्ववत् संस्थाप्य सार्वभौमं दिग्गजं तयोरावाह्यार्चयेत् । ततः ओं द्वारश्रियै नम इति द्वारादूर्द्ध्वम् देहल्यै नम इत्यधः द्वारवामस्तम्भे ओं महाकालाय नमः दक्षिणस्तम्भे भृङ्गिणे नमः द्वारस्थवामकुम्भे ओं वाण्यै नमः दक्षिणकुम्भे ओं वेण्यै नमः इत्यर्चयेत् । ततोऽस्मिन्नेव वा समयेऽथर्ववेदिनावृत्विजौ प्राग्वत् । (पृ० १०, पं० ४) वृणुयात् । ओं एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धम् । सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते इति पठित्वा भोः सोम इहागच्छेत्यादिना साङ्गं सपरिवारं सायुधं सशक्तिकं सोमं द्वारकलसयोरावाह्य वयं सोमेत्यस्य बन्धुर्ऋषिर्गायत्री छन्दो सोमो देवता सोमपूजने वि० । ओं वयं सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तः सचेमहि ( य० ३ अ० ५६ ) इत्यनेनाभ्यर्च्य आप्यायस्वेत्यस्य गौतमऋषिर्गायत्री छन्दः सोमो देवता सौम्यपताकाद्युच्छ्रयणे वि० । ओं आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवावाजस्य संगथे ( य० १२ अ० ११२ ) इत्यनेन हरितां पताकां हरितं ध्वजं च समुच्छ्रयेत् । ततो नरयुतपुष्पविमानस्थं कुण्डलकेयूरहारभूषितं वरदगदाधरदक्षिणवामहस्तं मुकुटिनं महोदरं स्थूलकायं ह्रस्वपिङ्गलनेत्रं पीतविग्रहं शिवसखं कुवेरं ध्यात्वा ओं सर्वनक्षत्रमध्ये तु सोमो राजा व्यवस्थितः । तस्मै सोमाय देवाय नक्षत्रपतये नम इति नत्वा साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय सोमायैतं माषभक्तबलिं समर्पयामीति कलसयोरग्रे बलिं दद्यात् ।

अथाचम्यैशान्यां पूर्ववत् कलसं स्थापयित्वा सुप्रतीकं दिग्गजं मङ्गलञ्च तत्रावाह्य पूजयेत्। ओं एह्येहि विश्वेश्वर नस्त्रिशूलकपालखट्वाङ्गधरेण सार्द्धम्। लोकेन यज्ञेश्वर यज्ञसिद्धै गृहाण पूजां भगवन्नमस्ते इति पठित्वा भो ईशान इहागच्छेत्यादिनावाह्य तमीशानमित्यस्य गौतमऋषिर्जगती छन्द ईशानो देवता तदर्चने वि०। ओं तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये (य० २५ अ० १८) इत्यनेनाभ्यर्च्य तेनैव श्वेतां पताकां श्वेतं ध्वजञ्च समुच्छ्रयेत्। ततो वृषस्कन्धसमारूढं वरत्रिशूलयुतवामदक्षिणहस्तं त्रिनेत्रं शुद्धस्फटिकवर्णमीशानं ध्यात्वा वृषस्कन्धसमारूढं शूलहस्तं त्रिलोचनम्। आवाहयामि यज्ञेऽस्मिन् पूजेयं प्रतिगृह्यतामिति प्रार्थ्य सर्वाधिपो महादेव ईशान शुक्ल ईश्वरः। शूलपाणिर्विरूपाक्षस्तस्मै नित्यं नमो नम इति नत्वा साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय ईशानायैतं माषभक्तबलिं समर्पयामीति कलसस्याग्रे बलिं दद्यात्।

अथाचम्येशानपूर्वयोर्नैर्ऋतपश्चिमयोर्वा मध्ये अध उद्दिश्य कलसस्थापनं विनैव ओं एह्येहि पातालधरामरेश नागाङ्गनाकिन्नरगीयमान। यक्षोरगेन्द्रामरलोकसंघैरनन्त रक्षाध्वरमस्मदीयम् इति पठित्वा भो अनन्त इहागच्छेत्यादिनावाह्य आयं गौरित्यादिना (२३ पृ० २० पं०) साङ्गं सपरिवरं सायुधं सशक्तिकमनन्तमभ्यर्च्य तेनैव मन्त्रेण श्वेतां पताकां श्वेतं ध्वजञ्च समुच्छ्रयेत्। ततोऽनन्तशयनासीनं फणासहस्रमण्डितपद्मशङ्खधरोर्द्ध्वाधरदक्षिणवामकरं चक्रगदाधरोर्द्ध्वाधरवामकरद्वयं नीलवर्णमनन्तं ध्यात्वा ओं योऽसावनन्तरूपेण ब्रह्माण्डं सचराचरम्। पुष्पवद्धारयन्मूर्द्ध्नि तस्मै नित्यं

नमो नम इति नत्वा साङ्गाय सपरिवाराय सायुधाय सशक्ति- कायानन्तायैतं माषभक्तबलिं समर्पयामीति बलिं दद्यात्।

अथाचम्य नैर्ऋतपश्चिमयोरीशानपूर्वयोर्वा मध्ये कलस- स्थापनं विनैवोर्द्ध्वमुद्दिश्य ओं एह्येहि सर्वाधिपते सुरेन्द्र लोकेन सार्द्धं पितृदेवताभिः। सर्वस्य धातास्यमितप्रभावो विशाध्वरं नः सततं शिवाय इति पठित्वा भो ब्रह्मन् इहागच्छेत्यादिना साङ्गं सपरिवारं सायुधं सशक्तिकं ब्रह्माणमावाह्य ब्रह्म जज्ञान- मित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो ब्रह्मा देवता ब्रह्मपूजने वि०। ओं ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः। सबुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमस- तश्च विवः (य० १३ अ० ३) इत्यनेनाभ्यर्च्य तेनैव रक्तां पताकां रक्तं ध्वजञ्च समुच्छ्रयेत्। ततश्चतुर्मुखं हंसारूढमक्ष- मालाकुशमुष्टिधरोर्द्ध्वाधरदक्षिणकरद्वयं स्रुक्स्रुवधरवामकरद्वयं श्मश्रुलं जटिलं लम्बोदरं रक्तवर्णं ब्रह्माणं ध्यात्वा ओं पद्मयोनि- श्चतुर्मूर्त्तिर्वेदावासः पितामहः। यज्ञाध्यक्षश्चतुर्वक्त्रस्तस्मै नित्यं नमो नम इति नत्वा साङ्गाय सपरिवाराय सशक्तिकाय सायुधाय ब्रह्मणे एतं माषभक्तबलिं समर्पयामीति बलिं दद्यात्।

तत आचम्य मण्डपमध्येऽत्युच्चदण्डं दशहस्तदीर्घं त्रिहस्त- विस्तारं पञ्चहस्तदीर्घं हस्तविस्तारं वा महाध्वजं विचित्रवर्णं चामरकिङ्किण्यादियुतम् इन्द्रस्य वृष्ण इत्यस्याप्रतिरथ ऋषि- स्त्रिष्टुप् छन्दः इन्द्रो देवता मण्डपमध्ये ध्वजसमुच्छ्रयणे वि०। इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्द्ध उग्रम्। महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् (य० १७ अ० ४१) इति मन्त्रेणोत्त[illegible] जज्ञानमिति प्रागु- क्तेन ब्रह्माणं पूजयेत्। इति ध्वज[illegible]स्कारः।

वंशेषु किन्नरेभ्यो नमः पृष्ठे ओं पन्नगेभ्यो नमः इत्यर्चयेत्। ततो मण्डपात् पूर्वस्यां दिशि किञ्चिदुपलिप्तभूभागे उपविश्य ओं त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च। ब्रह्म-विष्णुशिवैः साई रक्षां कुर्वन्तु तानि मे। देवदानवगन्धर्वा यक्षराक्षसपन्नगाः। ऋषयो मानवा गावो देवमातर एव च। सर्वे ममाध्वरे रक्षां कुर्वन्तु च मुदान्विताः। ब्रह्मा विष्णुश्च रुद्रश्च क्षेत्रपालो गणैः सह। रक्षन्तु मण्डपं सर्वे घ्नन्तु रक्षांसि सर्वत इति पठित्वा ओं त्रैलोक्यस्थेभ्यः स्थावरेभ्यो भूतेभ्यो नमः त्रैलोक्यस्थेभ्यश्चरेभ्यो भूतेभ्यो नमः ओं विष्णवे नमः ओं शिवाय नमः ओं देवेभ्यो नमः ओं दानवेभ्यो नमः ओं गन्धर्वेभ्यो नमः ओं यक्षेभ्यो नमः ओं राक्षसेभ्यो नमः ओं पन्नगेभ्यो नमः ओं ऋषिभ्यो नमः ओं मानवेभ्यो नमः ओं गोभ्यो नमः ओं देवमातृभ्यो नमः इति प्रत्येकं संपूज्य पूर्वमन्त्रैरेव तस्यां भूमावेतेभ्य एव गन्धपुष्पादियुतं माषभक्त-बलिं दद्यात् इति मण्डपपूजा।

अथ यजमानः प्रक्षालितपादपाणिः स्वाचान्तः सर्वैराचार्यादिभिरृत्विग्भिः सहितः प्राग्द्वारेण मण्डपान्तः प्रविश्य। अग्न्यायतनाद्दक्षिणतो ब्रह्मासनस्थानात् पश्चाद्यजमानः स्वासने उदङ्मुख उपविशेत्। ततो जापकान् जपत द्वारपालान् पठध्वमिति शान्तिसूक्तानां जपे पाठे च नियोजयेत्। ते च कर्मसमाप्तिपर्य्यन्तं स्वस्वशाखीयसूक्तादिजपपाठौ कुर्य्युः। शान्तिसूक्तादीन्यग्रे निर्देक्ष्यन्ते। आचार्य्यस्तु कुण्डपार्श्वमेत्य उपविश्याचम्य प्राणानायम्य देशकालवाचारात् सङ्कीर्त्यामुक-कर्मण्यग्निप्रतिष्ठां करिष्ये तदङ्गतया सम्मार्जनमेखलायोनि-देवतास्थापनपूजनादिकं करिष्ये इति च संकल्पं कुर्य्यात्। अथाग्न्यायतनं संस्पृश्य कुशोदकेनाभ्युक्षेत्। तत इदं विष्णु-

रित्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दो विष्णुर्देवता विष्णुपूजने वि०। ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढ़मस्य पांसुरे (य० ५ अ० १५) इति मन्त्रेणोपरिगतमेखलायां श्वेतवर्णालङ्कतायां विष्णुमावाह्यार्चयेत्। ब्रह्म जज्ञानमित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो ब्रह्मा देवता ब्रह्मपूजने वि०। ओं ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः। सबुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः (य० १३ अ० ३) इत्यनेन मध्यमेखलायां रक्तवर्णालङ्कतायां ब्रह्माणमावाह्यार्चयेत्। इमा रुद्रायेत्यस्य कुत्सऋषिर्जगती-छन्दो रुद्रो देवता रुद्रपूजने वि०। ओं इमा रुद्राय तवसे कपर्दिने चयद्वीराय प्रभरामहे मतीः। यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् (य० १६ अ० ४८) इत्यनेनाधोमेखलायां कृष्णवर्णयुतायां रुद्रमावाह्यार्चयेत्। अम्बे अम्बिके इत्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दो दुर्गा देवता दुर्गा-पूजने वि०। ओं अम्बे अम्बिके अम्बालिके न मानयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पिलवासिनीम् (य० २३ अ० १८) इत्यनेन रक्तवर्णालङ्कतायां गौरीमावाह्यार्चयेत्। अथ गृह्योक्तविधिना कुण्डे पञ्चभूसंस्कारान् विधायाग्निं स्थाप-येत्। तत्रैवमाचारः। लौकिकाग्नौ कांस्यादिपात्रेण मृण्मयेन वानीय कुण्डाद्बहिराग्नेय्यां स्थापिते आचार्य्यस्तमग्निं गृहीत्वाग्नेयकोणमार्गेण कुण्डमध्ये नीत्वा अग्निं दूतमित्यस्य विरूपाक्ष ऋषिर्गायत्री छन्दोऽग्निर्देवता अग्न्युपस्थाने वि०। ओं अग्निं दूतं पुरोदधे हव्यवाहमुपब्रुवे। देवाँ आसादयादिह (य० २२ अ० १७) इत्यनेन तत्तत्कर्मानुसारेण शतमङ्गलादि-नामानमग्निमुपसमादधे इत्यग्निं कुण्डे स्वात्माभिमुखमुप-समादध्यात्। चत्वारि शृङ्गा इत्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप्

छन्दोऽग्निर्देवताऽग्न्यावाहने वि०। ओं चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्त्याँ आविवेश (य० १७ अ० ९१) इत्यनेन अग्निमावाह्य। मनोजूतिरित्यस्याङ्गिरसो बृहस्पति-र्ऋषिश्छन्दोऽभावः विश्वेदेवा देवताः प्राणप्रतिष्ठायां वि०। ओं मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोतु। अरिष्टं यज्ञं समिमं दधातु विश्वे देवा स इह मादयन्तामों प्रतिष्ठ (य० २ अ० १३) इत्यनेनाग्निं प्रतिष्ठाप्य ध्यायेत्। यथा रुद्रतेजःसमुद्भूतं द्विमूर्द्धानं द्विनासिकम्। षण्नेत्रं च चतुः-श्रोत्रं त्रिपादं सप्तहस्तकम्। याम्यभागे चतुर्हस्तं सव्यभागे त्रिहस्तकम्। स्रुवं स्रुचञ्च शक्तिं च अक्षमालां च दक्षिणे। तोमरं व्यजनं चैव घृतपात्रन्तु वामके। बिभ्रतं सप्तभिर्हस्तै-र्द्विमुखं सप्तजिह्वकम्। दक्षिणञ्च चतुर्जिह्वं त्रिजिह्वमुत्तरं मुखम्। द्वादशकोटिमूर्त्त्याख्यं द्विपञ्चाशत्कलायुतम्। स्वाहा-स्वधावषट्कारैरङ्कितं मेषवाहनम्। रक्तमाल्याम्बरधरं रक्त-पद्मासनस्थितम्। रौद्रं तु वह्निनामानं वह्निमावाहयाम्यहम्। त्वं मुखं सर्वदेवानां सप्तार्चिरमितद्युते। आगच्छ भगवन्देव यज्ञेऽस्मिन् सन्निधौ भवेति। ततो ग्रहवेद्यां सर्वतोभद्रं लिखेत्। तल्लेखनप्रकारस्तु हेमाद्रौ स्कान्दे। प्रागुदीच्यां गता रेखाः कुर्य्यादेकोनविंशतिः खण्डेन्दुस्त्रिपात्कोणे शृङ्खला पञ्चभिः पदैः। एकादशपदा वल्ली भद्रन्तु नवभिः पदैः। चतुर्विंशपदा वापी परिधिर्विंशत्या पदैः। मध्ये षोड़शभिः कोष्ठैः पद्ममष्ट-दलं स्मृतम्। श्वेतेन्दुः शृङ्खला कृष्णा वल्लीं नीलेन पूरयेत्। भद्रारुणा सिता वापी परिधिः पीतवर्णकः। वाह्यान्तरदलैः श्वेता कर्णिका पीतवर्णिका। परिध्यावेष्टितं पद्मं वाह्ये सत्वरजस्तमः। तन्मध्ये स्थापयेद्देवान् ब्रह्माद्यांश्च सुरासुरा-

निति। एवं मण्डलं विलिख्य यजमानान्वित आचार्य्यः सर्वतोभद्रे मण्डलदेवताः स्थापयेद्यथा। अद्येत्यादि देशकालौ स्मृत्वा मण्डलदेवतास्थापनं करिष्य इति संकल्पं कृत्वा अक्षत-पुञ्जेषु स्थापयेत् ब्रह्म जज्ञानमित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दः ब्रह्मा देवता मण्डले ब्रह्मस्थापने पूजने च वि०। ओं ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः। सबुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः। (य० १३ अ० ३) इति मन्त्रान्ते ब्रह्माणमावा-हयामि स्थापयामीति ब्रह्माणं स्थापयेत् एवं सर्वत्र। उदीचीमारभ्य वायव्यकोणपर्य्यन्तं कुवेरादीन् वायुपर्य्य-न्तानष्टौ लोकपालान् स्थापयेत्। वयं सोमित्यस्य बन्धुर्ऋषिः गायत्री छन्दः सोमो देवता सोमस्थापने पूजने च वि०। ओं वयं सोम व्रते तव मनस्तनूषु विभ्रतः। प्रजावन्तः सचेमहि (य० ३ अ० ५६) इत्यनेन सोममुदीच्याम्। तमीशान-मित्यस्य गौतम ऋषिः जगती छन्दः ईशानो देवता ईशान-स्थापने पूजने च वि०। ओं तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये (य० २५, अ० १८) इत्यनेन ऐशान्यामीशानम्। त्रातारमित्यस्य गर्ग ऋषिः त्रिष्टुप् छन्दः इन्द्रो देवता इन्द्रस्थापने पूजने च वि०। ओं त्रातारमिन्द्र-मवितारमिन्द्रं हवेहवे सुहवं शूरमिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः (य० २० अ० ५०) इत्यनेन प्राच्यामिन्द्रम्। त्वं नो अग्ने तव देवेत्यस्य हिरण्य-स्तूप आङ्गिरस ऋषिः जगती छन्दः अग्निर्देवता अग्निस्थापने पूजने च वि०। ओं त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य। त्राता तोकस्य तनये गवामस्यनिमिषं रक्षमाण-

स्तव व्रते (य० ३४ अ० १२) इत्यनेनाग्नेय्यामग्निम्। सुगं नु पन्थामित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप् छन्दः यमो देवता यमस्थापने पूजने च वि०। ओं सुगं नु पन्थां प्रदिशं न एहि ज्योतिष्मद्ध्येह्यजरं न आयुः। अपैतु मृत्युरमृतं न आगात् वैवस्वतो नो अभयं कृणोतु नः। दक्षिणस्यां यमम्। असुन्वन्तमित्यस्य प्रजापतिर्ऋषिः त्रिष्टुप् छन्दः निर्ऋतिर्देवता निर्ऋतिस्थापने पूजने च वि०। ओं असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य। अन्यमस्मदिच्छ सा त इत्यानमो देवि निर्ऋते तुभ्यमस्तु (य० १२, अ० ६२) इत्यनेन नैर्ऋत्यां निर्ऋतिम्। तत्त्वा यामीत्यस्य शुनःशेफ ऋषिस्त्रिष्टुप् छन्दः वरुणो देवता वरुणस्थापने पूजने च वि०। ओं तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः (य० १८ अ० ४९) इत्यनेन प्रतीच्यां वरुणम्। आनो नियुद्भिरित्यस्य वसिष्ठ ऋषिस्त्रिष्टुप् छन्दः वायुर्देवता वायुस्थापने पूजने च वि०। ओं आनो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरुपयाहि यज्ञम्। वायो अस्मिन् सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः (य० २७ अ० २८) इति वायव्यां वायुम्। सुगावो देवा इत्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दः वसवो देवता वसुस्थापने पूजने च वि०। ओं सुगा वो देवाः सदना अकर्म य आजग्मेदं सवनं जुषाणाः। भरमाणा वहमाना हवींष्यस्मे धत्त वसवो वसूनि स्वाहा (य० ८ अ० १८) इति मन्त्रेण वायुसोममध्ये अष्टौ वसून्। रुद्राः संसृज्येत्यस्य प्रजापतिर्ऋषिः अनुष्टुप् छन्दः रुद्रो देवता रुद्रस्थापने पूजने च वि०। ओं रुद्राः संसृज्य पृथिवीं बृहज्ज्योतिः समीधिरे। तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते

(य० ११ अ० ५४) इत्यनेन सोमेशानमध्ये एकादश रुद्रान्। यज्ञो देवानामित्यस्य कुत्स ऋषिः यजुरन्ता त्रिष्टुप् छन्दः आदित्या देवता द्वादशादित्यस्थापने पूजने च वि०। ओं यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृड़यन्तः। आ वोऽर्वाचो सुमतिर्वव्रत्यादंहोश्चिद्या वरिवो वित्तरासत्। आदित्येभ्यस्त्वा (य० ८ अ० ४) इत्यनेन ईशानेन्द्रयोर्मध्ये द्वादशादित्यान्। या वां कशेत्यस्य मेधातिथिर्ऋषिः यजुरन्ता गायत्री छन्दः अश्विनौ देवते आश्विनयोः स्थापने पूजने च वि०। ओं या वां कशा मधुमत्यश्विना सुनृतावती। तया यज्ञं मिमिक्षतम्। उपयामगृहीतोऽस्यश्विभ्यां त्वा एष ते योनिर्माध्वीभ्यां त्वा। (य० ७ अ० ११) इतीन्द्राग्निमध्येऽश्विनौ। ओमासश्चर्षणीधृत इत्यस्य मधुच्छन्दा ऋषिः यजुरन्ता गायत्री छन्दः विश्वेदेवा देवता विश्वदेवस्थापने पूजने च वि०। ओं ओमासश्चर्षणीधृतो विश्वे देवास आगत। दाश्वांसो दाशुषः सुतम्। उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यः। एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः (य० ७ अ० ३३) इत्यनेन अग्नियममध्ये सपत्नीकान् विश्वदेवान्। अभित्यं देवमित्यस्य प्रजापतिर्ऋषिः अष्टिश्छन्दः सप्त यक्षा देवता यक्षस्थापने पूजने च वि०। ओं अभि त्यं देवं सवितारमोण्योः कविक्रतुमर्चामि सत्यसवं रत्नधामभि प्रियं मतिं कविम्। ऊर्द्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः (य० ४ अ० २५) इति मन्त्रेण यमनिर्ऋतिमध्ये सप्त यक्षान्। नमोऽस्तु सर्पेभ्य इत्यस्य प्रजापतिर्ऋषिः अनुष्टुप् छन्दः सर्पा देवताः सर्पस्थापने पूजने च वि०। ओं नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः। (य० १३ अ०६)

इत्यनेन निर्ऋतिवरुणमध्ये भूतनागान्। ऋताषाडित्यस्य देवा ऋषयश्छन्दोऽभावः गन्धर्वाप्सरसौ देवता गन्धर्वाप्सरसः स्थापने पूजने च वि०। ओं ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसो मुदो नाम। स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ताभ्यः स्वाहा (य० १८ अ०, ३८) इत्यनेन वरुणवायुमध्ये गन्धर्वाप्सरसः। यदक्रन्द इत्यस्य जमदग्निदीर्घतमावृषी त्रिष्टुप् छन्दः स्कन्दो देवता स्कन्दस्थापने पूजने च वि०। ओं यदक्रन्दः प्रथमं जायमान उद्यन् समुद्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् (य० २९ अ०, १२) इत्यनेन ब्रह्मसोममध्ये स्कन्दम्। ततस्तत्रैव नाममन्त्रेण नन्दिनमीश्वरं शूलं महाकालञ्च। अदितिर्द्यौरित्यस्य गौतम ऋषिस्त्रिष्टुप् छन्दः विश्वे देवा देवता दक्षादिसप्तकस्थापने पूजने च वि०। ओं अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् (य० २५ अ०, २३) इत्यनेन ब्रह्मेशानयोर्मध्ये दक्षादीन् सप्त। अम्बे अम्बिके इत्यस्य प्रजापतिर्ऋषिः अनुष्टुप् छन्दः दुर्गा देवता दुर्गास्थापने पूजने च वि०। ओं अम्बे अम्बिके अम्बालिके न मानयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पिलवासिनीम् (य० २३ अ०, १८) इत्यनेन ब्रह्मेन्द्रमध्ये दुर्गाम्। इदं विष्णुरित्यस्य मेधातिथिर्ऋषिः गायत्री छन्दः विष्णुर्देवता विष्णुस्थापने पूजने च वि०। ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे (य० ५ अ०, १५) इत्यनेन तत्रैव विष्णुम्। पितृभ्य इत्यस्य प्रजापत्यश्विसरस्वत्य ऋषयः सर्वाणि यजूंषि पितरो देवता स्वधास्थापने पूजने च वि०। ओं पितृभ्यः स्वधायिभ्यः स्वधा नमः। पितामहेभ्यः स्वधायिभ्यः स्वधा नमः। प्रपितामहेभ्यः स्वधायिभ्यः स्वधा

नमः। अक्षन् पितरः। अमीमदन्त पितरः। अतीतृपन्त पितरः। पितरः शुन्धध्वम् ( य० १९ अ०, ३६ ) इत्येतैर्यजुर्भिः ब्रह्माग्नि-मध्ये स्वधाम्। परं मृत्यवित्यस्य संकसुक ऋषिस्त्रिष्टुप् छन्दः मृत्युर्देवता मृत्युरोगस्थापने पूजने च वि०। ओं परं मृत्यो अनुपरेहि पन्थां यस्ते अन्य इतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् (य० ३५ अ०, ७) इत्यनेन ब्रह्मयममध्ये मृत्युरोगान्। गणानां त्वेत्यस्य प्रजापति-ऋषिः त्रीणि यजूंषि गणपतिर्देवता गणपतिस्थापने पूजने च वि०। ओं गणानां त्वा गणपतिं हवामहे वसो मम आहमजानि गर्भधमा त्वमजासि गर्भधम्। प्रियाणां त्वा प्रियपतिं हवामहे वसो मम आह०। निधीनां त्वा निधिपतिं हवामहे वसो मम आह०। (य० २३ अ०, १९) इति त्रिभि-र्यजुर्भिः ब्रह्मनिऋतिमध्ये गणपतिम्। शन्नो देवीरित्यस्य दध्यङ्ङाथर्वण ऋषिः गायत्री छन्दः आपो देवता अपां स्थापने पूजने च वि०। ओं शन्नो देवीरभिष्टय आपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः ( य० ३६ अ०, १२ ) इत्यनेन ब्रह्मवरुण-मध्ये अपः। मरुतो यस्येत्यस्य गौतम ऋषिर्गायत्री छन्दः मरुतो देवता मरुतां स्थापने पूजने च वि०। ओं मरुतो यस्य हि क्षये पाथा दिवो विमहसः। स सुगोपातमः जनः (य० ८ अ०, ३१) इत्यनेन ब्रह्मवायुमध्ये मरुतः। स्योना पृथिवीत्यस्य मेधातिथिर्ऋषिः गायत्री छन्दः पृथिवी देवता पृथिवीस्थापने पूजने च वि०। ओं स्योना पृथिवि नो भवान्तृक्षरा निवे-शनी। यच्छा नः शर्म सप्रथाः (य० ३५ अ०, २१) इत्यनेन ब्रह्मणः पादमूले पृथिवीम्। पञ्च नद्य इत्यस्य गृत्समद ऋषि-रनुष्टुप् छन्दः सरस्वती नदी देवता गङ्गादिनदीस्थापने पूजने च वि०। ओं पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः।

सरस्वती तु पञ्चधा सो देशेऽभवत् सरित्। (य० ३४ अ०, ११) इत्यनेन तत्रैव गङ्गादिनदीः। इमं म इत्यस्य शुनःशेफ-ऋषिर्गायत्री छन्दः वरुणो देवता सप्तसागरस्थापने पूजने च वि०। ओं इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वाम-वस्युराचके (य० २१ अ०, १) इत्यनेन सप्त सागरान्। तदुपरि नाम्ना मेरुम्। वाह्ये सोमादिसमीपक्रमेण आयुधानि गदां त्रिशूलं वज्रं शक्तिं दण्डं खड्गं पाशमङ्कुशम्। तद्वाह्ये उत्तरा-दितः गोतमं भरद्वाजं विश्वामित्रं कश्यपं जमदग्निं वसिष्ठ-मत्रिमरुन्धतीम्। तद्वाह्ये प्रागादिक्रमेणैन्द्रीं कौमारीं ब्राह्मीं वाराहीं चामुण्डां वैष्णवीं माहेश्वरीं वैनायकीमित्यष्टौ शक्तीः प्रतिष्ठाप्य तेषां मनोजूतिरित्यादिना प्राणान् प्रतिष्ठाप्य प्रत्येकं यथाशक्ति पूजयेत्। ततस्तस्यामेव वेद्यामास्तृते वस्त्रे विरचि-ताष्टदलपद्मे लिखितवक्ष्यमाणमण्डलेष्वादित्यादिग्रहादीन् स्थापयन्ति केचित्। अन्ये तु सर्वतोभद्रनिर्माणं मण्डलदेवता-स्थापनं तत्पूजनं च विनैव ग्रहवेद्यामास्तृते वस्त्रे विरचिताष्ट-दलपद्मे लिखितवक्ष्यमाणमण्डलेष्वादित्यादिग्रहादीन् स्थाप-यन्ति। वाजसनेयिनामाचारोऽप्येवम्। इति सर्वतोभद्रमण्ड-लदेवतास्थापनपूजनादि।

अथादित्यादीनां ग्रहादीनां स्थापनं देशकालौ सङ्कीर्त्या-मुककर्मण्यादित्यादिग्रहादीनां स्थापनमर्चनञ्च करिष्य इत्या-चारात् संकल्पं विधाय स्थापयेत्। तद्यथा। ओं दिवाकरं सहस्रांशुं सर्वलोकनमस्कृतम्। लोकनाथं विश्वनाथं सूर्य्य-मावाहयाम्यहम्। आवाहये तं द्विभुजं दिनेशं सप्ताश्ववाहं द्युमणिं ग्रहेशम्। सिन्दूरवर्णप्रतिमावभासं भजामि सूर्य्यं कुलवृद्धिहेतोः। पद्महस्त महाबाहो सप्तश्वेताश्ववाहन। आगच्छ भगवन् भानो यज्ञेऽस्मिन् सन्निधिं कुरु। उदयन्तं

महातेजस्तेजस्विनभयङ्करम्। सर्वदुःखहरं भक्त्या सूर्य्यमावाह्याम्यहम्। भो सूर्य्य ग्रहाध्यक्ष कलिङ्गविषयोद्भव। रक्त काश्यपगोत्रेय द्विभुज पद्मलाञ्छन। सप्ताश्ववाहनागच्छ पद्म-मध्ये वरप्रद इति पठित्वा। प्रणवस्य ब्रह्मा ऋषिः दैवी गायत्री छन्दः परमात्माग्निर्देवता आवाहने वि०। महाव्याहृतीनां क्रमेण विश्वामित्रजमदग्निभरद्वाजा ऋषयः सर्वासां प्रजापतिर्वा ऋषिः यथाक्रमं दैवी गायत्री दैव्युष्णिक् दैवी गायत्री छन्दांसि। अग्निवायुसूर्य्याः देवताः सूर्य्याद्यावाहने वि०। ओं भूर्भुवः स्वः कलिङ्गदेशोद्भव काश्यपसगोत्र रक्तवर्ण सूर्य्य इहागच्छेत्यावाह्य। आ कृष्णेनेत्यस्य हिरण्यस्तूप आङ्गिरस ऋषिस्त्रिष्टुप् छन्दः सविता देवता सूर्य्यस्थापने वि०। ओं आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च। हिरण्य-येन सविता रथेना देवो याति भुवनानि पश्यन् (य० ३३ अ०, ४३) इति मन्त्रान्ते सूर्य्य इह तिष्ठेति ग्रहपीठमध्ये विरचिता-ष्टदलपद्मकर्णिकायां द्वादशाङ्गुले वर्तुले रक्तमण्डले प्राङ्मुखं सूर्य्यं रक्तपुष्पाक्षतैः स्थापयेत्। ततो मनोजूतिरित्यादिना (२२ पृ०, १७ पं०) प्राणप्रतिष्ठां कुर्य्यादेवं चन्द्रादीना-मपि।

ओं हिमरश्मिं निशानाथं तारकाभिः समन्वितम्। ओष-धीनां तु राजानं सोममावाहयाम्यहम्। भो चन्द्र जगत्प्राण यमुनाविषयोद्भव। सुश्वेतात्रेयगोत्रेय गदापाणे वरप्रद। दशा-श्ववाहनायाहि उमया स्थानमाविश। हुताशनदले देव मन्त्रे-णान्दैवतेन च। ओं भूर्भुवस्स्वः यमुनातीरोद्भव आत्रेयसगोत्र शुक्लवर्ण सोम इहागच्छेत्यावाह्य इमं देवा इत्यस्य वरुण ऋषिः अत्यष्टिश्छन्दः सोमो देवता सोमस्थापने वि०। ओं इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्या-

यैन्द्रस्येन्द्रियाय। इममसुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजा (य० ९ अ०, ४०) इति मन्त्रान्ते सोम इह तिष्ठेत्याग्नेयदले चतुरस्रे श्वेते चतुर्विंशाङ्गुलमण्डले सूर्य्याभिमुखं सोमं श्वेतपुष्पाक्षतैः स्थापयेत्।

ओं धरणीगर्भसंभूतं लोहिताङ्गं सुवर्चसम्। कुमारं क्रूरकर्माणं भौममावाहयाम्यहम्। भूमिपुत्रो महाबाहुस्तेजस्वी यो भयङ्करः। ऋषिभिः स्तूयमानं तं भौममावाहयाम्यहम्। उज्जयिन्यां समुत्पन्नागच्छ भौम चतुर्भुज। भरद्वाजकुले जात शूलशक्तिगदाधर। वरदो मेषमारूढ़ः स्कन्दइव तड़ित्प्रभ। स्येना पृथिविमन्त्रेण दले याम्ये प्रतिष्ठित। ओं भूर्भुवः स्वः अवन्तिदेशोद्भव भारद्वाजसगोत्र रक्तवर्ण भौम इहागच्छेत्यावाह्य अग्निर्मूर्द्धेत्यस्य विरूपाक्ष ऋषिर्गायत्री छन्दः अङ्गारको देवता अङ्गारकस्थापने वि०। ओं अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वति (य० ३ अ०, १२) इति मन्त्रान्ते भौम इह तिष्ठेति दक्षिणदले त्रिकोणे त्र्यङ्गुले रक्तमण्डले सूर्य्याभिमुखं भौमं रक्तपुष्पाक्षतैः स्थापयेत्।

ओं बुधं बुद्धिप्रदातारं सोमवंशविवर्द्धनम्। यजमानहितार्थाय बुधमावाहयाम्यहम्। अहो चन्द्रसुत श्रीमान् मगधेषु समुद्भव। अत्रिगोत्र चतुर्बाहो खड्गखेटकधारक। गदावरद सिंहस्थ सुवर्णाभ समाविश। विष्णुमन्त्रोशपत्रे च इदं विष्णुप्रपूजित। ओं भूर्भुवः स्वः मगधदेशोद्भव आत्रेयसगोत्र पीतवर्ण बुध इहागच्छेत्यावाह्य उद्बुध्यस्वाग्ने इत्यस्य परमेष्ठी ऋषिस्त्रिष्टुप् छन्दः बुधो देवता बुधस्थापने वि०। ओं उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्त्ते संसृजेथामयञ्च। अस्मिन् सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत (य० १५ अ०, ५४) इति मन्त्रान्ते बुध इह तिष्ठेति ईशानदले बाणाकृतौ पाते

चतुरङ्गुलमण्डले सूर्य्याभिमुखं बुधं पीतपुष्पाक्षतैः स्थापयेत् ।

ओं बृहस्पतेऽङ्गिरःपुत्रो देवानां यो गुरुः स्मृतः । तमिन्द्रमन्त्रिणं भक्त्या गुरुमावाहयाम्यहम् । आवाहयामि देवेशं गुरुं त्रिदशवन्दितम् । हेमगोरोचनावर्णं पीनस्कन्धं सुवक्षसम् । शङ्खञ्च कलसञ्चैव पाणिभ्यामिह बिभ्रतम् । बृहस्पते समागच्छ यज्ञेऽस्मिन् सन्निधिं कुरु । मेरुमूर्ध्नि गतादित्यदेवतानां पुरोहितम् । ब्राह्मणानां हितार्थाय गुरुमावाहयाम्यहम् । अहो वाचस्पते पीत संजात सिन्धुमण्डले । एह्याङ्गिरसगोत्रेय हयारूढ़ चतुर्भुज । दण्डाक्षसूत्रवरदकमण्डलुकर प्रभो मन्त्रेणैन्द्रेण संपूज्य विधिमनुत्तरे दले । ओं भूर्भुवः स्वः सिन्धुदेशोद्भव आङ्गिरससगोत्र पीतवर्ण गुरो इहागच्छेत्यावाह्य बृहस्पते अतीत्यस्य गृत्समद ऋषिस्त्रिष्टुप् छन्दः बृहस्पतिर्देवता बृहस्पतिस्थापने वि० । ओं बृहस्पते अति यदर्य्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छ्वस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ( य० २६ अ०, ३ ) इति मन्त्रान्ते गुरो इह तिष्ठेत्युत्तरदले दीर्घचतुरस्रे पीतवर्णे षड़ङ्गुले सूर्य्याभिमुखं बृहस्पतिं पीतपुष्पाक्षतैः स्थापयेत् ।

ओं प्रविष्टो जठरे शम्भोर्निःसृतः पुनरेव यः । तं सुरारिगुरुं भक्त्या शुक्रमावाहयाम्यहम् । तुल्यतेजःप्रभाशूरः दानवानां पुरोहितः । तेजोहा सर्वशत्रूणां शुक्रमावाहयाम्यहम् । भो भो भोजकटेजात शुक्र श्वेताश्ववाहन । समागच्छ चतुर्बाहो भृगुगोत्रविभूषण । परिव्राजावलोहस्त कमण्डलुधर प्रभो । शक्रवन् पूर्वपत्रेऽत्र शचीदैवेन पूजित । ओं भूर्भुवः स्वः भोजकटदेशोद्भव भार्गवसगोत्र शुक्लवर्ण शुक्र इहागच्छेत्यावाह्य अन्नात् परिस्रुत इत्यस्य अश्विसरस्वतीन्द्रा ऋषयः अतिजगती छन्द

शुक्रो देवता शुक्रस्थापने वि०। ओं अन्नात् परिस्रुतो रसं ब्रह्मणा व्यपिवत् क्षत्रं पयः सोमं प्रजापतिः। ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु (य० १९ अ०, ७५) इति मन्त्रान्ते शुक्र इह तिष्ठेति पूर्वदले पञ्चास्रे नवाङ्गुले सूर्य्याभिमुखं शुक्रं शुक्लपुष्पाक्षतैः स्थापयेत्।

ओं धर्मराजानुजं देवं भिन्नाञ्जनसमप्रभम्। छायामार्त्तण्ड-सम्भूतं शनिमावाहयाम्यहम्। कृष्णाङ्गः कृष्णवर्णस्तु कृष्णोऽति-बलवांस्तथा। शनैश्चर निरीक्षेश शनिमावाहयाम्यहम्। अहो सौराष्ट्रसंजात छायापुत्र चतुर्भुज। कृष्णवर्णार्कगोत्रेय बाणहस्त धनुर्धर। त्रिशूली स समागच्छ वरदो गृध्रवाहन प्राजापत्येन संपूज्य यमवन् पश्चिमे दले। ओं भूर्भुवः स्वः सौराष्ट्रदेशोद्भव काश्यपसगोत्र कृष्णवर्ण शनैश्चर इहागच्छेत्यावाह्य शन्नो देवी-रित्यस्य दध्यङ्ङाथर्वण ऋषिर्गायत्री छन्दः शनिर्देवता शनै-श्चरस्थापने वि०। ओं शन्नो देवीरभिष्टय आपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः (य० ३६ अ०, १२) इति मन्त्रान्ते शनैश्चर इह तिष्ठेति पश्चिमदले द्व्यङ्गुले कृष्णे खड्गा-कृतिमण्डले प्राङ्मुखं शनिं कृष्णपुष्पाक्षतैः स्थापयेत्।

ओं चक्रेण छिन्नमूर्द्धानं विष्णुना च निरीक्षितम्। सैंहि-केयं महाकायं राहुमावाहयाम्यहम्। विष्णुनाथ शिरश्छित्त्वा ग्रहभावं समाकृतम्। उग्रदंष्ट्रं प्रचण्डञ्च राहुमावाहयाम्यहम्। राहो वर्वरके देशे संजात कायवर्ज्जित। गोत्रपैठीनसैंह्यो हि सिंहारूढ़ वरप्रद। करालवदन श्रेष्ठ कालरूपाञ्जनप्रभ। भौजङ्गमेन मन्त्रेण पूज्य नैर्ऋतपत्रके। ओं भूर्भुवः स्वः वर्वर-पुरोद्भव पैठीनसगोत्र कृष्णवर्ण राहो इहागच्छेत्यावाह्य कया न-श्चित्र इत्यस्य वामदेव ऋषिर्गायत्री छन्दः राहुर्देवता राहुस्थापने

वि०। ओं कया नश्चित्र आभुवदूती सदावृधः सखा। कया शचिष्ठया वृता (य० २७ अ०, ३९) इति मन्त्रान्ते राहो इह तिष्ठेति नैर्ऋत्यदले शूर्पाकारे कृष्णे द्वादशाङ्गुलमण्डले दक्षिणामुखं राहुं कृष्णपुष्पाक्षतैः स्थापयेत्।

ओं अञ्जनाभं महारौद्रं बहुरूपं महाग्रहम्। महाङ्गं क्रूरकर्माणं केतुमावाहयाम्यहम्। केतवो विविधाकारा मलयाद्रिसमुद्भवाः। द्विभुजा जैमिनेर्गोत्रे गदाहस्ता वरप्रदाः। आगच्छन्तु च गृध्रस्थाः शोभने मारुते दले। ब्रह्मजज्ञानं मन्त्रेण चित्रगुप्तवदर्चिताः। ओं भूर्भुवः स्वः अन्तर्वेदिसमुद्भवा जैमिनिसगोत्राश्चित्रवर्णाः केतव इहागच्छतेत्यावाह्य केतुं कृण्वन्नित्यस्य मधुच्छन्दा ऋषिः अनिरुक्ता गायत्री छन्दः केतवो देवता केतुस्थापने वि०। ओं केतुं कृण्वन्नकेतवे पेशो मर्य्या अपेशसे। समुषद्भिरजायथा (य० २९ अ०, ३७) इति मन्त्रान्ते केतव इह तिष्ठतेति वायव्यदले ध्वजाकारे चित्रवर्णे षडङ्गुलमण्डले धूम्रवर्णपुष्पाक्षतैः सूर्य्याभिमुखान् केतून् स्थापयेत्। केतूनां बहुत्वेऽपि पूजादौ बहुत्वविशिष्टमेकमेव देवतात्वमत एकदा पूजनादि। सूर्य्यादयश्च यथोक्तकुसुमाक्षताभावे यथालाभोपपन्नैः स्थाप्याः।

अथाधिदेवताः सर्वाः श्वेतपुष्पाक्षतैः स्थापयेत्। ओं एह्येहि गौरीश पिनाकपाणे शशाङ्कमौले वृषभाधिरूढ। देवाधिदेवेश महेश नित्यं गृहाण पूजां भगवन्नमस्ते। गङ्गाधर महादेव पार्वतीप्राणवल्लभ। आगच्छ भगवन्नीश यज्ञेऽस्मिन् सन्निधिं कुरु। ओं भूर्भुवः स्वः सूर्य्याधिदेव रुद्र इहागच्छेत्यावाह्य त्र्यम्बकमित्यस्य वसिष्ठ ऋषिः अनुष्टुप् छन्दः त्र्यम्बको रुद्रो देवता रुद्रस्थापने विनियोगः। ओं त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्

(य० ३ अ०, ६०) इति मन्त्रान्ते सूर्य्याधिदेव रुद्र इह तिष्ठेति सूर्य्यादुत्तरतो रुद्रं शुक्लपुष्पाक्षतैः स्थापयेत्।

ओं आवाहयाम्यहं देवीं हिमपर्वतसम्भवाम्। देवि त्वं सर्वदा सेव्या यज्ञेऽस्मिन् सन्निधिं कुरु। ओं भूर्भुवः स्वः चन्द्राधिदेवते उमे इहागच्छेत्यावाह्य श्रीश्च त इत्यस्य नारायणपुरुष ऋषिस्त्रिष्टुप् छन्दः उमा देवता उमास्थापने वि०। ओं श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण (य० ३१ अ०, २२) इति मन्त्रान्ते चन्द्राधिदेवते उमे इह तिष्ठेति सोमदक्षिणे उमां शुक्लपुष्पाक्षतैः स्थापयेत्।

ओं आवाहयामि देवेशं षण्मुखं कृत्तिकासुतम्। रुद्रतेजःसमुद्भूतं देवसेनासमन्वितम्। मयूरवाहनं शक्तिपाणिं वै ब्रह्मचारिणम्। आगच्छ भगवन् स्कन्द यज्ञेऽस्मिन् सन्निधिं कुरु। ओं भूर्भुवः स्वः भौमाधिदेव स्कन्द इहागच्छेत्यावाह्य यदक्रन्द इत्यस्य भार्गवो जमदग्निर्दीर्घतमा वा ऋषी त्रिष्टुप् छन्दः स्कन्दो देवता स्कन्दस्थापने वि०। ओं यदक्रन्दः प्रथमं जायमान उद्यन् समुद्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् (य० २९ अ०, १२) इति मन्त्रान्ते भौमाधिदेव स्कन्द इह तिष्ठेति भौमदक्षिणभागे स्कन्दं श्वेतपुष्पाक्षतैः स्थापयेत्।

ओं आवाहये तं गरुड़ोपरिस्थितं रमार्द्धदेहं सुरराजवन्दितम्। कंसान्तकं चक्रगदाब्जहस्तं भजामि देवं वसुदेवसूनुम्। पद्मनाभ हृषीकेश कंसचानूरमर्दन। आगच्छ भगवन् विष्णो यज्ञेऽस्मिन् सन्निधौ भव। ओं भूर्भुवः स्वः बुधाधिदेव विष्णो इहागच्छेत्यावाह्य विष्णोरराटमसीत्यस्य प्रजापतिर्ऋषिश्छन्दोऽभावो विष्णुर्देवता विष्णुस्थापने वि०। ओं विष्णोरराटमसि

विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि वैष्णवमसि विष्णवे त्वा (य० ५ अ०, २१) इति मन्त्रान्ते बुधाधिदेव विष्णो इह तिष्ठेति बुधपश्चिमभागे विष्णुं श्वेतपुष्पाक्षतैः स्थापयेत्।

ओं एह्येहि विप्रेन्द्र पितामहेश हंसाधिरूढ़ त्रिदशैकवन्द्य। रक्तोत्पलाभास कुशाम्बुहस्त गृहाण पूजां भगवन्नमस्ते। आवाहयाम्यहं देवं देवेशञ्च प्रजापतिम्। अनेकव्रतकर्त्तारं सर्वेषाञ्च पितामहम्। विश्वरूपं निराधारं निरालम्बं निरामयम्। आगच्छ देवदेवेश यज्ञेऽस्मिन् सन्निधौ भव। ओं भूर्भुवः स्वर्जीवाधिदेव ब्रह्मन्निहागच्छेत्यावाह्य ओं ब्रह्मन्नित्यस्य प्रजापतिर्ऋषिश्छन्दोऽभावः ब्रह्मा दैवता ब्रह्मस्थापने वि०। ओं आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढ़ानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे-निकामे नः पर्जन्यो वर्षतु फलवत्यो न-ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् (य० २२ अ०, २२) इति मन्त्रान्ते जीवाधिदेव ब्रह्मन्निह तिष्ठेति गुरोः पूर्वभागे ब्रह्माणं श्वेतपुष्पाक्षतैः स्थापयेत्।

ओं एह्येहि वृत्रघ्न गजाधिरूढ़ सहस्रनेत्र त्रिदशैकपूज्य। शचीपते शक्र सुरेश नित्यं गृहाण पूजां भगवन्नमस्ते। शचीपते महाबाहो सर्वाभरणभूषित। आगच्छ भगवन्निन्द्र यज्ञेऽस्मिन् सन्निधिं कुरु। ओं भूर्भुवः स्वः शुक्राधिदेव इन्द्र इहागच्छेत्यावाह्य सजोषा इत्यस्य विश्वामित्र ऋषिस्त्रिष्टुप् छन्द इन्द्रो देवता इन्द्रस्थापने वि०। ओं सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्। जहि शत्रूँ रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः। (य० ७ अ०, ३७)

इति मन्त्रान्ते शुक्राधिदेव इन्द्र इह तिष्ठेति शुक्रपूर्वभागे श्वेतपुष्पाक्षतैरिन्द्रं स्थापयेत् ।

ओं एह्येहि दण्डायुध धर्मराज कालाञ्जनाभास विशालनेत्र । विशालवक्षःस्थल रौद्ररूप गृहाण पूजां भगवन्नमस्ते । चित्रगुप्तादिसंयुक्त दण्डमुद्गरधारक । आगच्छ भगवन् धर्म यज्ञेऽस्मिन् सन्निधिं कुरु । ओं भूर्भुवः स्वः शनैश्चराधिदेव यम इहागच्छेत्यावाह्य यमाय त्वाङ्गिरस्वते इत्यस्य दध्यङ्ङाथर्वण ऋषिस्त्रिष्टुप्छन्दोऽभावो यमो देवता यमस्थापने वि० । ओं यमाय त्वाङ्गिरस्वते पितृमते स्वाहा । स्वाहा घर्माय स्वाहा घर्मः पित्रे (य० ३८ अ०, ९) इति मन्त्रान्ते शनैश्चराधिदेव यम इह तिष्ठेति शनेराग्नेयभागे शुक्लपुष्पाक्षतैर्यमं स्थापयेत् ।

ओं भूर्भुवः स्वः राहोरधिदेव काल इहागच्छेत्यावाह्य कार्षिरसीत्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दः कालो देवता कालस्थापने वि० । ओं कार्षिरसि समुद्रस्य त्वाक्षित्या उन्नयामि । समापो अद्भिरग्मत समोषधीभिरोषधीः (य० ६ अ०, २८) इति मन्त्रान्ते राहोरधिदेव काल इह तिष्ठेति राहोरीशानभागे श्वेतपुष्पाक्षतैः कालं स्थापयेत् ।

ओं भूर्भुवः स्वः केतुग्रहाधिदेव चित्रगुप्त इहागच्छेत्यावाह्य चित्रावसो इत्यस्य ऋषभ ऋषिस्त्रिष्टुप्छन्दोऽभावश्चित्रगुप्तो देवता चित्रगुप्तस्थापने वि० । ओं चित्रावसो स्वस्ति ते पारमशीय इति मन्त्रान्ते केतुग्रहाधिदेव चित्रगुप्त इह तिष्ठेति केतुनिर्ऋतभागे श्वेतपुष्पाक्षतैश्चित्रगुप्तं स्थापयेत् ।

ओं एह्येहि सर्वामर हव्यवाह मुनिप्रवर्य्यैरभितोऽभिजुष्ट । तेजोवता लोकगणेन सार्द्धं ममाध्वरं पाहि कवे नमस्ते । ओं भूर्भुवः स्वः सूर्य्यप्रत्यधिदैवत अग्ने इहागच्छेत्यावाह्य अग्निं दूतमित्यस्य विरूपाक्ष ऋषिर्गायत्री छन्दोऽग्निर्देवता अग्निः

स्थापने वि० । ओं अग्निं दूतं पुरो दधे हव्यवाहमुपब्रुवे । देवाँ आसादयादिह (य० २२ अ०, १७) इति मन्त्रान्ते सूर्य्यप्रत्यधिदैवत अग्ने इह तिष्ठेति सूर्य्यतदधिदेवयोर्मध्ये श्वेतपुष्पाक्षतैरग्निं स्थापयेत् ।

ओं आपस्तोयं तथा प्रोक्तं पुष्करं वारि कथ्यते । आपो हि ष्ठेति मन्त्रेणावाहये सोमपश्चिमे । ओं भूर्भुवः स्वः सोमप्रत्यधिदेवता आपः इहागच्छतेत्यावाह्य आपो हि ष्ठेत्यस्य सिन्धुद्वीप ऋषिर्गायत्री छन्द आपो देवता अपां स्थापने वि० । ओं आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे (य० ११ अ०, ५०) इति मन्त्रान्ते सोमाधिदेवता आप इह तिष्ठतेति श्वेतपुष्पाक्षतैः सोमतदधिदेवतयोर्मध्ये अपः स्थापयेत् ।

ओं आवाहयामि त्वां देवीं धरित्रीं लोकधारिणीम् । जम्बुप्लक्षकुशक्रौञ्चशाकशाल्मलिपुष्करैः । एह्येहि पृथिवि देवि यज्ञेऽस्मिन् सन्निधिं कुरु । ओं भूर्भुवः स्वर्मङ्गलाधिदेवते पृथिवि इहागच्छेत्यावाह्य स्योनेत्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दः पृथिवी देवता पृथिवीस्थापने वि० । ओं स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः । (य० ३५ अ०, २१) इति मन्त्रान्ते मङ्गलाधिदेवते पृथिवि इह तिष्ठेति पृथिवीं श्वेतपुष्पाक्षतैः मङ्गलतदधिदेवयोर्मध्ये स्थापयेत् ।

ओं आवाहये तं गरुडोपरिस्थितं रमार्द्धदेहं सुरराजवन्दितम् । कंसान्तकं चक्रगदाब्जहस्तं भजामि देवं वसुदेवसूनुम् । पद्मनाभ हृषीकेश कंसचानूरमर्दन । आगच्छ भगवन् देव यज्ञेऽस्मिन् सन्निधिं कुरु । ओं भूर्भुवः स्वर्बुधप्रत्यधिदैवत नारायण इहागच्छेत्यावाह्य इदं विष्णुरित्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दो नारायणो देवता नारायणस्थापने वि० ।

ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे (य० ५ अ०, १३) इति मन्त्रान्ते बुधप्रत्यधिदैवत नारायण इह तिष्ठेति नारायणं बुधतदधिदेवयोर्मध्ये श्वेतपुष्पाक्षतैः स्थापयेत्।

ओं एह्येहि वृत्रघ्न गजाधिरूढ़ सहस्रनेत्र।त्रिदशैकवन्द्य। शचीपते शक्र सुरेश नित्यं गृहाण पूजां भगवन्नमस्ते। शचीपते महाबाहो सर्वाभरणभूषित। आगच्छ भगवन्नित्यं यज्ञेऽस्मिन् सन्निधिं कुरु। ओं भूर्भुवः स्वर्जीवप्रत्यधिदैवत इन्द्र इहागच्छेत्यावाह्य इन्द्र आसामित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्द इन्द्रो देवता इन्द्रस्थापने वि०। ओं इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः। देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम्। (य० १७ अ० ४०) इति मन्त्रान्ते जीवप्रत्यधिदैवत इन्द्र इह तिष्ठेति जीवतदधिदेवयोर्मध्ये श्वेतपुष्पाक्षतैरिन्द्रं स्थापयेत्।

ओं भूर्भुवः स्वः शुक्रप्रत्यधिदेवते शचि इहागच्छेत्यावाह्य आदित्यैरास्नासीत्यस्य दध्यङ्ङाथर्वण ऋषिश्छन्दोऽभाव इन्द्राणी देवता इन्द्राणीस्थापने वि०। ओं अदित्यै रास्नासीन्द्राण्या उष्णीषः पूषासि घर्माय दीष्व (य० ३८ अ०, ३) इति मन्त्रान्ते शुक्रप्रत्यधिदेवते शचि इह तिष्ठेति शुक्रतदधिदेवयोर्मध्ये श्वेतपुष्पाक्षतैः शचीं स्थापयेत्।

ओं एह्येहि विप्रेन्द्र धरामरेश हंसाधिरूढ़ त्रिदशैकवन्द्य। रक्तोत्पलाभास कुशाम्बुहस्त गृहाण पूजां भगवन्नमस्ते। आवाहयाम्यहं देवं देवेशञ्च प्रजापतिम्। अनेकव्रतकर्त्तारं सर्वेषाञ्च पितामहम्। विश्वरूपं निराधारं निरालम्बं निरामयम्। आगच्छ देवदेवेश यज्ञेऽस्मिन् सन्निधिं कुरु। ओं भूर्भुवः स्वः शनिप्रत्यधिदैवत प्रजापते इहागच्छेत्यावाह्य प्रजापते इत्यस्य

हिरण्यगर्भ ऋषिस्त्रिष्टुप् छन्दः प्रजापतिर्देवता प्रजापति-स्थापने वि० । ओं प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ( य० १० अ , २० ) इति मन्त्रान्ते शनि-प्रत्यधिदेवत प्रजापते इह तिष्ठेति शनितदधिदेवयोर्मध्ये प्रजा-पतिं तैः स्थापयेत् ।

ओं एह्येहि नागेन्द्र धरामरेश सर्वामरैर्वन्दितपादपद्म । नानाफणामण्डलराजमान गृहाण पूजां भगवन्नमस्ते । आशी-विषसमोपेत नागकन्याविराजित । आगच्छ नागराजेश यज्ञे-ऽस्मिन् सन्निधिं कुरु । ओं भूर्भुवः स्वः राहुप्रत्यधिदेवताः सर्पा इहागच्छन्त्वित्यावाह्य नमोऽस्तु सर्पेभ्य इत्यस्य प्रजापतिऋषि-रनुष्टुप् छन्दः सर्पा देवताः सर्पस्थापने वि० । ओं नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ( य० १३ अ०, ६ ) इति मन्त्रान्ते राहुप्रत्यधि-देवताः सर्पा इह तिष्ठतेति राहुतदधिदेवयोर्मध्ये सर्पान् तैः स्थापयेत् । ते च सर्पाः अनन्तो वासुकिश्चैव तक्षकश्च तृती-यकः । कर्कोटकश्च पद्मश्च महापद्मस्तथैव च । शङ्खपालश्च कुलिको नागाष्टकमुदाहृतम् इत्युक्ता वेदितव्याः । तेषाञ्च क्रमेण सूर्य्याद्यष्टग्रहरूपता । अनन्तं भास्करं विद्यात् सोमो राजा तु वासुकिः । तक्षकं मङ्गलं विद्यात् बुधं कर्कोटकं तथा । पद्मं वृहस्पतिं विद्यात् महापद्मं तु भार्गवम् । शङ्खपालं शनिं विद्यात् केतुं कुलिकमेव च । नागाः सूर्य्यादिरूपास्ते राहोः प्रत्यधिदेवताः ।

ओं एह्येहि विप्रेन्द्र पितामहेश हंसाधिरूढ त्रिदशैक-वन्द्य । रक्तोत्पलाभास कुशाम्बुहस्त गृहाण पूजां भगव-न्नमस्ते । आ ।।ह्वयाम्यहं देवं देवेशञ्च प्रजापतिम् । अनेक-

व्रतकर्त्तारं सर्वेषाञ्च पितामहम्। विश्वरूपं निराधारं निरालम्बं निरामयम्। आगच्छ देवदेवेश यज्ञेऽस्मिन् सन्निधिं कुरु। ओं भूर्भुवः स्वः केतुप्रत्यधिदैवत ब्रह्मन्निहागच्छेत्यावाह्य ब्रह्म जज्ञानमित्यस्य गौतम ऋषिस्त्रिष्टुप् छन्दो ब्रह्मा देवता ब्रह्मस्थापने वि०। ओं ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः (य० १३ अ०, ३) इति मन्त्रान्ते केतुप्रत्यधिदैवत ब्रह्मन्निह तिष्ठेति केतुतदधिदेवयोर्मध्ये ब्रह्माणं तैः स्थापयेत्। आदित्यादीनां दक्षिणपार्श्वेषु अधिदेवता वामपार्श्वेषु तु प्रत्यधिदेवताः स्थापयेदित्यप्येके।

ओं आवाहये तं गणराजदेवं रक्तोत्पलाभासमशेषवन्द्यम्। विघ्नान्तकं विघ्नहरं गणेशं भजामि रौद्रं सहितं च सिद्ध्या। लम्बोदर महाकाय गजवक्त्र चतुर्भुज। आगच्छ गणनाथ त्वं यज्ञेऽस्मिन् सन्निधौ भव। ओं भूर्भुवः स्वः लोकपाल गणपते इहागच्छेत्यावाह्य गणानां त्वेत्यस्य प्रजापतिर्ऋषिश्छन्दोऽभावः गणपतिर्देवता गणपतिस्थापने वि०। ओं गणानां त्वा गणपतिं हवामहे प्रियाणां त्वा प्रियपतिं हवामहे निधीनां त्वा निधिपतिं हवामहे वसो मम आहमजानि गर्भधमा त्वमजासि गर्भधम् (य० २३ अ०, १९) इति मन्त्रान्ते लोकपाल गणपते इह तिष्ठेति राहोरुत्तरभागे गणपतिं श्वेतपुष्पाक्षतैः स्थापयेत्।

ओं आवाहयाम्यहं देवीं हिमपर्वतसम्भवाम्। देवि त्वं सर्वदा सेव्या यज्ञेऽस्मिन् सन्निधिं कुरु। ओं भूर्भुवः स्वः लोकपाले दुर्गे इहागच्छेत्यावाह्य जातवेदसे इत्यस्य काश्यप ऋषिस्त्रिष्टुप् छन्दो दुर्गा देवता दुर्गास्थापने वि०। ओं जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः (ऋ० १ अष्ट,

७६० पृ० ) इति मन्त्रान्ते लोकपाले दुर्गे इह तिष्ठेति शनै-रुत्तरभागे दुर्गां श्वेतपुष्पाक्षतैः स्थापयेत् ।

आवाहयामि देवेशं भूतानां देहधारिणम् । सर्वाधारं महावेगं मृगवाहनमीश्वरम् । खड्गहस्तं महावेगं त्रैलोक्यान्तर-चारिणम् । आगच्छ भगवन् वायो यज्ञेऽस्मिन् सन्निधिं कुरु । ओं भूर्भुवः स्वर्लोकपाल वायो इहागच्छेत्यावाह्य वायो ये ते इत्यस्य गृत्समद ऋषिर्गायत्री छन्दो वायुर्देवता वायुस्थापने वि० । ओं वायो ये ते सहस्रिणो रथासस्तेभिरागहि । नियुत्वाँ सोमपीतये ( य० २७ अ०, ३२ ) इति मन्त्रान्ते लोकपाल वायो इह तिष्ठेति सूर्य्योत्तरभागे वायुं श्वेतपुष्पाक्षतैः स्थापयेत् ।

ओं भूर्भुवः स्वर्लोकपाल आकाश इहागच्छेत्यावाह्य घृतं घृतपावान इत्यस्य प्रजापतिर्ऋषिश्छन्दोऽभाव आकाशो देवता आकाशस्थापने वि० । ओं घृतं घृतपावानः पिवत वसां वसा-पावानः पिवतान्तरिक्षस्य हविरसि स्वाहा दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहा ( य० ६ अ०, १९ ) इति मन्त्रान्ते लोकपाल आकाश इह तिष्ठेति राहुदक्षिणभागे आकाशं श्वेतपुष्पाक्षतैः स्थापयेत् ।

ओं भूर्भुवः स्वर्लोकपालावाश्विनाविहागच्छतमित्यावाह्य या वां कशेत्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दः आश्विनौ देवते आश्विनस्थापने वि० । ओं या वां कशा मधुमत्यश्विना सुनृतावती । तया यज्ञं मिमिक्षतम् ( य० ७ अ०, ११ ) इति मन्त्रान्ते लोकपालौ आश्विनाविह तिष्ठतमिति केतो-र्दक्षिणतः आश्विनौ श्वेतपुष्पाक्षतैः स्थापयेत् ।

तत इन्द्रादीन् दशदिक्पालान् स्वस्वदिक्षु श्वेतपुष्पाक्षतैः स्थापयेत् । यथा—

ओं एह्येहि वज्रिन् गजाधिरूढ़ सहस्रनेत्र त्रिदशैकवन्द्य। शचीपते शक्र सुरेश नित्यं गृहाण पूजां भगवन्नमस्ते। शचीपते महावाहो सर्वाभरणभूषित। आगच्छ भगवन्नित्यं यज्ञेऽस्मिन् सन्निधिं कुरु। ओं भूर्भुवः स्वः दिक्पाल इन्द्र इहागच्छेत्यावाह्य त्रातारमित्यस्य गर्ग ऋषिस्त्रिष्टुप् छन्दः इन्द्रो देवता इन्द्रस्थापने वि०। ओं त्रातारमिन्द्रमवितारमिन्द्रं हवे-हवे सुहवं शूरमिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः (य० २० अ०, ५०) इति मन्त्रान्ते दिक्पाल इह तिष्ठेति पूर्वस्यामिन्द्रं श्वेतपुष्पाक्षतैः स्थापयेत्।

ओं एह्येहि सर्वामरहव्यवाह मुनिप्रवर्य्यै रभितोऽभिजुष्ट। तेजोवता लोकगणेन सार्द्धं ममाध्वरं पाहि कवे नमस्ते। ओं भूर्भुवः स्वः दिक्पाल अग्ने इहागच्छेत्यावाह्य त्वं नो अग्ने इत्यस्य हिरण्यस्तूप आङ्गिरस ऋषिस्त्रिष्टुप् छन्दः अग्निर्देवता अग्निस्थापने वि०। ओं त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेड़ो अवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुग्ध्यस्मत् (य० २१ अ०, ३) इति मन्त्रान्ते दिक्पाल अग्ने इह तिष्ठेति आग्नेय्यामग्निं श्वेतपुष्पाक्षतैः स्थापयेत्।

ओं एह्येहि दण्डायुध धर्मराज कालाञ्जनाभास विशाल-नेत्र। विशालवक्षःस्थल रौद्रनेत्र गृहाण पूजां भगवन्नमस्ते। चित्रगुप्तादिसंयुक्त दण्डमुद्गरधारक। आगच्छ भगवन् धर्म यज्ञेऽस्मिन् सन्निधौ भव। ओं भूर्भुवः स्वर्दिक्पाल यम इहा-गच्छेत्यावाह्य सुगं नु पन्थामित्यस्य प्रजापतिरृषिस्त्रिष्टुप् छन्दः यमो देवता यमस्थापने वि०। ओं सुगं नु पन्थां प्रदिशं न एहि ज्योतिष्मध्येह्यजरं न आयुः। अपैतु मृत्युरमृतं स आगात् वैवस्वतो नो अभयं कृणोतु नः इति मन्त्रान्ते दिक्पाल यम इह तिष्ठेति याम्यां यमं श्वेतपुष्पाक्षतैः स्थापयेत्।

ओं एह्येहि रक्षोगणनायक त्वं विशालवेतालपिशाचसंघैः। ममाध्वरं पाहि पिशाचनाथ लोकेश्वर त्वं भगवन्नमस्ते। निर्ऋतिं खड्गहस्तञ्च सर्वलोकैकपावनम्। आवाहयामि यज्ञेऽस्मिन् पूजेयं प्रतिगृह्यताम्। ओं भूर्भुवः स्वर्दिक्पाल निर्ऋते इहागच्छेत्यावाह्य असुन्वन्तमित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो निर्ऋतिर्देवता निर्ऋतिस्थापने वि०। ओं असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य। अन्यमस्मदिच्छ सा त इत्यानमो देवि निर्ऋते तुभ्यमस्तु (य० १२ अ०, ६२) इति मन्त्रान्ते दिक्पाल निर्ऋते इह तिष्ठेति नैर्ऋत्यां निर्ऋतिं स्थापयेत्।

ओं आवाहयामि देवेशं सलिलस्याधिपं प्रभुम्। शङ्खपाशधरं सौम्यं वरुणं यादसां पतिम्। गम्भीरथसमारूढं मणिरत्नसमन्वितम्। आगच्छ देव वरुण यज्ञेऽस्मिन् सन्निधिं कुरु। ओं भूर्भुवः स्वर्दिक्पाल वरुण इहागच्छेत्यावाह्य तत्त्वा यामीत्यस्य शुनःशेफ ऋषिस्त्रिष्टुप् छन्दो वरुणो देवता वरुणस्थापने वि०। ओं तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः (य० १८ अ०, ४९) इति मन्त्रान्ते दिक्पाल वरुण इह तिष्ठेति पश्चिमायां वरुणं स्थापयेत्।

आवाहयामि देवेशं भूतानां देहधारिणम्। सर्वाधारं महावेगं मृगवाहनमीश्वरम्। खड्गहस्तं महावेगं त्रैलोक्यान्तरचारिणम्। आगच्छ भगवन् वायो यज्ञेऽस्मिन् सन्निधिं कुरु। ओं भूर्भुवः स्वर्दिक्पाल वायो इहागच्छेत्यादिनावाह्य आ नो नियुद्भिरित्यस्य वसिष्ठ ऋषिस्त्रिष्टुप् छन्दो वायुर्देवता वायुस्थापने विनियोग इति स्मृत्वा। ओं आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरुपयाहि यज्ञम्। वायो अस्मिन् सवने मादयस्व

यूयं पात स्वस्तिभिः सदा नः (य० २७ अ०, २८ म०) इति मन्त्रान्ते दिक्पाल वायो इह तिष्ठेत्यादिना वायव्यदिशि वायुं स्थापयेत् ।

ओं आवाहयामि देवेशं शशाङ्कं रजनीपतिम् । क्षीरोदधि-समुद्भूतं हरमौलिविभूषणम् । सुधाकरं द्विजाधीशं त्रैलोक्य-प्रीतिकारकम् । ओषध्याप्यायनकरं सोमं कन्दर्पवर्द्धनम् । आगच्छ भगवन् सोम यज्ञेऽस्मिन् स० । ओं भूर्भुवः स्वर्दिक्-पाल सोम इहागच्छेत्यावाह्य वयं सोमेत्यस्य बन्धुर्ऋषि-र्गायत्री छन्दः सोमो देवता सोमस्थापने वि० । ओं वयं सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तः सचेमहि (य० ३ अ०, ५६) इति मन्त्रान्ते दिक्पाल सोम इह तिष्ठेति उदीच्यां सोमं स्थापयेत् ।

ओं एह्येहि गौरीश पिनाकपाणे शशाङ्कमौले वृषभाधि-रूढ़ । देवाधिदेवेश महेश नित्यं गृहाण पूजां भग० । गङ्गा-धर महादेव पार्वतीप्राणवल्लभ । आगच्छ भगवन्नीश यज्ञे-ऽस्मिन् सन्निधिं कुरु । ओं भूर्भुवः स्वर्दिक्पाल ईशान इहा-गच्छेत्यावाह्य तमीशानमित्यस्य गौतम ऋषिर्जगती छन्द ईशानो देवता ईशानस्था० वि० । ओं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम् । पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये (य० २५ अ०, १८) इति मन्त्रान्ते दिक्-पाल ईशान इह तिष्ठेति ऐशान्यामीशं स्थापयेत् ।

ओं एह्येहि विप्रेन्द्र पितामहेश हंसाधिरूढ़ त्रिदशैकपूज्य । रक्तोत्पलाभास कुशाम्बुहस्त गृहाण पूजां भ० । आवाहयाम्यहं देवं देवेशञ्च प्रजापतिम् । अनेकव्रतकर्त्तारं सर्वेषाञ्च पितामहम् । विश्वरूपं निराधारं निरालम्बं निरामयम् । आगच्छ देवदेवेश यज्ञेऽस्मिन् स० । ओं भूर्भुवः स्वर्दिक्पाल ब्रह्मन् इहागच्छेत्या-

वाह्य अस्मे रुद्रा इत्यस्य प्रगाथ ऋषिस्त्रिष्टुप् छन्दो ब्रह्मा देवता ब्रह्मस्थापने वि०। ओं अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः। यः शंसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ अवन्तु देवाः (य० ३३ अ, ५०) इति मन्त्रान्ते दिक्-पाल ब्रह्मन्निह तिष्ठेति पूर्वैशानयोर्मध्ये नैर्ऋतपश्चिमयोर्मध्ये वा ब्रह्माणं स्थापयेत्।

ओं एह्येहि पातालधरामरेश नागाङ्गनाकिन्नरगीयमान। यक्षोरगेन्द्रामरसिद्धसंघैरनन्त रक्षाध्वरमस्मदीयम्। एह्येहि नागेन्द्र धरामरेन्द्र सर्वामरैर्वन्दितपादपद्म। नानाफणामण्डल-राजमान गृहाण पूजां भगवन्नमस्ते। आसीविषसमोपेत नाग-कन्याविराजित। आगच्छ नागराजेन्द्र यज्ञेऽस्मिन् स०। ओं भूर्भुवः स्वर्दिक्पाल अनन्त इहागच्छेत्यावाह्य स्योना पृथिवी-त्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दोऽनन्तो देवताऽनन्तस्थापने वि०। ओं स्योना पृथिवि नो भवान्टक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः (य० ३५ अ. २१) इति मन्त्रान्ते दिक्पाल अनन्त इह तिष्ठेति नैर्ऋतपश्चिमयोर्मध्य ऐशानपूर्वयोर्मध्ये वा अनन्तं स्थापयेत्।

ओं आवाहयामि देवेशान् वसूनष्टौ महाबलान्। सौम्य-मूर्त्तिधरान् दिव्यायुधकरान्वितान्। शुद्धस्फटिकसङ्काशान्नाना-वस्तुविराजितान्। अश्वारूढान् दिव्यवस्त्रान् सर्वालङ्कारभूषि-तान्। आवाहयामि यज्ञेऽस्मिन् वसूनष्टौ सुखावहान्। ओं भूर्भुवः स्वर्ध्रुवादयो वसव इहागच्छतेत्यावाह्य ज्मया अत्रेत्यस्य वसिष्ठ ऋषिस्त्रिष्टुप् छन्दो वसवो देवता वसूनां स्थापने वि०। ओं ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त शुभ्राः। अर्वाक् पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य (ऋ० ५ अष्ट० अ ४ सू ६) इति मन्त्रान्ते ध्रुवादयो वसव

इह तिष्ठतेति इन्द्राग्निमध्ये ध्रुवादीनष्टौ वसून् शुक्लपुष्पाक्षतैः स्थापयेत्।

ओं वृषारूढा महादिव्या व्यक्ताव्यक्तस्वरूपिणः। नागहारा महारौद्राः सृष्टिसंहारकारकाः। आगच्छत महाभागाः पूजेयं प्रतिगृह्यताम्। ओं भूर्भुवः स्वर्वीरभद्रादयो रुद्रा इहागच्छतेत्यावाह्य आ रुद्रास इत्यस्यात्रेय ऋषिर्जगती छन्दो रुद्रा देवता रुद्राणां स्थापने वि०। ओं आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन। इयं वो अस्मत् प्रतिहर्य्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे (ऋ० ३, ४७४ पृ०) इति मन्त्रान्ते वीरभद्रादयो रुद्रा इह तिष्ठतेति अग्नियमयोर्मध्ये एकादश रुद्रान् श्वेतपुष्पाक्षतैः स्थापयेत्। एकपादादयो रुद्रा इत्यन्ये।

ओं पद्मासनाः पद्महस्ताः सिन्दूरारुणसप्रभाः। रथारूढा महाभागाः काश्यपेया महात्विषः। आगच्छतादित्यदेवाः पूजेयं प्रतिगृह्यताम्। ओं भूर्भुवः स्वर्धात्रादय आदित्या इहागच्छतेत्यावाह्य यज्ञो देवानामित्यस्य कुत्स ऋषिस्त्रिष्टुप् छन्द आदित्या देवता आदित्यानां स्थापने वि०। ओं यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः। आ वोऽर्वाची सुमतिर्ववृत्या-दंहोश्चिद्या वरिवो वित्तरासत् (ऋ १ अ०, ८४६ पृ०) इति मन्त्रान्ते धात्रादय आदित्या इह तिष्ठतेति इन्द्रेशानयोर्मध्ये धात्रादीन् द्वादशादित्यान् शुक्लपुष्पाक्षतैः स्थापयेत्।

ओं इन्द्रेण सप्तधा छिन्नं दितेः पुत्रं मरुद्गणम्। महावीर्य्यं महाबाहुमाह्वये मखकर्मणि। ओं भूर्भुवः स्वरावहादयः सप्त मरुत इहागच्छतेत्यावाह्य मरुतो यस्येत्यस्य गौतम ऋषिर्गायत्री छन्दो मरुतो देवता मरुतां स्थापने वि०। ओं मरुतो यस्य हि क्षये पाथादिवो विमहसः। स सुगोपातमो जनः

(य० ८ अ०, ३१) इति मन्त्रान्ते आवहादयः सप्त मरुत इह तिष्ठतेति वायुसोमयोर्मध्ये आवहादीन् सप्त मरुतः श्वेतपुष्पाक्षतैः स्थापयेत्।

ओं हंसारूढ़ महाबाहो एकवक्त्र चतुर्भुज। विष्टरं स्रुक्स्रुवं बिभ्रत् ह्यक्षमालां च कुण्डिकाम्। आगच्छ ब्रह्मन् देवेश यज्ञेऽस्मिन् सन्निधिं कुरु। ओं भूर्भुवः स्वर्ब्रह्मन् इहागच्छेत्यावाह्य ब्रह्म जज्ञानमित्यस्य गोतमो वामदेव ऋषिस्त्रिष्टुप् छन्दो ब्रह्मा देवता ब्रह्मस्थापने वि०। ओं ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या अस्य विष्ठाः सतश्च योनिमसतश्च विवः (य० १३ अ०, ३) इति मन्त्रान्ते ब्रह्मन् इह तिष्ठेति यमनिर्ऋतिमध्ये ब्रह्माणं स्थापयेत्।

ओं आवाहये तं गरुड़ोपरिस्थितं रमार्द्धदेहं सुरराजवन्दितम्। कंसान्तकं चक्रगदाब्जहस्तं भजामि देवं वसुदेवसूनुम्। ओं भूर्भुवः स्वरच्युत इहागच्छेत्यावाह्य इदं विष्णुरित्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दोऽच्युतो देवता अच्युतस्थापने वि०। ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढ़मस्य पांसुरे (य० ५, अ० १५) इति मन्त्रान्ते अच्युत इह तिष्ठेति निर्ऋतिवरुणयोर्मध्ये अच्युतं श्वेतपुष्पाक्षतैः स्थापयेत्।

ओं पञ्चवक्त्र वृषारूढ़ प्रतिवक्त्रं त्रिलोचन। कपालशूलखट्वाङ्गिन् चन्द्रमौले सदाशिव। आगच्छ भगवन्नीश यज्ञेऽस्मिन् सन्निधिं कुरु। ओं भूर्भुवः स्वरीशान इहागच्छेत्यावाह्य कद्रुद्रायेत्यस्य गौरपुत्रः कण्व ऋषिर्गायत्री छन्द ईशानो देवता ईशानस्थापने वि०। ओं कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे। वोचेम शंतमं हृदे (ऋ० अ० १, ४०६ पृ०) इति मन्त्रान्ते ईशान इह तिष्ठेति वायुवरुणयोर्मध्ये ईशानं स्थापयेत्।

ओं पद्मासन पद्महस्त सिन्दूरारुणसप्रभ । रथारूढ़ महाबाहो काश्यपेय महाद्युते । आगच्छ भगवन्नर्क यज्ञेऽस्मिन् सन्निधिं कुरु । ओं भूर्भुवः स्वरर्क इहागच्छेत्यावाह्य स्वर्णघर्म इत्यस्य प्रजापतिर्ऋषिर्गायत्री छन्दः अर्को देवता अर्कस्थापने वि० । ओं स्वर्णघर्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्णशुक्रः स्वाहा स्वर्णज्योतिः स्वाहा स्वर्णसूर्य्यः स्वाहेति (य० १८ अ०, ५०) इति मन्त्रान्ते अर्क इह तिष्ठेति वायुसोमयोर्मध्येऽर्कं स्थापयेत् ।

ओं भूर्भुवः स्ववनस्पते इहागच्छेत्यावाह्य वनस्पते इत्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दः वनस्पतिर्देवता वनस्पतिस्थापने वि० । ओं वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः । गोभिः संनद्धो असि वीड़यः स्वास्थाता ते जयतु जेत्वानि ( य० २९ अ०, ५२ ) इति मन्त्रान्ते इह तिष्ठेति अर्कसमीपे स्थापयेत् । महावेदिमध्ये ब्रह्मादिस्वर्णप्रतिमात्रयं संस्थाप्य तस्य सन्निधौ अर्कवनस्पती स्थापयेदित्यन्ये । ततः सूर्य्यादिक्रमेण प्रत्येकं मनोजूतिरिति ( ३३ पृ० १७ पं० ) प्रागुक्तमन्त्रावृत्त्या सर्वेषां प्राणप्रतिष्ठां कुर्य्यात् ।

तत आवाहनक्रमेण प्रत्येकं सूर्य्यादीन् नवग्रहान् तदधिदेवताः नव शिवादीन् प्रत्यधिदेवता नव अग्न्यादीन् पञ्च विनायकादीन् लोकपालानित्येवं द्वात्रिंशद्देवता इन्द्रादीन् दश दिक्पालान् अष्टौ ध्रुवादीन् वसून् एकपादादीनेकादश रुद्रान् धात्रादीन् द्वादशादित्यान् आवहादीन् सप्त मरुतः ब्रह्माच्युतेशानार्कवनस्पतीन् पञ्चेत्येवं पञ्चाशीति देवताः स्थापनमन्त्रेण प्रत्येकं पञ्चोपचारैः षोड़शोपचारैर्वा पूजयेत् । वस्त्रादीनां प्रत्येकं मन्त्राभावेन प्रणवादिनमोन्तनाममन्त्रेणैव पूजा कार्य्या । वसुरुद्रादित्यमरुतां समुदितदेवतात्वपक्षे एकपञ्चाशद्देवताः स्थापनमन्त्रैरेव पूज्या इति विशेषः । तत्रायं ध्यानादौ विशेषः ।

तत्र रवेः ओं काश्यपं क्षत्रियं रक्तं कालिङ्गं चतुरङ्गुलम् । पद्महस्तद्वयं पूर्वाननं सप्ताश्ववाहनम् । शिवाधिदैवतं ध्यायेत् वह्निप्रत्यधिदैवतम् । ध्यानम् । आकृष्णेनेत्यस्य हिरण्यस्तूप आङ्गिरस ऋषिस्त्रिष्टुप् छन्दः सविता देवता सूर्य्यपूजने वि० । ओं आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् । मन्त्रः । रक्तं वस्त्रं रक्तं चन्दनं करवीरकुसुमं गुग्गुलुं धूपं गुड़ौदनं द्राक्षां फलं च नैवेद्यं प्रवालं रत्नमित्येवं विशेषतो दद्यात् । ओं बन्धूकपुष्पसंकाशो रक्तोत्पलदलप्रभः । लोकनाथो जगद्बीजं शान्तिं यच्छतु भास्करः । इति प्रार्थना । ओं नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे । त्रयीमयाय त्रिगुणात्मने नमो विरिञ्चिनारायणशङ्करात्मने । इति नमस्कारः । दक्षिणा कपिला धेनुः ।

चन्द्रस्य ओं सामुद्रं वैश्यमात्रेयं हस्तमात्रं सिताम्बरम् । श्वेतं द्विबाहुं सोमञ्च वरदं सगदेतरम् । दशाश्वं श्वेतपद्मस्थं विचिन्त्योमाधिदैवतम् । जलप्रत्यधिदैवञ्च सूर्य्यास्यमाह्वयेत्तथा । ध्यानम् । इमं देवा इत्यस्य वरुण ऋषिः अत्यष्टिः छन्दः सोमो देवता सोमपूजने वि० । ओं इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय । इमममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजा । मन्त्रः । श्वेतं वस्त्रं श्वेतं चन्दनं कुमुदं पुष्पं घृताक्तं यक्षधूपं घृतपायससमिक्षुञ्च नैवेद्यं मुक्तां रत्नं दद्यात् । ओं सत्कुन्दमाल्यसङ्काशः काशपुष्पनिभस्तथा । शशाङ्को रोहिणीभर्त्ता मम शान्तिं प्रयच्छतु । प्रा० । ओं दिव्यशङ्खतुषाराभं क्षीरोदार्णवसम्भवम् । नमामि शशिनं भक्त्या शम्भोर्मुकुटभूषणम् । इति नमस्कारः । शङ्खो दक्षिणा ।

कुजस्य ओं आवन्त्यं क्षत्रियं रक्तं मेषस्थं चतुरङ्गुलम्। आरक्तमाल्यवसनं भारद्वाजं चतुर्भुजम्। दक्षिणोर्द्ध्वक्रमाच्छक्ति-वराभयगदेतरम्। स्कन्दाधिदैवतं देवं क्षितिप्रत्यधिदैवतम्। आदित्याभिमुखं भौमं तद्वदेव विचिन्तयेत्। ध्यानम्। अग्नि-मूर्द्धेत्यस्य विरूपाक्ष ऋषिर्गायत्री छन्दः अङ्गारको देवता अङ्गारकपूजने वि०। ओं अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वति। मन्त्रः। रक्तं वस्त्रं रक्तं चन्दनं जवापुष्पं सर्जरसयुतसिह्लकं धूपं यावकं पूगफलञ्च नैवेद्यं प्रवालं रत्नं दद्यात्। ओं धरणीगर्भसम्भूतो बन्धुजीवसमप्रभः। शान्तिं ददातु मे नित्यं कुमारोऽङ्गारकः सदा। प्रार्थना। ओं धरणी-गर्भसम्भूतं विद्युत्पुञ्जसमप्रभम्। कुमारं शक्तिहस्तं च लोहि-ताङ्गं नमाम्यहम्। नमस्कारः। रक्तवृषभो दक्षिणा।

ओं मागधं द्व्यङ्गुलोच्छ्रायं वैश्यं पीतं चतुर्भुजम्। वामोर्द्ध्व-क्रमशश्चर्मगदावरदखड्गिनम्। सूर्य्यास्यं सिंहगं सौम्यं पीतवस्त्रं विचिन्तयेत्। नारायणाधिदैवञ्च विष्णुप्रत्यधिदैवतम्। ध्यानम्। उद्बुध्यस्वाग्न इत्यस्य परमेष्ठी ऋषिस्त्रिष्टुप् छन्दः बुधो देवता बुधपूजने वि०। ओं उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्त्ते ससृजेथामयञ्च। अस्मिन् सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत। मन्त्रः। पीतं वस्त्रं कुङ्कुमं चन्दनं चम्पकं कुसुमं पीतागुरुसहितसिह्लकं धूपं क्षीरान्नं नागरङ्गं फलञ्च नैवेद्यं गारुत्मतं रत्नं दद्यात्। ओं प्रियङ्गुकलिकाकारो रूपवांश्चन्द्र-नन्दनः। शान्तिं ददातु मे नित्यं राजपुत्रो बुधः सदा। ओं चन्द्रपुत्रो महातेजाः नानामूर्त्तिधरो विभुः। शान्तिं ददातु मे नित्यं यतः सर्वार्थसाधकः। प्रार्थना। ओं प्रियङ्गुकलिकाकारं रूपेणाप्रतिमं भुवि। सौम्यं सर्वगुणोपेतं नमामि शशिनः सुतम्। सुवर्णं दक्षिणा।

गुरोः ओं द्विजमाङ्गिरसं पीतं सैन्धवं चतुरङ्गुलम्। ध्यात्वा पीताम्बरं जीवं सरोजस्थं चतुर्भुजम्। दक्षोर्द्धादक्षवरदकरका-दण्डमाह्वयेत्। ब्रह्माधिदैवं सूर्य्यास्यमिन्द्रप्रत्यधिदैवतम्। ध्यानम्। वृहस्पते अतीत्यस्य गृत्समद ऋषिस्त्रिष्टुप् छन्दः वृहस्पतिर्दैवता वृहस्पतिपूजने वि०। ओं वृहस्पते अति यदर्य्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवस ऋत-प्रजात तदस्मासु द्रविणं धेहि चित्रम्। मन्त्रः। ओं पीताम्बरं वस्त्रम्। कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य तु। कुङ्कु-मस्य त्रयश्चैव शशिनश्च चतुःसममित्युक्तलक्षणं चतुःसमं चन्दनं पद्मं कुसुमं दशाङ्गं धूपं दध्योदनं जम्बीरफलञ्च नैवेद्यं गोमेदं रत्नं दद्यात्। ओं सुवर्णकलिकाकारः सुभगायुःप्रदो विभुः। देवमन्त्री महातेजा मम शान्तिं प्रयच्छतु। पूजितोऽसि यथा-शक्त्या दण्डहस्त वृहस्पते। क्रूरग्रहाभिभूतस्य शान्तिं देव-गुरो कुरु। प्रार्थना। ओं देवतानामृषीणाञ्च गुरुं परमसम्म-तम्। सर्वशास्त्रप्रवक्तारं तं नमामि वृहस्पतिम्। नमस्कारः। पीताम्बरयुगं दक्षिणा।

शुक्रस्य ओं शुक्रं भोजकटं विप्रं भार्गवञ्च नवाङ्गुलम्। पद्मस्थमाह्वयेत् सूर्य्यमुखं शुक्रं चतुर्भुजम्। सदाक्षवरकरका-दण्डहस्तं सिताम्बरम्। शक्राधिदैवतं ध्यायेच्छचीप्रत्यधि-दैवतम्। ध्यानम्। अन्नात् परिस्रुत इत्यस्य अश्विसरस्वतीन्द्रा ऋषयः अतिजगती छन्दः शुक्रो देवता शुक्रपूजने वि०। ओं अन्नात् परिस्रुतो रसं ब्रह्मणा व्यपिवत् क्षत्रं पयः सोमं प्रजा-पतिः। ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रिय-मिदं पयोऽमृतं मधुः। मन्त्रः। श्वेतं चन्दनं श्वेतं वस्त्रं जातिं कुसुमं साज्यविल्वागुरुं धूपं घृतौदनं वीजपूरफलञ्च नैवेद्यं मुक्तां रत्नं दद्यात्। ओं काशपुष्पप्रतीकाशः सर्वज्ञानमयो

द्विज.। सर्वदैत्याधिपमन्त्री शुक्रः शान्तिं प्रयच्छतु। प्रार्थना। ओं हिमकुन्दमृणालाभं दैत्यानां परमं गुरुम्। सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम्। नमस्कारः। श्वेताश्वो दक्षिणा।

शनेः ओं सौराष्ट्रं काश्यपं शूद्रं सूर्य्यास्यं चतुरङ्गुलम्। कृष्णं कृष्णाम्बरं गृध्रगतं सौरिं चतुर्भुजम्। ध्यात्वा बाणवरशूलधनुर्हस्तं समाह्वयेत्। यमाधिदैवतं प्रजापतिप्रत्यधिदेवतम्। ध्यानम्। शन्नो देवी इत्यस्य दध्यङ्ङाथर्वण ऋषिर्गायत्री छन्दः शनैश्चरो देवता शनैश्चरपूजने वि०। ओं शन्नो देवीरभिष्टय आपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः। मन्त्रः। कृष्णं वस्त्रं कस्तूरिकां चन्दनं मल्लिकां पुष्पं पद्मकाष्ठं धूपं कृशरं जातिफलञ्च नैवेद्यं राजावर्त्तकं रत्नं दद्यात्। ओं सूर्य्यपुत्रो मन्दगामी छायाहृदयनन्दनः। नीलाञ्जनदराश्चो मम शान्तिं प्रयच्छतु। प्रार्थना। ओं नीलाञ्जनसमप्रख्यं रविसूनुं महाग्रहम्। छायायां गर्भसम्भूतं वन्दे भक्त्या शनैश्चरम्। नमस्कारः। कृष्णा धेनुर्दक्षिणा।

राहोः ओं राहुं मलयजं शूद्रं पैठीनं चतुरङ्गुलम्। कृष्णं कृष्णाजिनं सिंहासनं ध्यात्वा समाह्वयेत्। चतुर्बाहुं खड्गवरशूलचर्मधरं तथा। कालाधिदैवं सूर्य्यास्यं सर्पप्रत्यधिदैवतम्। ध्यानम्। कया नश्चित्र इत्यस्य वामदेव ऋषिर्गायत्री छन्दः राहुर्देवता राहुपूजने वि०। ओं कया नश्चित्र आभुवदूती सदा वृधः सखा। कया शचिष्ठया वृता। मन्त्रः। कृष्णाजिनं कृष्णं वा वसनं कालागुरुं चन्दनं कुन्दं पुष्पं कृष्णं वा पुष्पान्तरं यवधूपं धूपं छागमांसं नारिकेलं फलञ्च नैवेद्यं नीलकं रत्नं दद्यात्। ओं अतसीपुष्पसङ्काशो नीलाञ्जनसमप्रभः। शान्तिं ददातु मे नित्यं राहुश्चन्द्रार्कमर्दकः। प्रार्थना। ओं

अर्द्धकायं महाघोरं राहुं चन्द्रार्कमर्दकम् । सिंहिकायाः सुतं रौद्रं तं भक्त्या प्रणमाम्यहम् । खड्गो दक्षिणा ।

केतूनां ओं कौशद्वीपं केतुगणं जैमिनीयं षड़ङ्गुलम् । धूम्रं ध्वजगतं शूद्रमाह्वयेद्विकृताननम् । सूर्य्यास्यं धूम्रवसनं वरदं गदिनं तथा । चित्रगुप्ताधिदैवञ्च ब्रह्मप्रत्यधिदैवतम् । इति । ओं धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः । ध्वजासनगता नित्यं केतवः सुवरप्रदाः । सर्वे किरीटिनो ध्येया ग्रहा लोकहितावहाः । अङ्गुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरन्तु ते इति च ध्यानम् । केतुं कृण्वन्नित्यस्य मधुच्छन्दा ऋषिः अनिरुक्ता गायत्री छन्दः केतवो देवता केतुपूजने वि० । ओं केतुं कृण्वन्नकेतवे पेशो मर्य्या अपेशसे । समुषद्भिरजायथा । धूम्रं वसनं मृगमदं गन्धं मल्लिकां पुष्पं मधुमिश्रितगुड़त्वचं धूपं चित्रौदनं दाड़िमफलं च नैवेद्यं राजावर्त्तकं मणिं दद्यात् । ओं सिन्दूररुधिराकारो रक्तपद्मान्वितस्तथा । केतुरारक्तनेत्राङ्गो मम शान्तिं प्रयच्छतु । प्रार्थना । ओं पलालधूमसङ्काशं ताराग्रहविमर्दकम् । रौद्रं रुद्रात्मकं क्रूरं तं केतुं प्रणमाम्यहम् । नमस्कारः । छागो दक्षिणा । यथोक्तगन्धाद्यभावे सामान्यतः सर्वेभ्यः श्वेतं चन्दनं गुग्गुलुं धूपं स्वस्ववर्णं पुष्पं पायसं नैवेद्यं स्वर्णं दक्षिणां दद्यादिति ।

अधिदेवादीनां प्रागुक्तार्षादिकस्मरणपूर्वकं तत्तन्मन्त्रैरेव पूजा कार्य्या । तत्र सूर्य्याधिदेवशिवस्य । ओं पञ्चवक्त्रो वृषारूढ़ः प्रतिवक्त्रं त्रिलोचनः । कपालशूलखट्टाङ्गी चन्द्रमौलिः सदाशिवः इति ध्यानम् । त्र्यम्बकमित्यस्य वसिष्ठ ऋषिः अनुष्टुप् छन्दः त्र्यम्बको रुद्रो देवता रुद्रपूजने वि० । ओं त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् । मन्त्रः । यथालाभं गन्धपुष्पादि गुग्गुलुं

धूपं पायसान्नं नैवेद्यं दद्यात्। ओं पञ्चवक्त्र वृषारूढ़ त्रिलोचन सदाशिव। चन्द्रमौले महादेव मम शान्तिकरो भव। प्रार्थना। ॐ वृषवाहाय देवाय पार्वतीपतये नमः। वरदायार्द्धकायाय नमश्चन्द्रार्द्धमौलिने इति नमनम्।

चन्द्राधिदेवताया उमायाः। ओं अक्षसूत्रञ्च कमलं दर्पणञ्च कमण्डलुम्। उमा बिभर्त्ति हस्तेषु पूजिता त्रिदशैरपि। ध्यानम्। श्रीश्च त इत्यस्य नारायणपुरुष ऋषिस्त्रिष्टुप् छन्दः उमा देवता उमापूजने वि । ओं श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुं मइषाण सर्वलोकं मइषाण। मन्त्रः। ओं रूपं देहि यशो देहि भाग्यं भगवति देहि मे। पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे। प्रार्थना। ओं सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके। शरण्ये त्र्यम्बके देवि नारायणि नमोस्तु ते इति नमनम्।

मङ्गलाधिदेवस्कन्दस्य। ओं कुमारः षण्मुखो ध्येयः शिखण्डकविभूषणः। रक्ताम्बरधरो देवो मयूरवरवाहनः। कुक्कुटश्च तथा घण्टा तस्य दक्षिणहस्तयोः। पताका वैजयन्त्याख्या शक्तिर्ध्येया च वामयोः। इति ध्यानम्। यदक्रन्द इत्यस्य भार्गवो जमदग्निर्दीर्घतमा वृषी त्रिष्टुप् छन्दः स्कन्दो देवता स्कन्दपूजने वि०। ओं यदक्रन्दः प्रथमं जायमान उद्यन् समुद्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महिजातं ते अर्वन्। मन्त्रः। ओं मयूरवाहन स्कन्द गौरीसुत षड़ानन। कार्त्तिकेय महाभाग दयां कुरु दयानिधे। प्रार्थना। ओं नमः स्कन्दाय शैवाय घण्टाकुक्कुटधारिणे। पताकाशक्तिहस्ताय षण्मुखाय च ते नमः इति नमनम्।

बुधाधिदेवनारायणस्य। ओं नारायणश्चतुर्बाहुः शङ्खं चक्रं

तथोत्तरे। दक्षिणे तु गदापद्मं नीलजीमूतसन्निभः। वामे श्रीर्वत्सकौस्तुभा पुष्टिः पद्मकरा परा इति ध्यानम्। विष्णोररराटमसीत्यस्य प्रजापतिर्ऋषिश्छन्दोऽभावो विष्णुर्देवता विष्णुपूजने वि०। ओं विष्णोरराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि वैष्णवमसि विष्णवे त्वा इति मन्त्रः। ओं देवदेव जगन्नाथ विष्णो यज्ञपते विभो। पाहि दुःखाम्बुधेरस्मान् भक्तानुग्रहकारक। प्रार्थना। ओं नमस्ते पुण्डरीकाक्ष नमस्ते पुरुषोत्तम। नमस्ते सर्वलोकात्मन् नारायण नमो नमः। नमनम्।

जीवाधिदेवब्रह्मणः। ओं पद्मासनस्थो जटिलो ब्रह्मा ध्येयश्चतुर्भुजः। अक्षमालां स्रुवं बिभ्रत् पुस्तकञ्च कमण्डलुम्। वासः कृष्णाजिनं तस्य पार्श्वे हंसस्तथैव च। ध्यानम्। आ ब्रह्मन्नित्यस्य प्रजापतिर्ऋषिश्छन्दोऽभावः ब्रह्मा देवता ब्रह्मपूजने वि०। ओं आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढ़ानड्वानाशुः सप्तिः पुरन्ध्रिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्। मन्त्रः। ओं कृष्णाजिनाम्बरधर पद्मासन चतुर्मुख। जटाधर जगद्धातः प्रसीद कमलोद्भव। प्रार्थना। ओं वेदाधाराय वेद्याय ज्ञानगम्याय सूरये। कमण्डल्वक्षमाला स्रुक्स्रुवहस्ताय ते नमः। नतिः।

शुक्राधिदेवशक्रस्य। ओं चतुर्दन्तगजारूढ़ो वज्री कुलिशभृत्करः। शचीपतिस्तु ध्यातव्यो नानाभरणभूषितः। ध्यानम्। सजोषा इत्यस्य विश्वामित्र ऋषिस्त्रिष्टुप् छन्द इन्द्रो देवता इन्द्रपूजने वि०। ओं सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब

वृत्रहा शूर विद्वान्। जहि शत्रूँ रपमृधो नुदस्वाथोभयं कृणुहि विश्वतो नः। मन्त्रः। ॐ देवराज गजारूढ़ पुरन्दर शतक्रतो। वज्रहस्त महाबाहो वाञ्छितार्थप्रदो भव। प्रार्थना। ओं पुरन्दर नमस्तेऽस्तु वज्रहस्त नमोऽस्तु ते। शचीपते नमस्तुभ्यं नमस्ते मेघवाहन। नतिः।

शनैश्चराधिदेवयमस्य। ओं ईषत्पीनो यमो ध्येयो दण्डहस्तो विजानता। रक्तदृक् पाशहस्तश्च महामहिषवाहनः। ध्यानम्। यमाय त्वाङ्गिरस्वते इत्यस्य दध्यङ्ङाथर्वण ऋषिश्छन्दोऽभावो यमो देवता यमपूजने वि०। ओं यमाय त्वाङ्गिरस्वते पितृमते स्वाहा। स्वाहा घर्माय स्वाहा घर्मः पित्रे। मन्त्रः। ओं धर्मराज महाकाय दक्षिणाधिपते यम। रक्तेक्षण महाबाहो ग्रहपीड़ां निवारय। प्रार्थना। ओं ईषत्पीन नमस्तेऽस्तु दण्डहस्त नमोऽस्तु ते। महिषस्थ नमस्तेऽस्तु धर्मराज नमोऽस्तु ते। नतिः।

राहुग्रहाधिदेवकालस्य। ओं कालः करालवदनो नीलाङ्गश्च विभीषणः। पाशहस्तो दण्डहस्तो ध्येयो वृश्चिकरोमवान्। ध्यानम्। कार्षिरसीत्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दः कालो देवता कालपूजने वि०। ओं कार्षिरसि समुद्रस्य त्वाक्षित्या उन्नयामि। समापो अद्भिरग्मत समोषधीभिरोषधीः। मन्त्रः। विशेषान्तरं नास्ति समान्यतः प्रार्थनानमने।

केतुग्रहाधिदेवचित्रगुप्तस्य। ओं उद्दीप्तवेशः स्वाकारो द्विभुजः सौम्यदर्शनः। दक्षिणे लेखनी चित्रगुप्तो वामेऽस्य पत्रकम्। पिङ्गलश्मश्रुकेशाङ्गः पीनाङ्गजठरोऽरुण इति ध्यानम्। चित्रावसो इत्यस्य ऋषभ ऋषिश्छन्दोऽभावश्चित्रगुप्तो देवता चित्रगुप्तपूजने वि०। ओं चित्रावसो स्वस्ति ते पारमशीय। मन्त्रः। अन्यत् सामान्येन सर्वम्।

अथ प्रत्यधिदेवतानां प्रागुक्तार्घादिकैः स्थापनमन्त्रैरेव पूजा। तत्रादित्यप्रत्यधिदेवताग्नेः। ओं छागस्थः साक्षसूत्रोऽग्निः सप्तार्चिः शक्तिधारकः। चिह्नितं चमरेणास्य करमन्यं प्रकल्पयेत्। ध्यानम्। अग्निं दूतमित्यस्य विरूपाक्ष ऋषिर्गायत्री छन्दोऽग्निर्देवता अग्निपूजने वि०। ओं अग्निं दूतं पुरोदधे हव्यवाहमुपब्रुवे। देवाँ आसादयादिह। मन्त्रः। ओं आग्नेयः पुरुषो रक्तः सर्वदेवमयोऽव्ययः। धूमकेतुरजाध्यक्षस्तस्मै नित्यं नमो नमः। नमस्कारः।

चन्द्रप्रत्यधिदेवतजलस्य। ओं आपः स्त्रीरूपधारिण्यः श्वेता मकरवाहनाः। दधानाः पाशकलसौ मुक्ताभरणभूषिताः। ध्यानम्। आपो हि ष्ठेत्यस्य सिन्धुद्वीप ऋषिर्गायत्री छन्द आपो देवता अपां पूजने वि०। ओं आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे। अन्यत् सामान्यतो ज्ञेयम्।

मङ्गलप्रत्यधिदेवतक्षितेः। ओं शुक्लवर्णा मही ध्येया दिव्याभरणभूषिता। चतुर्भुजा सौम्यवपुश्चन्द्रांशुसदृशाम्बरा। रत्नपात्रं शस्यपात्रं पात्रमोषधिसंयुतम्। पद्मं करे च ध्यातव्यं भुवो यादवनन्दन। दिग्गजानां चतुर्णां सा ध्येया पृष्ठगता तथा। ध्यानम्। स्योनेत्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दः पृथिवी देवता पृथिवीपूजने वि०। ओं स्योना पृथिवि नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः। मन्त्रः। ओं भूतधात्री रत्नगर्भे विपुले सागराम्बरे। अस्मिन् यज्ञे महादेवि विघ्नाद्रक्ष ममाम्बिके। अचलाः सागरग्रामाः प्रासादधवला गृहाः। धारितं च जगत् सर्वं त्वया स्थावरजङ्गमम्। इदमर्घ्यमिदं पाद्यं पूजेयं प्रतिगृह्यताम्। प्रार्थना।

बुधप्रत्यधिदेवतविष्णोः। ओं विष्णुः कौमोदकीपद्मशङ्ख-

चक्रधरः क्रमात्। प्रदक्षिणं दक्षिणाधःकरादारभ्य नित्यशः। ध्यानम्। इदं विष्णुरित्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दो विष्णुर्देवता विष्णुपूजने वि०। ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे। ओं देवदेव जगन्नाथ विष्णो यज्ञपते प्रभो। पाहि दुःखाम्बुधेरस्मान् भक्तानुग्रहकारकः। प्रार्थना। ओं नमस्ते पुण्डरीकाक्ष नमस्ते पुरुषोत्तम। नमस्ते सर्वलोकात्मन् विष्णवे ते नमो नमः। नतिः।

बृहस्पतिप्रत्यधिदैवतेन्द्रस्य। ओं चतुर्दन्तगजारूढो वज्री कुलिशभृत्करः। शचीपतिः सदा ध्येयो नानाभरणभूषणः। ध्यानम्। इन्द्र आसामित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्द इन्द्रो देवता इन्द्रपूजने वि०। ओं इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः। देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम्। ओं देवराज गजारूढ पुरन्दर शतक्रतो। वज्रहस्त महाबाहो वाञ्छितार्थप्रदो भव। प्रार्थना। ओं पुरन्दर नमस्तेऽस्तु वज्रहस्त नमोऽस्तु ते। शचीपते नमस्तुभ्यं नमस्ते मेघवाहन। नमस्कारः।

शुक्रप्रत्यधिदैवतशच्याः। ओं वामे शच्याः करे ध्येया सौम्यसन्तानमञ्जरी। दक्षिणे वरदा ध्येया द्विभुजा च तथा शची। ध्यानम्। अदित्यै रास्नासीत्यस्य दध्यङ्ङाथर्वण ऋषिश्छन्दोऽभाव इन्द्राणी देवता इन्द्राणीपूजने वि०। ओं अदित्यै रास्नासीन्द्राण्या उष्णीषः पूषासि घर्माय दीष्व। मन्त्रः। अन्यत् सामान्यतः कुर्य्यात्।

शनिप्रत्यधिदैवतप्रजापतेः। ओं यज्ञोपवीती हंसस्थ एकवक्त्रश्चतुर्भुजः। अक्षं स्रुवं स्रुचं बिभ्रत् कुण्डिकाञ्च प्रजापतिः। ध्यानम्। प्रजापते इत्यस्य हिरण्यगर्भ ऋषिस्त्रिष्टुप् छन्दः प्रजा-

पतिर्देवता प्रजापतिपूजने वि० । ओं प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् । मन्त्रः । ओं कृष्णाजिनाम्बरधर पद्मासन चतुर्भुज । जटाधर जगद्धातः प्रसीद कमलोद्भव । प्रार्थना । ओं वेदाधाराय वेद्याय ज्ञानगम्याय सूरये । कमण्डल्वक्षमालास्रुक्स्रुवहस्ताय ते नमः । नतिः ।

राहुप्रत्यधिदैवतसर्पाणाम् । ओं अक्षसूत्रधराः सर्वे कुण्डली-पुच्छभूषणाः । एकभोगास्त्रिभोगाश्च सर्वे ध्येयाश्च भीषणाः । ध्यानम् । नमोऽस्तु सर्पेभ्य इत्यस्य प्रजापति ऋषिरनुष्टुप् छन्दः सर्पा देवताः सर्पपूजने वि० । ओं नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः । मन्त्रः । ओं खड्गखेटधराः सर्वे फणामण्डलमण्डिताः । एकभोगाः साक्ष-सूत्राः वरदाः सन्तु मे सदा । प्रार्थना । ओं नमः खेटकहस्ते-भ्यस्त्रिभोगिभ्यो नमो नमः । नमो भीषणदेहेभ्यः खड्गधृग्भ्यो नमो नमः । नतिः ।

केतुप्रत्यधिदैवतब्रह्मणः । ओं पद्मासनस्थो जटिलो ब्रह्मा ध्येयश्चतुर्भुजः । अक्षमालां स्रुवं बिभ्रत् पुस्तकं च कमण्डलुम् । वासः कृष्णाजिनं तस्य पार्श्वे हंसस्तथैव च । ध्यानम् । ब्रह्म जज्ञानमित्यस्य गौतम ऋषिस्त्रिष्टुप् छन्दो ब्रह्मा देवता ब्रह्म-पूजने वि० । ओं ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः । स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः । मन्त्रः । ओं कृष्णाजिनाम्बरधर पद्मासन चतुर्भुज । जटा-धर जगद्धातः प्रसीद कमलोद्भव । प्रार्थना । ओं वेदाधाराय वेद्याय ज्ञानगम्याय सूरये । कमण्डल्वक्षमालास्रुक्स्रुवहस्ताय ते नमः । नतिः ।

अथ लोकपालानां तत्र गणपतिः । ओं चतुर्भुजस्त्रिनेत्रश्च

ध्यातव्योऽत्र गजाननः । नागयज्ञोपवीतश्च शशाङ्ककृतशेखरः । दक्षे दण्डं करे विद्यात् द्वितीये चाक्षसूत्रकम् । तृतीये परशुं विद्याच्चतुर्थे मोदकं तथा । ध्यानम् । गणानां त्वेत्यस्य प्रजापतिर्ऋषिश्छन्दोऽभावः गणपतिर्देवता गणपतिपूजने वि० । ओं गणानां त्वा गणपतिं हवामहे प्रियाणां त्वा प्रियपतिं हवामहे निधीनां त्वा निधिपतिं हवामहे वसो मम आहमजानि गर्भधमा त्वमजासि गर्भधम् मन्त्रः । ओं लम्बोदर महाकाय सततं मोदकप्रिय । गौरीसुत गणेश त्वं विघ्नराज प्रसीद मे । प्रार्थना । ओं नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः । नमस्ते रुद्ररूपाय करिरूपाय ते नमः । नतिः ।

लोकपालदुर्गायाः । ओं शक्तिं बाणं तथा शूलं खड्गं चक्रञ्च दक्षिणे । चन्द्रविम्बमधो वामे खेटमूर्द्ध्वे कपालकम् । शृङ्गं टङ्कञ्च बिभ्राणा सिंहारूढोरुदिग्भुजा । एषा देवी समुद्दिष्टा दुर्गा दुर्गार्त्तिनाशिनी । ध्यानम् । जातवेदसे इत्यस्य काश्यप ऋषिस्त्रिष्टुप् छन्दो दुर्गा देवता दुर्गापूजने वि० । ओं जातवेदसे सुनवाम सोममरातीयतो निदहाति वेद । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः । मन्त्रः । ओं रूपं देहि यशो देहि भाग्यं भगवति देहि मे । पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे । प्रार्थना । ओं सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते । नतिः ।

लोकपालवायोः । ओं धावन् हरिणपृष्ठस्थो ध्वजधारी समीरणः । वरदानकरो धूम्रवर्णो ध्येयो विजानता । इति ध्यानम् । वायो ये ते इत्यस्य गृत्समद ऋषिर्गायत्री छन्दो वायुर्देवता वायुपूजने वि० । ओं वायो ये ते सहस्रिणो रथासस्तेभिरागहि । नियुत्वाँ सोमपीतये । मन्त्रः । ॐ धावन्

हरिणपृष्ठस्थ ध्वजहस्त समीरण। दण्डहस्त मृगारूढ़ वरं देहि वरप्रद। प्रार्थना। ॐ नमो हरिणपृष्ठस्थ समीरण नमोऽस्तु ते। धूम्रवर्ण नमस्तेऽस्तु शीघ्रगामिन् नमोऽस्तु ते। नतिः।

लोकपालाकाशस्य। ॐ नीलोत्पलाभं गगनं तद्वर्णाम्बरधारि च। चन्द्रार्कहस्तं ध्यातव्यं द्विभुजं सौम्यदर्शनम्। ध्यानम्। घृतं घृतपावान इत्यस्य प्रजापतिर्ऋषिग्छन्दोऽभाव आकाशो देवता आकाशपूजने वि०। ॐ घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहा। मन्त्रः। अन्यत् सामान्येन कार्य्यम्।

लोकपालाश्विनयोः। ॐ पीतपद्मसवर्णाभौ पद्मपत्रसमाम्बरौ। द्विभुजौ देवभिषजौ ध्यातव्यौ रूपसंयुतौ। सर्वाभरणसम्पन्नौ विशेषाच्चारुलोचनौ। तयोरोषधयः कार्य्या दिव्या दक्षिणहस्तयोः। वामयोः पुस्तके कार्य्ये दर्शनीये तथा द्विजाः। एकस्य दक्षिणे पार्श्वे वामे चान्यस्य यादव। नारीयुगं प्रकर्त्तव्यं सुरूपं चारुदर्शनम्। तयोश्च नामनी प्रोक्ते रूपसम्पत् तथाकृतिः। मधूकपुष्पसङ्काशा रूपसम्पत् प्रकीर्त्तिता। आकृतिः कथिता लोके शरकाण्डनिभा तथा। रत्नभाण्डकरे कार्य्ये चन्द्रशुक्लाम्बरे तथा। ध्यानम्। या वां कशेत्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दः आश्विनौ देवते आश्विनपूजने वि०। ॐ या वां कशा मधुमत्यश्विना सुनृतावती। तया यज्ञं मिमिक्षतम्। मन्त्रः। अन्यत् सामान्यतः कार्य्यम्। अत्र द्विजाः पक्षिणो विप्राश्चोभयविधा ध्यातव्याः।

अथ दिक्पालानां तत्रेन्द्रस्य। ॐ चतुर्दन्ते गजे सक्तः श्वेते ध्येयः सुरेश्वरः। वामोत्सङ्गगता कार्य्या तस्य भार्य्या शची नृप। नीलवस्त्रा सुवर्णाभा सर्वाभरणभूषिता। तयो-

भूंलाग्रतः कार्य्यौ हस्तौ दक्षिणवामकौ। वामं शचीपृष्ठगतं द्वितीयं वज्रसंयुतम्। वामे शच्याः करे ध्येया सौम्यसन्तान-मञ्जरी। दक्षिणं पृष्ठविन्यस्तं देवराजस्य कारयेत्। इति ध्यानम्। त्रातारमित्यस्य गर्ग ऋषिस्त्रिष्टुप् छन्दः इन्द्रो देवता इन्द्रपूजने वि०। ओं त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं शूर-मिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः। मन्त्रः। ओं देवराज गजारूढ़ पुरन्दर शतक्रतो। वज्रहस्त महावाहो वाञ्छितार्थप्रदो भव। प्रार्थना। ओं पुर-न्दर नमस्तेऽस्तु वज्रहस्त नमोऽस्तु ते। शचीपते नमस्तुभ्यं नमस्ते मेघवाहन। इति नमस्कारः।

अग्नेः। ओं रक्तं जटाधरं वह्निं कारयेद्धूम्रवाससम्। ज्वालामालाकुलं सौम्यं त्रिनेत्रं श्मश्रुधारिणम्। चतुर्बाहुं चतुर्दन्तं देवेशं वायुसारथिम्। चतुर्भिश्छगलैर्युक्ते वायुचिह्ने रथे स्थितम्। वामोत्सङ्गगता स्वाहा शक्तिः सहचरी भवेत्। रत्नपात्रकरी देवी चिह्ने दक्षिणहस्तयोः। ज्वाला त्रिशूलं कर्त्तव्ये चाक्षं माल्यञ्च वामके। ध्यानम्। त्वं नो अग्ने इत्यस्य हिरण्यस्तूप आङ्गिरस ऋषिस्त्रिष्टुप् छन्दः अग्निर्देवता अग्नि-पूजने वि०। ओं त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेड़ो अवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत्। मन्त्रः। ओं आग्नेयः पुरुषो रक्तः सर्वदेवमयो-ऽव्ययः। धूमकेतुरजाध्यक्षस्तस्मै नित्यं नमो नमः। नतिः।

यमस्य। ओं सजलाम्बुदसंस्थाभस्तप्तचामीकराम्बरः। महिषस्थः स कर्त्तव्यः सर्वाभरणवान् यमः। नीलोत्पलाभां धूम्रोर्णां वामोत्सङ्गे च कारयेत्। धूम्रोर्णा द्विभुजा कार्य्या यमः कार्य्यश्चतुर्भुजः। दण्डखड्गावुभौ कार्य्यौ यमदक्षिण-हस्तयोः। ज्वाला त्रिशूलं कर्त्तव्यं चाक्षमाला च वामयोः।

दण्डोपरिमुखं कार्य्यं ज्वालामालाविभूषणम्। धूम्राख्या दक्षिणो हस्तो यमपृष्ठगतो भवेत्। वामे तस्याः करे कार्य्य मनुलिङ्गं सुदर्शनम्। पार्श्वतो दक्षिणे तस्य चित्रगुप्तं च कारयेत्। उदीच्यवेशं स्वाकारं द्विभुजं सौम्यदर्शनम्। दक्षिणे लेखनी तस्य वामे पत्रं तु कारयेत्। वामे पाशधरः कार्य्यः कालो विकटदर्शनः। ध्यानम्। सुगं नु पन्थामित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दः यमो देवता यमपूजने वि०। ओं सुगं नु पन्थां प्रदिशं न एहि ज्योतिष्मध्ये ह्यरं न आयुः। अपैतु मृत्युरमृतं स आगात् वैवस्वतो नो अभयं कृणोतु नः। मन्त्रः। ओं धर्मराज महाकाय दक्षिणाधिपते यम। रक्तेक्षण महाबाहो मम पीड़ां निवारय। प्रार्थना। ओं ईषत्पीनः नमस्तेऽस्तु दण्डहस्त नमोऽस्तु ते। महिषस्थ नमस्तेऽस्तु धर्मराज नमस्तु ते। नतिः।

निर्ऋतेः। ओं विरूपाक्षो विवृत्ताक्षः पाण्डुदंष्ट्रोज्ज्वलाननः। ऊर्द्ध्वकेशो नरस्थश्च द्विबाहुर्भीषणाननः। खड्गहस्तश्च कृष्णाङ्गः कृष्णाम्बरधरस्तथा। सर्वाभरणवान् दंष्ट्रासंघै रश्मिधरस्तथा। कृष्णाङ्गी कृष्णवसना पाशहस्ता तु वामतः। ध्यानम्। असुन्वन्तमित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो निर्ऋतिर्देवता निर्ऋतिपूजने वि०। ओं असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्करस्य। अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु। मन्त्रः। ओं खड्गचर्मधरो बालो निर्ऋतिर्नरवाहनः। ऊर्द्ध्वकेशो विरूपाक्षो मम शान्तिं प्रयच्छतु। प्रार्थना। ओं निर्ऋतिस्तु पुमान् कृष्णः सर्वरक्षोऽधिपो महान्। खड्गहस्तो महासत्त्वस्तस्मै नित्यं नमो नमः। नतिः।

वरुणस्य। ओं गम्भीरथे समारूढ़ो वरुणो यादसां पतिः।

स्निग्धवैदूर्य्यसङ्काशः श्वेताम्बरधरस्तथा। किञ्चिदालम्बजठरो मुक्ताहारविभूषितः। सर्वाभरणवान् राजन् जलदेवश्चतुर्भुजः। वामभागे गतं केतुं मकरं तस्य कारयेत्। छत्रं तु सुसितं मूर्द्ध्नि भार्य्या सर्वाङ्गसुन्दरी। वामोत्सङ्गगता कार्य्या सुमध्या द्विभुजा नृप। उत्पलं कारयेद्वामे दक्षिणे शृङ्गमेव च। पद्म-पाशौ क्रमात् कार्य्यौ देवदक्षिणहस्तयोः। शङ्खञ्च रत्नपात्रञ्च वामयोस्तस्य कारयेत्। भागे तु दक्षिणे गङ्गा मकरस्था सचामरा। देवस्य देवी सा कार्य्या चन्द्रगौरी वराङ्गना। वामे तु यमुना कार्य्या कूर्मसंस्थार्य्यमात्मजा। नीलोत्पलकरा सौम्या नीलनीरजसन्निभा। ध्यानम्। तत्त्वा यामीत्यस्य शुनःशेफ ऋषिस्त्रिष्टुप् छन्दो वरुणो देवता वरुणपूजने वि०। ओं तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेड़-मानो वरुणेह बोध्युरुशंस मा न आयुः प्रमोषीः। मन्त्रः। ओं शुद्धस्फटिकसङ्काश श्वेतहाराम्बरावृत। पाशहस्त महाबाहो दयां कुरु दयानिधे। प्रार्थना। ओं वरुणाय नमस्तेऽस्तु शुद्धस्फटिकदीप्तये। नमस्ते श्वेतहाराय जलेशाय नमो नमः। नतिः।

वायोः। ओं वायुरम्बरगो ध्येयस्तदाकाराम्बरस्तथा। काष्ठापूरितचक्रस्तु द्विभुजो रूपसंयुतः। गमनेच्छुः शिवा भार्य्या तस्य कार्य्या च वामतः। कार्य्यो गृहीतचक्राङ्कः कराभ्यां पवनो द्विज। तथा च देवी कर्त्तव्या शिवा परमसुन्दरी। व्यादितास्यस्तथा कार्य्यो देवोह्याकुञ्चमूर्द्धजः। ध्यानम्। आनो नियुद्भिरित्यस्य वसिष्ठ ऋषिस्त्रिष्टुप् छन्दो वायुर्देवता वायुपूजने वि०। ओं आ नो नियुद्भिः शतिनोभिरध्वरं सहस्रिणीभिरुप याहि यज्ञम्। वायो अस्मिन् सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः (य० २७ अ०, २८) मन्त्रः। ओं धावन्

हरिणपृष्ठस्थ ध्वजहस्त समीरण दण्डहस्त मृगारूढ़ वरं देहि वरप्रद। प्रार्थना। ओं नमो हरिणपृष्ठस्थ समीरण नमोऽस्तु ते। धूम्रवर्ण नमस्तेऽस्तु शीघ्रगामिन् नमोऽस्तु ते। नतिः।

सोमस्य। ओं श्वेतः श्वेताम्बरधरो दशाश्वः श्वेतभूषणः। गदापाणिर्द्विबाहुश्च वरदः स्यात् सदा शशी। ध्यानम्। वयं सोमेत्यस्य बन्धुर्ऋषिर्गायत्री छन्दः सोमो देवता सोमपूजने वि०। ओं वयं सोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहि। मन्त्रः। ओं अत्रिपुत्र निशानाथ द्विजराज सुधाकर। सोम त्वं सौम्यभावेन ग्रहपीड़ां निराकुरु। प्रार्थना। ओं गौरवर्णः पुमान् सौम्यः सर्वौषधिसमन्वितः। नक्षत्राधिपतिः सोमस्तस्मै नित्यं नमो नमः। नतिः

ईशस्य। ओं पूर्वोत्तरे त्रिनेत्रश्च वृषभस्थस्त्रिशूलभृत्। कपालपाणिश्चन्द्रार्द्धभूषणः परमेश्वरः। ध्यानम्। तमीशानमित्यस्य गौतम ऋषिर्जगती छन्द ईशानो देवता ईशानपूजने वि०। ओं तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये। मन्त्रः। ओं पञ्चवक्त्र वृषारूढ़ त्रिलोचन सदाशिव। चन्द्रमौले महादेव मम शान्तिकरो भव। प्रार्थना। ओं ईशानः पुरुषः शुक्लः सर्वविद्याधिपो महान्। शूलहस्तो विरूपाक्षस्तस्मै नित्यं नमो नमः। नतिः।

ब्रह्मणः। ओं पद्मपत्रासनस्थश्च ब्रह्मा ध्येयश्चतुर्मुखः। अक्षमालां स्रुवं बिभ्रत् पुस्तकं च कमण्डलुम्। वासः कृष्णाजिनं तस्य पार्श्वे हंसस्तथैव च। ध्यानम्। अस्मे रुद्रा इत्यस्य प्रगाथ ऋषिस्त्रिष्टुप् छन्दो ब्रह्मा देवता ब्रह्मपूजने वि०। ओं अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः। यः शंसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ अवन्तु देवाः। मन्त्रः।

कृष्णाजिनाम्बरधर पद्मासन चतुर्भुज । जटाधर जगद्धातः प्रसीद कमलोद्भव । प्रार्थना । ओं वेदाधाराय वेद्याय ज्ञानगम्याय सूरये । कमण्डल्वक्षमालास्रुक्स्रुवहस्ताय ते नमः । नतिः ।

अनन्तस्य । ओं अनन्तो रक्तकायश्च सितपङ्कजमालिकः । सितसाहस्रभोगोऽहिः शिरःकुवलयान्वितः । ध्यानम् । स्योना पृथिवीस्य मेधातिथिर्ऋषिर्गायत्री छन्दोऽनन्तो देवता अनन्तपूजने वि० । ओं स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः । मन्त्रः । ओं योऽसावनन्तरूपेण ब्रह्माण्डं सचराचरम् । पुष्पवद्धारयेन्मूर्ध्नि तस्मै नित्यं नमो नमः । इति नतिः ।

वसूनां समुदितदेवतात्वपक्षे । ओं प्रसन्नवदनाः सौम्या वरदाः शक्तिपाणयः । पद्मासनस्था द्विभुजा ध्यातव्या वसवः सदा । ध्यानम् । ज्मया अत्रेत्यस्य वसिष्ठ ऋषिस्त्रिष्टुप् छन्दो वसवो देवता वसूनां पूजने वि० । ओं ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त शुभ्राः । अर्वाक् पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य । मन्त्रः ।

प्रत्येकदेवतात्वपक्षे । १ ध्रुवस्य । ओं माला पङ्कजबीजोत्था चक्रं शक्तिः कमण्डलुः । दक्षाधरादिसव्येन यस्य स्युः स ध्रुवो मतः । ध्यानम् । ओं ध्रुवाय नमः । मन्त्रः ।

२ धरस्य । ओं पद्माक्षमालिके यस्य दक्षवामकरद्वये । सीरशक्ती दधानोऽयं धराख्योऽसौ वसुर्मतः । ध्यानम् । ओं धराय नम इति मन्त्रः ।

३ सोमस्य । ओं मुक्ताफलकृता माला पङ्कजं शक्तिरङ्कुशः । स वसुः कीर्त्तितो यस्य सोमनामेति वै बुधैः । ध्यानम् । ओं सोमाय नमः । मन्त्रः ।

४ आपस्य । ओं सव्यदक्षौ वसोर्यस्य चोर्द्धौ स्तः शक्तिसं-

युतो। सीराङ्कुशान्वितौ चाधः स भवेदापसंज्ञकः। ध्यानम्। ओं आपाय नमः। मन्त्रः।

५ अनिलस्य। ओं अक्षमालोपवीते च शृणिशक्ती करेष्वधः। यस्य स्तः सोऽनिलाख्यः स्याच्छुभदः पञ्चमो वसुः। ध्यानम्। ओं अनिलाय नमः।

६ नलस्य। ओं स्रुवाक्षमालिके दक्षे वामे शक्तिकपालभृत्। सव्योर्द्धादिक्रमाद्योऽसौ नलाख्यस्तु वसुः स्मृतः। ध्यानम्। ओं नलाय नमः।

७ प्रत्यूषस्य। ओं खट्वाङ्गकधरः सव्ये शक्तिखेटधरोऽन्यतः। प्रत्यूषाख्यो वसुश्चायं सप्तमः परिकीर्त्तितः। ध्यानम्। ओं प्रत्यूषाय नमः।

८ प्रभासस्य। ओं सव्ये दण्डकपालाढ्यो दक्षे तु शृणिशक्तिके। शुभदः कीर्त्तितश्चायं प्रभासाख्योऽष्टमो वसुः। ध्यानम्। ओं प्रभासाय नमः। ध्रुवो धरः सोमनामा तथापोऽप्यनिलो नलः। प्रत्युषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तता इति विष्णुधर्मोत्तरोक्ता वसवो ग्राह्याः। धरो ध्रुवश्चेति क्वचित् पाठः। ओं दिव्यवस्त्रा दिव्यदेहाः पुष्पमालाविभूषिताः। वसवोऽष्टौ महाभागाः वरदाः सन्तु मे सदा। प्रार्थना। ओं नमस्करोमि देवेशान् नानावस्तुविराजितान्। शुद्धस्फटिकसङ्काशान् दिव्यायुधकरान् वसून्। नतिः।

रुद्राणां समुदितदेवतात्वपक्षे। ओं रक्तवर्णास्त्रिनयना द्विभुजाश्चन्द्रमौलयः। जटिलाश्च प्रकर्त्तव्या रुद्रा बाणधनुर्द्धराः। ध्यानम्। आ रुद्रास इत्यस्यात्रेय ऋषिर्जगती छन्दो रुद्रा देवता रुद्राणां पूजने वि०। ओं आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन। इयं वो अस्मत् प्रतिहर्य्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे। मन्त्रः।

प्रत्येकदेवतात्वपक्षे। १ अजस्य। ओं अजनामा महारुद्रो धत्ते शूलमथाङ्कुशम्। कपालं डमरुं सर्पं मुद्गरञ्च सुदर्शनम्। अक्षसूत्रमथो दक्षे तथा वामे कराष्टके। तर्जनीमूर्द्धकलसं खट्वाङ्गं तदधः करे। गदां च पट्टिशं घण्टां शक्तिं परशुकुण्डिकाम्। ध्यानम्। ओं अजाय नम इति मन्त्रः।

२ एकपदः। ओं एकपादाभिधो विप्र क्ष्वेड़ादः स्याद्दहन् शरम्। चक्रं डमरुकं शूलं मुद्गरं तदधो वरम्। अक्षं सूत्रं मेखलावान् खट्वाङ्गवांश्च मस्तके। धनुर्घण्टां कपालं च कौमुदीं तर्जनीघटम्। परशुं चक्रमाधत्ते क्रमाद्वामाष्टके करे। अनेकभोगसम्पत्तिं कुरुते यज्वनः सदाः। ध्यानम्। ओं एकपदे नम इति मन्त्रः। अस्यैव प्रथमत्वमित्यन्ये।

३ अहिर्बुध्नस्य। ओं अहिर्बुध्नो गदां चक्रमसिं डमरुमुद्गरौ शूलाङ्कुशाक्षमालाश्च दक्षोर्द्ध्वाधः करैः क्रमात्। तोमरं पट्टिशं चर्मं कपालं तर्जनीघटम्। शक्तिं परशुकं वामे दक्षवद्धारयन्नसिम्। ध्यानम्। ओं अहिर्बुध्नाय नमः। मन्त्रः।

४ विरूपाक्षस्य। ओं विरूपाक्षः स्मृतः खड्गं शूलं डमरुमङ्कुशम्। सर्पं चक्रं गदामक्षसूत्रं बिभ्रत् कराष्टके। खेटं खट्वाङ्गकं शक्तिं परशुं तर्जनीं घटम्। घण्टाकपालके चेति वामोर्द्ध्वादिकराष्टके। ध्यानम् ओं विरूपाक्षाय नम इति मन्त्रः।

५ रेवतस्य। ओं रेवतो दक्षिणे चापं खड्गं शूलं गदामहिम्। चक्राङ्कुशाक्षमालास्तु धारयन्नूर्द्ध्वमादितः। धनुः खेटकखट्वाङ्गं घण्टां तर्जनिकां ततः। परशुं पट्टिशं पात्रं वामबाहुष्टकेऽवावत्। सर्वसम्पत्करो ह्येष जायते चार्चनाद्गृहम्। ध्यानम्। ओं रेवताय नम इति मन्त्रः।

६ हरस्य। ओं हराख्यो मुद्गरं चैव डमरुं शूलमङ्कुशम्।

गदासर्पाक्षसूत्राणि धारयन् दक्षिणोर्द्धतः। पट्टिशं तोमरं शक्तिं परशुं तर्जनीं घटम्। खट्वाङ्गं पात्रकञ्चेति वामोर्द्धादि-क्रमेण तु। ध्यानम्। ओँ हराय नम इति मन्त्रः।

७ बहुरूपस्य। ओँ बहुरूपो दधद्दक्षैर्डमरुञ्च सुदर्शनम्। सर्पं शूलाङ्कुशे चेषुं कौमोदीं जपमालिकाम्। घण्टां कपालं खट्वाङ्गं तर्जनीं कुण्डिकां धनुः। परशुं पट्टिशं चैव वामोर्द्धादिकराष्टके। ध्यानम्। ओँ बहुरूपाय नम इति मन्त्रः।

८ त्र्यम्बकस्य। ओँ त्र्यम्बकोऽपि दधच्चक्रं डमरुं मुद्गरं शरम्। शूलाङ्कुशाहि जाप्यञ्च दक्षोर्द्धादिक्रमेण हि। गदा-खट्वाङ्गपात्राणि कार्मुकं तर्जनीं घटम्। परशुं पट्टिशं चेति वामोर्द्धादिकराष्टके। ध्यानम्। ओँ त्र्यम्बकाय नम इति मन्त्रः।

९ सुरेश्वरस्य। ओँ सुरेश्वरोऽहिं डमरुं चक्रशूलाङ्कुशान्यपि। शरं च मुद्गरं जाप्यं दक्षबाह्वष्टके त्विति। पङ्कजं पट्टिशं घण्टां परशुं तर्जनीं धनुः। खट्वाङ्गं धारयन् पात्रं वामाष्टकर-पल्लवे। ध्यानम् ओँ सुरेश्वराय नम इति मन्त्रः।

१० जयन्तस्य। ओँ जयन्तो दशमो रुद्रोऽप्यङ्कुशं चक्रमुद्गरे। शूलाहिडमरुं बाणमक्षसूत्रं यमाष्टके। गदाखट्वाङ्गपरशुं कपालं शक्तितर्जनीम्। धनुः कुण्डीमथोर्द्धादिवामबाह्वष्टके दधत्। ध्यानम्। ओँ जयन्ताय नम इति मन्त्रः।

११ अपराजितस्य। ओँ अपराजितो दक्षैस्तोमरं खड्ग-मङ्कुशम्। शूलाहिचक्रडमरुमक्षमालां दधत् क्रमात्। शक्ति-खेटगदापात्रतर्जनीघटपङ्कजम्। घण्टामन्त्यवरं शङ्खं धारय-न्नूर्द्ध्वमादितः। तर्जन्यां घटमित्येकम्। ध्यानम्। ओँ अपरा-जिताय नम इति मन्त्रः। अजैकपादहिर्बुध्न्यो विरूपाक्षश्च

देवताः। हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः। रुद्रा एकादश प्रोक्ता जयन्तश्चापराजित इति विष्णुधर्मोक्ता नामतो ग्राह्याः। वीरभद्रश्च शम्भुश्च गिरीशश्च महायशाः। अजैकपादहिर्बुध्नः पिनाकी चापराजितः। भुवनाधीश्वर श्चैव कपाली च विशांपते। स्थाणुर्भगश्च भगवान् रुद्रास्त्वेकादश स्मृता इत्युक्तनाम्नां तु पृथग्ध्यानाभावेन न ग्रहणम्। अन्ये तु एतन्नामका एवात्र देवता इति वदन्ति। ओं पञ्चवक्त्रा वृषारूढास्त्रिनेत्राश्चन्द्र-मौलिनः। रुद्रा एकादश देवा मम शान्तिकराः सदा। प्रार्थना। ओं नमोऽस्तु वृषवाहेभ्यो रुद्रेभ्योऽस्तु नमो नमः। चन्द्रार्द्धमौलिधारिभ्यो वरदेभ्यो नमो नमः। इति नमस्कारः।

आदित्यानां समुदितदेवतात्वपक्षे। ओं पद्मासनस्था द्विभुजाः पद्मगर्भान्तकान्तयः। करादिस्कन्धपर्य्यन्तं सनाल-पद्मधारिणः। अधःसंस्थितमेषादिराशयः प्रभयावृताः। धात्राद्या द्वादशादित्यास्तेजोमण्डलसंस्थिताः। ध्यानम्। यज्ञोदेवाना-मित्यस्य कुत्स ऋषिस्त्रिष्टुप् छन्द आदित्या देवता आदित्यानां पूजने वि०। ओं यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः। आ वोऽर्वाची सुमतिर्ववृत्यादंहोश्चिद्या वरिवो वित्तरासत्। मन्त्रः। प्रत्येकदेवतात्वपक्षे।

१ धातुः। ओं दक्षिणे पौष्करी माला करे वामे कमण्डलुः। पद्माभ्यां शोभितकरा सा धात्री प्रथमा तनुः। ध्यानम्। ओं धात्रे नमः इति मन्त्रः।

२ मित्रस्य। ओं शूलं वामकरे यस्या दक्षिणे सोम एव च। मित्रा नाम त्रिनयना कुशेशयविभूषिता। ध्यानम्। ओं मित्राय नम इति मन्त्रः।

३ अर्य्यम्णः। ओं प्रथमे तु करे चक्रं तथा वामे च

कौमुदी । मूर्त्तिरार्य्यमणी ज्ञेया सपद्मैः पाणिपल्लवैः । ध्यानम् । ओं अर्य्यम्णे नम इति मन्त्रः ।

४ रुद्रस्य ओं अक्षमाला करे सव्ये चक्रं वामे प्रतिष्ठितम् । सा मूर्त्तीरौद्रीविज्ञेया प्रधानपद्मभूषिता । ध्यानम् । ओं रुद्राय नम इति मन्त्रः ।

५ वरुणस्य । ओं चक्रन्तु दक्षिणे यस्या वामे पाशस्तु शोभनः । सा वारुणी भवेन्मूर्त्तिः पद्मव्यग्रकरद्वयां । ध्यानम् । ओं वरुणाय नम इति मन्त्रः ।

६ सूर्य्यस्य । ओं कमण्डलुर्दक्षिणतो माला चाक्षमयी भवेत् । सा भवेत् संमता सूर्य्यमूर्त्तिः पद्मविभूषिता । ध्यानम् । ओं सूर्य्याय नम इति मन्त्रः ।

७ भगस्य । ओं यस्या दक्षिणतः शूलं वामहस्ते सुदर्शनम् । भगमूर्त्तिः समाख्याता पद्महस्ता शुभाऽजया । ध्यानम् । ओं भगाय नम इति मन्त्रः ।

८ विवस्वतः । ओं यस्या वामकरे माला त्रिशूलं दक्षिणे स्मृतम् विवस्वन्मूर्त्तिरेषा स्यात् पद्मलाञ्छनलक्षणा । ध्यानम् । ओं विवस्वते नम इति मन्त्रः ।

९ पूष्णः । ओं पूषाख्यस्य भवेन्मूर्त्तिर्द्विभुजा पद्मलाञ्छिता । सर्वपापहरा ज्ञेया सर्वलक्षणलक्षिता । ध्यानम् । ओं पूष्णे नम इति मन्त्रः ।

१० सवितुः । ओं दक्षिणे तु गदा यस्या वामे चैव सुदर्शनम् । पद्मव्यग्रा तु सावित्री मूर्त्तिः सर्वार्थसाधनी । ध्यानम् । ओं सवित्रे नम इति मन्त्रः ।

११ त्वष्टुः । ॐ स्रुवं च दक्षिणे हस्ते वामे होमजकालिका । मूर्त्तिस्त्वाष्ट्री भवेदेषा पद्मरुद्धकरद्वया । ध्यानम् । ॐ त्वष्ट्रे नमः । मन्त्रः ।

१२ विष्णोः। ॐ सुदर्शनकरा सौम्ये पद्महस्ता तु वामतः। एषा स्यात् द्वादशीमूर्त्ति र्विष्णोरमिततेजसः। ध्यानम्। ॐ विष्णवे नम इति मन्त्रः।

ओं बन्धूकपुष्पसङ्काशा रक्तोत्पलदलप्रभाः। लोकनाथा जगद्बीजं शान्तिं ददतु भास्कराः। प्रार्थना। जवाकुसुमसङ्काशाः काश्यपेया महात्विषः। ध्वान्तारयश्च पापघ्नाः प्रणतोऽस्मि दिवाकराः। नमस्कारः। धाता मित्रोर्य्यमा रुद्रो वरुणः सूर्य्यएव च। भगो विवस्वान् पूषा च सविता दशमः स्मृतः। एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते इत्युक्ता वेदितव्याः। धातार्य्यमा च मित्रश्च वरुणोऽंशुर्भगस्तथा। इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः। ततस्त्वष्टा ततो विष्णुरजघन्यश्च स स्मृत इत्युक्तनाम्नां तु पृथग्ध्यानाभावेन न ग्रहणम्। केचित्तु ध्यानाभावेऽप्येत एव गृह्यन्ते इत्याहुः।

मरुद्गणानां समुदितदेवतात्वपक्षे। ओं सर्वे चतुर्भुजा ध्येया युवानः कुटिलभ्रुवः। सव्योर्द्ध्वाद्युत्तरोर्द्ध्वान्तक्रमेणायुधधारिणः। रक्ताक्षाश्च महावीर्य्याः सर्वभूषणभूषिताः। धूम्रवर्णा मृगारूढाः सर्वे ते शबलांशुकाः। ध्यानम्। मरुतो यस्येत्यस्य गौतम ऋषिर्गायत्री छन्दो मरुतो देवता मरुतां पूजने वि०। ओं मरुतो यस्य हि क्षये पाथादिवो विमहसः। स सुगोपातमो जनः। मन्त्रः। प्रत्येकदेवतात्वपक्षे आवहादीनां ध्यानानि पृथक् न सन्ति प्रणवादिनमोऽन्ता एव मन्त्राः। मरुतो नाम ते देवो गणा वै सप्त सप्तकाः। आवहः प्रवहश्चैव उद्वहः संवहस्तथा। विवहः परावहश्चैव तथा परिवहोऽनिला इत्युक्ता वेदितव्याः। ओं धावन्तो मृगपृष्ठस्थाः ध्वजहस्ताः समीरणाः। दण्डहस्ता मृगारूढा वरं दत्त वरप्रदाः। प्रार्थना। ओं नमो हरिणपृष्ठस्था मारुता वो नमो नमः। धूम्रवर्णा नमो वोऽस्तु

नमोऽस्तु शीघ्रगामिने। नतिः। ऊनपञ्चाशत्संख्यकानां प्रत्येकध्यानसत्त्वेपि सर्वैर्निबन्धृभिरावहादीनां समानामिवात्र देवतात्वनिर्देशात् तेषाञ्च पृथग्ध्यानाभावेन सामान्यध्यानमेव कर्त्तव्यम्।

ब्रह्मणः। ओं पद्मासनस्थो जटिलो ब्रह्मा ध्येयश्चतुर्भुजः। अक्षमालां स्रुवं बिभ्रत् पुस्तकञ्च कमण्डलुम्। वासः कृष्णाजिनं तस्य पार्श्वे हंसस्तथैव च। ध्यानम्। ब्रह्म जज्ञानमित्यस्य गौतमो वामदेव ऋषिस्त्रिष्टुप् छन्दो ब्रह्मा देवता ब्रह्मपूजने वि०। ओं ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या अस्य विष्ठाः सतश्च योनि मसतश्च विवः। मन्त्रः। ओं कृष्णाजिनाम्बरधर पद्मासन चतुर्भुज। जटाधर जगद्धातः प्रसीद कमलोद्भव। प्रार्थना। ओं वेदाधाराय वेद्याय ज्ञानगम्याय सूरये। कमण्डल्वक्षमाला स्रुक्स्रुवहस्ताय ते नमः। नतिः।

अच्युतस्य। ओं गदां सरोजं चक्रञ्च शङ्खं धत्तेऽच्युतः सदा। शुक्लदेहो नीलवासा दक्षिणाधःकरैः क्रमात्। ध्यानम्। इदं विष्णुरित्यस्य मेधातिथिर्ऋषिर्गायत्रीछन्दोऽच्युतो देवता अच्युतपूजने वि०। ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे। मन्त्रः। ओं देवदेव जगन्नाथ विष्णो यज्ञपते विभो। पाहि दुःखाम्बुधे रस्मान् भक्तानुग्रहकारक। प्रार्थना। ओं नमस्ते पुण्डरीकाक्ष नमस्ते पुरुषोत्तम। नमस्ते सर्वलोकात्मन्नच्युतास्तु नमस्त्वयि। नतिः।

ईशस्य। ओं ईशस्तत्पुरुषाघोरवामजाताः क्रमेण तु। सितपीतकृष्णरक्ताश्चतुर्वर्णाः प्रकीर्तिताः। पञ्चवक्त्राः स्मृताः सर्वे दशदोर्दण्डभूषिताः। खड्गखेटधनुर्बाणकमण्डल्वक्षसूत्रिणः। वराभयकरशोभाः शूलपङ्कजपाणयः। ध्यानम्। कद्रुद्रायेत्यस्य

गौरपुत्रः कण्व ऋषिर्गायत्री छन्द ईशो देवता ईशपूजने वि०। ओं कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे। वोचेम शंतमं हृदे। मन्त्रः। ओं पञ्चवक्त्र वृषारूढ़ त्रिलोचन सदाशिव। चन्द्रमौले महादेव मम शान्तिकरो भव। प्रार्थना। ओं वृषवाहाय देवाय पार्वतीपतये नमः। वरदायार्द्धकायाय नमश्चन्द्रार्द्ध-मौलिने। नतिः।

अर्कस्य। ओं पद्मासनः पद्मकरः पद्मगर्भदलद्युतिः। सप्ता-श्वरथसंस्थश्च द्विभुजश्च सदा रविः। ध्यानम्। स्वर्णघर्म इत्यस्य प्रजापतिर्ऋषिर्गायत्री छन्दः अर्कोदेवता अर्कपूजने वि०। ओं स्वर्णघर्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्णशुक्रः स्वाहा स्वर्णज्योतिः स्वाहा स्वर्णसूर्य्यः स्वाहेति। मन्त्रः। ओं बन्धुकपुष्पनीकाशो रक्तोत्पल दलप्रभः। लोकनाथो जगद्वीजं शान्तिं यच्छतु भास्करः। प्रार्थना। ओं जवाकुसुमसङ्काशं काश्यपेयं महा-द्युतिम्। ध्वान्तारिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम्। नतिः।

वनस्पतेर्ध्यानानभिधानेऽपि स्थावराणां वनस्पतिरित्युक्ते-र्विशुरूपताप्रसिद्धेः विशुरूपेणैव ध्यानम्। तद्रुपस्य च बहुशो-ऽभिहितत्वात् तन्मध्ये यत्किञ्चिदेकं ध्यानं कर्त्तव्यमिति सम्प्र-दायः। वनस्पते इत्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दः वनस्पति-र्देवता वनस्पतिपूजने वि०। ओं वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः। गोभिः संनद्धो असि वीडयः आस्थाता ते जयतु जेत्वानि। मन्त्रः। प्रार्थनानती सामान्ये-नैव कर्त्तव्ये।

सूर्य्यादिवनस्पत्यन्तदेवतापूजनप्रकारस्त्वेवम्। आ कृष्णे-त्यादिमन्त्रपाठान्ते इदमासनम् ओं सूर्य्याय नम इत्येवं प्रत्ये-कमन्त्रपाठान्तरं तत्तद्द्रव्योपदेशपूर्वकं प्रणवादिचतुर्थ्यन्तनाम-मन्त्रेण दद्यात्। उपचारास्तु आवाहनासनार्घ्यं पाद्याचमन-

मधुपर्कसेवाश्च। वासोभूषणगन्धाः सुमनोयुतधूपदीपभोज्यानि। प्रादक्षिण्यं नतिरिति कथयन्त्युपचारषोड़शकमिति हेमाद्रि-दानखण्डधृतछन्दोगपरिशिष्टोक्ता ग्राह्या न तु तान्त्रिकाः। सेवात्र स्नानम्। आपः क्षीरं कुशाग्राणि दध्यक्षततिलास्तथा। यवाः सिद्धार्थकाश्चैवमर्घोऽष्टाङ्गः प्रकीर्त्तित इति हेमाद्रिधृत-भविष्यपुराणोक्ताष्टाङ्गमर्घ्यं दद्यात् धूपन्तु सूर्य्यादीनां विशेषतो दद्यात् विशेषाभावे घृताक्तगुग्गुलुं दशाङ्गं वा दद्यात्। दशा-ङ्गधूपस्तु हेमाद्रौ व्रतखण्डे। षड्भागकुष्ठं द्विगुणो गुड़श्च लाक्षा-त्रयं पञ्च नखस्य भागाः। हरितकी सर्जरसः समांसी भागैक-मेकं त्रिलवं शिलाजम्। घनस्य चत्वारि पुरस्य चैको धूपो दशाङ्गः कथितो मुनीन्द्रैरित्युक्तलक्षणो ज्ञेयः। ततो घृतौदना-दिपायसान्नं यथालाभं वा नैवेद्यं दद्यात्।

ततः ग्रहवेदीशानभागे प्रागुक्तदिशा (३१प० १६पं०) शान्तिकलसं संस्थाप्य तत्र वरुणमावाह्य संपूज्याभिमन्त्रयेत्। यथा ओं कलसस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः। मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्थिताः। कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा। ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथ-र्वणः। अङ्गैश्च सहिताः सर्वे कलसं तु समाश्रिताः। अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा। आयान्तु यजमानस्य दुरि-तक्षयकारणात्। इत्यभिमन्त्र्य प्रार्थयेत। ओं देवदानवसंवादे मथ्यमाने महोदधौ। उत्पन्नोऽसि तदाकुम्भ विधृतो विष्णुना स्वयम्। त्वत्तोये सर्वतीर्थानि सर्वे देवास्त्वयि स्थिताः। त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः। आदित्या वसवो रुद्रा विश्वे देवाः सपैतृकाः। त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः। त्वत्प्रसादादिमं यज्ञं कर्त्तुमीहे जलोद्भव। सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा। ततः फलपुष्पमाल्यैः

प्रशोभितं पञ्चवर्णं वितानं बृहस्पतिदैवत्यमिदं यथोक्तं वितानम् ओं सूर्य्यादिभ्यो नम इति दद्यात्। ततः चतुर्षु कुण्डेषु ऋग्वेदाद्यध्यायिनोऽग्निमाधाय स्वस्व शाखोक्तमन्त्रैरेव सूर्य्यादीनां होमः कार्य्यः आचार्य्यकुण्डे तु सूर्य्याद्यावाहनयोग्यतार्थमग्निप्रणयनाग्निस्थापने इति साम्प्रदायः।

तत्र पूर्वकुण्डे ऋग्वेदोक्तविधानेन वह्निं स्थापयेत्। यथा कुण्डमिषुप्रमाणं स्थण्डिलं वा कृत्वा गोमयेनोपलिप्य समिधा कुशमूलेन वा षड्रेखा लिखेत्। तत्र अग्निस्थापनपश्चिमदेशे प्रादेशसम्मिता उदगग्रा प्रथमा तस्या आद्यन्तदेशे दक्षिणोत्तरान्तलग्ने द्वे रेखे प्रागायते मध्ये तिस्र उदगग्रा असंहता इत्येवं षड्रेखा उल्लिख्य तासु रेखासु तामुल्लेखनसमिधं निधाय जलैरभ्युक्ष्य स्थण्डिलात्तां निरस्य आचम्य कांस्येन सृण्मयेन वा श्रोत्रियगृहजमारण्यादिजं वा वह्निमानीय कुण्डात् स्थण्डिलाद्वा वहिराग्नेय्यां स्थापयेत्। ततस्थ वह्नितो ज्वलदिन्धनं गृहीत्वा क्रव्यादमित्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दोऽग्निर्देवता अग्निसंस्कारे विनियोग इति स्मृत्वा। ओं क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः (ऋ० १० म० १६ सू० ८ म०) इत्यनेन नैर्ऋत्यां क्षिपेत्। तत आचम्य भूर्भुवः स्वरित्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दो बृहस्पतिर्देवता वह्निस्थापने वि०। ओं भूर्भुवः स्वरित्यात्माभिमुखं वह्निं स्थापयेत्। इहैवायमित्यस्य प्रजापतिर्ऋषिश्छन्दोऽभावो वह्निर्देवता वह्निज्वालने वि०। ओं इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् इत्यनेनाग्निं प्रज्वाल्य द्वे समिधे अग्नौ तूष्णीं दत्त्वा त्रिमुष्टित्रयसम्मितं वर्हिर्वक्ष्यमाणलक्षणं संनह्य पञ्चदशेध्मदारूणि हस्तप्रमाणानि संगृह्य वह्निं ध्यायेत्। यथा ओं रुद्रतेजःसमुद्भूतं द्विमूर्द्धानं द्विनासिकम्। षण्नेत्रं च

चतुःश्रोत्रं त्रिपादं सप्तहस्तकम् । याम्यभागे चतुर्हस्तं सव्यभागे त्रिहस्तकम् । स्रुवं स्रुचं च शक्तिञ्च अक्षमालाञ्च दक्षिणे । तोमरं व्यजनं चैव घृतपात्रं तु वामके । बिभ्रतं सप्तभिर्हस्तैर्द्विमुखं सप्तजिह्वकम् । दक्षिणे च चतुर्जिह्वं त्रिजिह्वमुत्तरे मुखे । द्वादशकोटिमूर्त्त्याख्यं द्विपञ्चाशत्कलायुतम् । स्वाहास्वधावषट्कारैरङ्कितं मेषवाहनम् । रक्तमाल्याम्बरधरं रक्तपद्मासनस्थितम् । ततोऽग्नेर्नाम कुर्य्यात् । प्रकृते च शत मङ्गलनामानं वह्निमावाहयेत् । यथा अग्ने त्वं शतमङ्गलनामासीत्युच्चार्य्य ओं शतमङ्गलनामानं वह्निमावाहयाम्यहम् । त्वं मुखं सर्व्वदेवानां सप्तार्च्चिरमितद्युते । आगच्छ भगवन् देव यज्ञेऽस्मिन् सन्निधौ भवेत्यावाह्य यथाविभवं संपूजयेत् । ततो भूमौ पातितदक्षिणजानुः प्रादेशमात्रा घृताक्तास्तिस्रः समिधो वह्नौ तूष्णीं क्षिप्त्वा देशकालौ संकीर्त्त्य तुलादानाङ्गहोमकर्मणि तदङ्गान्वाधानमहं करिष्ये इति प्रथमं सामान्यतोऽभिलप्य तत्र च देवताविशेषपरिग्रहार्थमस्मिन्नन्वाहितेऽग्नौ अग्निं जातवेदसमिध्मेन प्रजापतिमिन्द्रं चाघारदेवते आज्येन अग्नीषोमौ चक्षुषी आज्येन अग्निं पवमानं प्रजापतिञ्चेत्येतान् सूर्य्यादिवनस्पत्यन्ताः प्रधानदेवताश्च चर्व्वादिद्रव्येण रुद्रं च अनुयाजसन्नहनाभ्यां पशुपतिं चरुशेषेण स्विष्टिकृतं हुतशेषेण अग्निमयसं देवान् विष्णुमग्निं वायुं सूर्य्यं प्रजापतिञ्च सर्व्वाः प्रायश्चित्तदेवता आज्येन विश्वान् देवान् संस्रावेण साङ्गेन कर्मणाऽहं सर्व्वान् यक्ष्ये यक्ष्यामीति वेत्युच्चार्य्य महाव्याहृतिभिरन्वाधाय ऐशानीमारभ्य उत्तरदिशं यावत् त्रिस्तूष्णीं कुशानामुदगग्रं पूर्व्वाग्रं वा परिस्तरणं प्रोक्षणञ्च कुर्य्यात् । ततोऽग्नेः पूर्व्वत आरभ्य दक्षिणादिक्रमेण उत्तरदिशं यावत् सोदकेन पाणिना त्रिःप्रोक्षणरूपं परिसमूहनं कुर्य्यात् । ततः पुनरपि तेनैव

र्भेणाग्नेः पर्य्युक्षणं कृत्वा होमीयद्रव्यमपि पर्य्युक्षेत्। ततो-ऽग्नेरुत्तरदिश्युपविश्य ब्रह्मणो दक्षिणाङ्गुष्ठमासाद्य अद्येत्यादि मत्कर्त्तव्यतुलादानाङ्गहोमकर्म्मणि कृताकृतावेक्षणरूपब्रह्मकर्म-करणायामुकगोत्रममुकदेवशर्म्माणं त्वामहं वृणे इत्यभिलपिते ओं वृतोऽस्मीति प्रयुक्ते तमग्नेः पूर्वेणानीय दक्षिणदिशि पूगी-कृतकुशास्तरणरूपं ब्रह्मासनमुपकल्प्य प्राङ्मुखस्तिष्ठन् ओं देवि-षितस्योदतस्तिष्ठान्यस्य सदने सीदयोऽस्मात् पाकतर इत्युच्चार्य्य वामहस्तानामिकाङ्गुष्ठाभ्यां दर्भमेकं गृहीत्वा निरस्त इत्यस्य प्रजापतिर्ऋषिर्गायत्रीच्छन्दोऽग्निर्देवता तृणनिरसने वि०। ओं निरस्तः परावसुरित्यनेन मन्त्रेण नैर्ऋत्यां क्षिपेत्। ओं इदमहमर्वाग्वसोः सदने सीदामीति प्रत्युच्चार्य्य ब्रह्मणा उपविष्टे आचम्य ब्रह्माणमुत्तराभिमुखमुपवेश्य स्पृष्ट्वा बृहस्पतिरित्यस्य प्रजापतिर्ऋषिर्गायत्री छन्दो विष्णुर्देवता जपे विनियोग इति स्मृत्वा ओं बृहस्पतिर्ब्रह्मा ब्रह्म सदन आसिष्यते बृहस्पते यज्ञं गोपाय संयज्ञं पाहि स मां पाहि भूर्भुवः स्वर्बृहस्पतिं प्रसूतेति मन्त्रं जपेत्। तत उदगग्रेषु कुशेषु पात्राण्यासादयेत्। यथा चरुहोमपवित्राच्छादनास्त्रयो दर्भा द्वे पवित्रे प्रणीताप्रोक्षण्यौ आज्यस्थालीचरुस्थाल्यौ स्रुक्स्रुवौ इध्मवर्हिषी सम्मार्जनकुशाः षट् उपयमनकुशाः सप्त शूर्पः कृष्णाजिनमुदूखलमुषले आज्यं तण्डुला मेक्षणं पुष्पचन्दनादीनि पूर्णपात्रञ्च आज्यहोमे तु स्रुक्स्रुवचरुस्थालीकृष्णाजिनशूर्पमेक्षणोदूखलमुषलानि नासा-दयेत्। तत्र पात्रादीनां लक्षणं यथा। प्रोक्षणीपात्रं वारणं द्वादशाङ्गुलदीर्घं करतलसम्मितखातं पद्मपत्राकृति। आज्य-स्थाली चरुस्थाली च तैजसी मृण्मयी वा। स्रुवं खादिरं हस्त-मात्रमङ्गुष्ठपर्वमात्रखातवर्त्तुलमुखम्। स्रुक् खादिरी हस्तमात्रा हस्ताकृतिः। शूर्पः नलमयः हस्तमात्रविस्तीर्णः। इध्म-

रत्नायामं द्विप्रादेशप्रमाणं वा एकविंशतिदारुकं पञ्चदश-दारुकं वा पालाशं खादिरं वाटं वा। वर्हिः कुशमुष्टिस्वरूपा इध्मबन्धनी रज्जुः। अन्यत् लोकप्रसिद्धम्। ऊर्द्ध स्थितेन वाम-पाणिनाऽधःस्थितेन दक्षिणपाणिना इध्मबन्धनीं रज्जुं सव्यावृतां त्रिगुणां कृत्वा तया सम्बद्धेष्टितासुदगग्रामात्मनोऽग्रतो वर्हिः-समेतां स्थापयेत्। अथ पूर्वासादितकुशपत्रत्रयं गृहीत्वा द्वे पवित्रे प्रादेशमात्रे साग्रे यथा स्यात्तथा मूलप्रदेशे छिनत्ति। ततः सर्वाणि पात्राणि पवित्राभ्यां क्रमेण उदकमादाय प्रोक्षेत्। ततः पवित्रे प्रोक्षणीपात्रे निधाय तदुत्तरे प्रणीतापात्रं स्थाप-यित्वा तत्र जलकुसुमानि प्रक्षिप्य गन्धपुष्पजलपूर्णं सपवित्रं प्रोक्षणीपात्रं वामहस्तोपरि निधाय दक्षिणेनाच्छाद्य ओं ब्रह्म-न्नपः प्रणेष्यामीति पृष्टो ब्रह्मा ओं प्रणयेति ब्रूयात्। ततः कर्त्ता ओं भूर्भुवः स्वर्बृहस्पतिं प्रसूत इति जपित्वा स्वनासिकासमीपं नीत्वा प्रणीताग्न्योर्मध्ये निदध्यात्। ततो दर्भैराच्छादयेत्। तदेव पूर्णपात्रमुच्यते। ततः शूर्पे पूर्णपात्रस्थपवित्रे निधाय तत्र व्रीहिमुष्टीन्निर्वपति। ओं अग्नये त्वा जुष्टं गृह्णामीति गृहीत्वा ओं अग्नये त्वा जुष्टं निर्वपामीति निरूप्य ओं अग्नये त्वा जुष्टं प्रोक्षामीत्यभ्युक्ष्य तूष्णीं मुष्टिद्वयं निर्वपेत्। एवं क्रमेण ओं अग्नीषोमाभ्यां वां जुष्टं गृह्णामीत्यादिना ग्रहणनिर्व-पणप्रोक्षणानि कृत्वा प्रत्येकं तूष्णीं मुष्टिद्वयं निर्वपेत्। प्रकृते च सूर्य्यादिवनस्पत्यन्तदेवतानां चरुहोमस्य कर्त्तव्यतया तेषा-मपि प्रत्येकं मुष्टिग्रहणादिकमनेनैव क्रमेण कार्य्यम्। ततः पूर्वग्रीवोर्द्ध लोम्नि कृष्णाजिने उदूखलं निधाय तत्र शूर्पस्थव्रीहीन् प्रक्षिप्य पत्नी स्वयं वा मूषलेनावहन्यात्। ततः शूर्पेण निस्तुषीकुर्य्यात्। ततो निस्तुषान् शुक्लीकृतान् तण्डुलान् त्रिः प्रक्षाल्य तत्र दुग्धं दत्त्वा चरुस्थाल्यां निक्षिप्य स्तोकं

पचेत्। ततः शूर्पस्थपवित्रे आज्यस्थाल्यां निधाय तत्रैवाज्य-मासिच्य अग्नेरुत्तरतोऽङ्गाराख्यानीय तत्रैवाज्यस्थालीमधिसृत्य अधिसृतं घृतं द्रवीकृत्य तत्र दर्भाग्रद्वयं निःक्षिप्य ज्वलत्तृण-माज्योपरि त्रिर्भ्रामयित्वा अङ्गाराङ्ग संसर्ग्यैवाज्यस्थालीमाक-र्षेत्। तत आज्यस्थे पवित्रे असंहते साङ्गुष्ठानामिकाभ्या-मुत्तानपाणिभ्यां गृहीत्वा सवितुष्ट्वेत्यस्य हिरण्यस्तूप ऋषिः पुर उष्णिक् छन्दः सविता देवता आज्योत्पवने वि०। ओं सवितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिः (य० १अ० ३१) इत्यनेन सकृत् घृतमुत्पूय द्विस्तूष्णी-मुत्पूय कृताज्योत्पवनाभ्यां पवित्राभ्यां घृतं प्रोक्षेत्। ततः पवित्रे अनले क्षिप्त्वा प्रागासादितकुशमुष्टिं प्रत्यगास्तीर्य्य तत्राज्यपात्रं निदध्यात्। ततः स्रुवं स्रुचञ्चाधोमुखं वह्नौ प्रताप्य स्रुचं भूमौ निधाय स्रुवं वामहस्ते धृत्वा सम्मार्जन-कुशाग्रैः स्रुवमूलमारभ्य बिलपर्य्यन्तं संमृज्य पुनः प्रताप्य सम्मार्जनकुशमूलैर्बिलमारभ्याधस्तन्मूलपर्य्यन्तं त्रिः संमृज्य प्रणीतोदकेन पवित्राभ्यां त्रिः प्रोक्ष्य पुनः प्रताप्य घृतादुत्तरतो वर्हिषि निदध्यात्। ततः स्रुचमादाय स्रुववत् संस्कृत्य घृता-दुत्तरतो वर्हिषि निदध्यात्। ततस्तान् कुशान् संप्रोक्ष्य वह्नौ क्षिपेत्। चरुहोमसत्त्वे तु चरुं घृतेन संसृज्य उत्थाप्या-ज्याग्न्योर्मध्येन नीत्वाज्यस्य दक्षिणदिशि वर्हिषि निदध्यात्। ततः कृताञ्जलिः विश्वानि न इत्येषामात्रेयो वसुश्रुत ऋषि-स्त्रिष्टुप् छन्दो जातवेदोऽग्निर्देवता अग्न्यलङ्करणे वि०। ओं विश्वानि नो दुर्गहा जातवेदः सिन्धुं नावा दुरितातिपर्षि। अग्ने अत्रिवन्नमसा गृणानोऽस्माकं बोध्यविता तनूनाम्। ओं यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि। जातवेदो यशो अस्मासु धेहि प्रजाभिरग्नेऽमृतत्वमस्याम्।

ओं यस्मै त्वं सुकृते जातवेद उ लोकमग्ने कृणवः स्योनम्। अश्विनं सपुत्रिणं वीरवन्तं गोमन्तं रयिं न शते स्वस्ति (ऋ०५ म०५ सू०६, १०,११म०) इति मन्त्रैर्वह्निमलङ्कृत्योत्थायाज्येनेध्मं मूलतोऽग्रतश्च संस्पृश्यादाय अयन्त इत्यस्य वामदेव ऋषिस्त्रिष्टुप् छन्दो जातवेदोऽग्निर्देवता इध्मादाने वि०। ओं अयन्त इध्म आत्मा जातवेदस्तेनैधस्व वर्द्धय चास्मान् प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन समेधया स्वाहा इदमग्नये जातवेदसे न मम इतीध्ममादाय स्रुवेणाज्यं गृहीत्वा वायवीं दिशमारभ्याग्नेयीं यावत् घृतधारां दद्यात्। तत्र होतॄणां बहुत्वात् तत्तत्कर्तृकाहुतिषु यजमानेनैकेन प्रत्याहुति द्रव्यत्यागः कर्तुमशक्य इति होमारम्भात् प्रागेव देशादिकीर्तनान्ते अत्र तुलापुरुषमहादानकर्मणि सर्वहोमपर्य्याप्तमिदं तिलाज्यसमित्सहितं द्रव्यं प्रजापतीन्द्राग्नीषोमार्कादिग्रहरुद्रादितत्तद्ग्रहाधिदैवतवह्न्यादितत्तद्ग्रहप्रत्यधिदैवत विनायकादिपञ्चकेन्द्रादिदशदिक्पालवसुरुद्रादित्यमरुद्गणब्रह्माच्युतेशार्कवनस्पत्यग्निवायुसूर्य्यप्रजापतिस्विष्टकृदग्निभ्यो होमार्थमहमुत्सृजे यथादैवतमस्तु न ममेत्युत्सृजेत्। ओं प्रजापतये स्वाहा इदं प्रजापतये न ममेति सर्वत्र स्रुवलग्नं हविःशेषं प्रोक्षणीपात्रे स्थापयेत्। ततो नैर्ऋतकोणादारभ्य ईशानकोणपर्य्यन्तं घृतधारां दद्यात्। ओं इन्द्राय स्वाहा इदमिन्द्राय न मम। एतावाघारौ भाषितौ। तत उपविश्याग्नेर्दक्षिणे पश्चिमान्तात् पूर्वान्तं यावत् घृतधारां दद्यात्। ओं अग्नये स्वाहा इदमग्नये न ममेत्यग्नेर्दक्षिणं लोचनं स्पष्टं भावयेत्। ततोऽग्नेरुत्तरे पश्चिमान्तात् पूर्वान्तं यावत् ओं सोमाय स्वाहा इदं सोमाय न ममेत्यग्नेर्वामनेत्रं स्पष्टं भावयेत्। एतावाघाराज्यभागौ भाषितौ। ततः प्रकृतहोमः। चरुहोमसत्त्वे तु चरोरर्द्धमुद्धृत्य इदमग्नीषोमाभ्या-

मिति विभज्य रेखां कुर्य्यात्। ततः स्रुवेण दर्व्यामाज्यं निधाय चरौ च घृतस्रवं दत्त्वा मेक्षणेनाग्निमचरुमध्यादङ्गुष्ठपर्वमात्रं चरुं वारद्वयं गृहीत्वा घृतस्रवं दत्त्वा चरुपात्रस्थं चरुञ्चाभिदारयेदित्यवदानधर्म्मेण गृहीत्वा ओं अग्नये स्वाहा इदमग्नये न ममेति वह्नेर्मध्ये प्रत्यग्वा जुहुयात्। पुनरवदानधर्म्मेण चरुं गृहीत्वा ओं अग्नीषोमाभ्यां स्वाहा इदमग्नीषोमाभ्यां न ममेति वह्नेः प्रागुदक् वा जुहुयात्। ततः सूर्य्यादिवनस्पत्यन्त देवतानां वसुरुद्रादित्यमरुतां समुदितदेवतात्वपक्षे एकपञ्चाशद्देवतानां प्रत्येकदेवतात्वपक्षे पञ्चाशीतिदेवतानामेकैकचर्वाहुतिं जुहुयात्। यथा आर्षादिस्मरणपूर्व्वकम् आ कृष्णेनेत्यादिवक्ष्यमाणस्वाहान्तमन्त्रान्ते इदं सूर्य्याय न ममेत्याद्यूहः। ततः प्रधानहोमः। तत्र होता उदङ्मुखो होम्यदेवता मनसा ध्यायन् घृताक्ताः सतिलसमित्काः आ कृष्णेनेत्यादिमन्त्रैस्तत्तदार्षादिस्मरणपूर्व्वकमुत्तानपाणिना अष्टोत्तरशतमष्टाविंशतिं वस्वादीनां समुदितदेवतात्वपक्षे विंशत्यन्यूनास्तेषां प्रत्येकदेवतात्यपक्षे द्वादशान्यूनाः प्रत्येकमाहुतीर्जुहुयात्। तथा च यथा सहस्रसंख्यातोऽन्यूनाहुतयो भवेयुस्तथा होतव्यमिति सम्प्रदायः। अन्येषां हवनकाले ध्यानमात्रमावश्यकं ग्रहाणान्तु वर्णादिज्ञानमप्यावश्यकमतः वर्णगोत्रादिसहितं प्रागुक्तं ध्यानं विधाय होमः कार्य्य। अथैषां वह्निनामान्यपि पृथक् सन्ति अतस्तन्नामानं वह्निमावाह्य जुहुयात्। आदित्यादीनां वह्निनामानि तु विनियोगमुखेनाभिधास्यमानान्यत आदौ तत्तन्नाम कृत्वा जुहुयात्।

अथ ऋग्वेदिनामाहुतिमन्त्राः। तत्र रवेः आ कृष्णेनेत्यस्य हिरण्यस्तूप ऋषिस्त्रिष्टुप् छन्दः सूर्य्यो देवता सूर्य्यप्रीत्यर्थं कपिलाग्नावर्कसमिदादिहोमे वि०। ओं आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्त्यञ्च। हिरण्ययेन सविता रथेना

देवो याति भुवनानि पश्यन् (ऋ० १म० ३५सू० २म०) स्वाहा इदं सूर्य्याय न मम।

चन्द्रस्य आप्यायस्वेत्यस्य गौतम ऋषिर्गायत्री छन्दः सोमो देवता सोमप्रीत्यर्थं पिङ्गलाग्नौ पलाशसमिदादिहोमे वि०। ओं आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य संगथे (ऋ० १म० ९१सू० १६म०) स्वाहा इदं सोमाय न मम।

मङ्गलस्य अग्निर्मूर्द्धेत्यस्य विरूपाक्ष ऋषिर्गायत्री छन्दः भौमो देवता भौमप्रीत्यर्थं धूमकेत्वग्नौ खादिरसमिदादिहोमे वि०। ओं अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वति (ऋ० ८म० ४४सू० १६म०) स्वाहा इदं भौमाय न मम।

बुधस्य अग्ने विवस्वदित्यस्य प्रस्कण्व ऋषिस्त्रिष्टुप् छन्दो बुधो देवता बुधप्रीत्यर्थं जाठराग्नौ अपामार्गसमिदादिहोमे वि०। ओं अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य। ओं दाशुषे जातवेदो वहा त्वमद्या देवा उषर्बुधः (ऋ० १म० ४४सू० १म०) स्वाहा इदं बुधाय न मम।

बृहस्पतेः बृहस्पते परीत्यस्याप्रतिरथ ऋषिस्त्रिष्टुप् छन्दो बृहस्पतिर्देवता बृहस्पतिप्रीत्यर्थं शिखिनामाग्नावाश्वत्थसमिदादिहोमे वि०। ओं बृहस्पते परिदीया रथेन रक्षोहा मित्रा अपबाधमानः। प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् (ऋ० १०म १३सू० ४म०) स्वाहा इदं बृहस्पतये न मम।

शुक्रस्य शुक्रं ते इत्यस्य भरद्वाज ऋषिस्त्रिष्टुप् छन्दः शुक्रो देवता शुक्रप्रीत्यर्थं हाटकाग्नावौडुम्बरसमिदादिहोमे वि०। ओं शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि।

विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु (ऋ० ६म० ५८सू० १म०) स्वाहा इदं शुक्राय न मम।

शनेः शमग्निरित्यस्य विठ ऋषिरुष्णिक् छन्दः शनिर्देवता शनिप्रीतये महातेजोऽग्नौ शमीसमिदादिहोमे वि०। ओं शमग्निरग्निभिः करच्छं नस्तपतु सूर्य्यः। शं वातो वा त्वरपा अपस्त्रिधः (ऋ० ८म० १८सू० ९म०) स्वाहा इदं शनये न मम।

राहोः कयान इत्यस्य वामदेव ऋषिर्गायत्री छन्दो राहुर्देवता राहुप्रीत्यर्थं हुताशनाग्नौ दूर्वासमिदादिहोमे वि०। ओं कया नश्चित्र आ भुवदूती सदावृधः सखा। कया शचिष्ठया वृता (ऋ०४ म०३१सू० १म०) स्वाहा इदं राहवे न मम।

केतोः केतुमित्यस्य मधुच्छन्दा ऋषिर्गायत्री छन्दः केतुर्देवता केतुप्रीतये रोहिताग्नौ कुशसमिदादिहोमे वि०। ओं केतुं कृण्वन्नकेतवे पेशोमर्य्या अपेशसे। समुषद्भिरजायथाः (ऋ०१म०६सू०३म ) स्वाहा इदं केतुभ्यो न मम।

अथाधिदेवानामाहुतिमन्त्रास्तत्रेश्वरस्य। आवो राजानमित्यस्य वामदेव ऋषिस्त्रिष्टुप् छन्दो रुद्रो देवता रुद्रप्रीतये पलाशादिसमिदादिहोमे वि०। ओं आवो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः। अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वं (ऋ० ४म० ३सू० १म०) स्वाहा इदमीश्वराय न मम।

उमायाः गौरीर्मिमायेत्यस्य दीर्घतमा ऋषिर्जगती छन्द उमा देवता उमाप्रीतये पलाशादि० वि०। ओं गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् (ऋ० १म० १६४ सू० ४१म०) स्वाहा इदमुमायै न मम।

स्कन्दस्य कुमारं मातेत्यस्यात्रिपुत्रः कुमार ऋषिस्त्रिष्टुप् छन्दः स्कन्दो देवता स्कन्दप्रीतये पलाशादि० वि०। ओं कुमार माता युवतिः समुब्धं गुहा बिभर्त्ति न ददाति पित्रे। अनीकमस्य न मिनज्जनासः पुरः पश्यन्ति निहितमरतौ (ऋ०५म०२सू०१म०) स्वाहा इदं स्कन्दाय न मम ।

विष्णोः इदं विष्णुरित्यस्य काण्वपुत्रो मेधातिथिर्ऋषि र्गायत्री छन्दो विष्णुर्देवता विष्णुप्रीतये पलाशादि० वि०। ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढ़मस्य पांसुरे (ऋ० १म० २२सू० १७म०) स्वाहा इदं विष्णवे न मम ।

ब्रह्मणः त्वमित्सप्रथा इत्यस्य गर्ग ऋषिर्बृहती छन्दो ब्रह्मा देवता ब्रह्मप्रीतये पलाशादि० वि०। ओं त्वमित् सप्रथा अस्य अग्ने त्रातर्ऋतः कविः। त्वं विप्रासः समिधान दीदिव आविवासन्ति वेधसः (सा०१अ०१प्र०४द० ८म०) स्वाहा इदं ब्रह्मणे न मम ।

इन्द्रस्य इन्द्रं वइत्यस्य मधुच्छन्दा ऋषिर्गायत्री छन्द इन्द्रो देवता इन्द्रप्रीतये पलाशादि० वि०। ओं इन्द्रं वो विश्वत-स्परि हवामहे जनेभ्यः। अस्माकमस्तु केवलः (ऋ०१म० ७सू० १०म०) स्वाहा इदमिन्द्राय न मम ।

यमस्य यमाय सोममित्यस्य यम ऋषिरनुष्टुप् छन्दो यमो देवता यमप्रीत्यर्थं पालाशादि० वि०। ओं यमाय सोमं सुनुत यमाय जुहुता हविः। यमो ह यज्ञं गच्छत्यग्निदूतो अरंकृत (ऋ० १०म० १४सू० १३म०) स्वाहा इदं यमाय न मम ।

कालस्य ब्रह्म जज्ञानमित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दः कालो देवता कालप्रीतये पालाशादि० वि०। ओं ब्रह्म

जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः स्वाहा इदं कालाय न मम।

चित्रगुप्तस्य उषो वाजमित्यस्य प्रस्कण्व ऋषिर्बृहती छन्दश्चित्रगुप्तो देवता तत्प्रीतये पालाशादि० वि०। ॐ उषो वाजं हि वंस्व यश्चित्रो मानुषे जने। तेनावह सुकृतो अध्वराँ उप ये त्वा गृणन्ति वह्नयः (ऋ० १म० ४८सू०११म०) स्वाहा इदं चित्रगुप्ताय न मम।

अथ प्रत्यधिदेवतानां तत्राग्नेः। अग्निं दूतमित्यस्य कण्वपुत्रो मेधातिथिर्ऋषिर्गायत्री छन्दोऽग्निर्देवता तत्प्रीतये पालाशादि० वि०। ॐ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्। अस्य यज्ञस्य सुक्रतुं (ऋ०१म०१२सू०१म०) स्वाहा इदमग्नये न मम।

अपाम् अप्सु म इत्यस्य काण्वो मेधातिथिर्ऋषिरनुष्टुप् छन्द आपो देवता तत्प्रीतये पालाशादि० वि०। ओं अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा। अग्निं च विश्वशंभुवमापश्च विश्वभेषजीः (ऋ०१म०२३सू० २०म०) स्वाहा इदमद्भ्यो न मम।

पृथिव्याः स्योनेत्यस्य काण्वोमेधातिथिर्ऋषिर्गायत्री छन्दः पृथिवी देवता तत्प्रीतये पालाशादि० वि०। ओं स्योना पृथिवि भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथः (ऋ १म०२२सू०१५म०) स्वाहा इदं पृथिव्यै न मम।

नारायणस्य सहस्रशीर्षेत्यस्य नारायणर्षिरनुष्टुप् छन्दो नारायणो देवता तत्प्रीतये पालाशादि० वि०। ओं सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम् (ऋ० १०म० ९०सू० १म०) स्वाहा इदं नारायणाय न मम।

इन्द्रस्य इन्द्रायेन्दविल्यस्य कश्यप ऋषिर्गायत्री छन्द इन्द्रो देवता तत्प्रीतये पालाशादि० वि० । ओं इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः । ऋतस्य योनिमासदम् (ऋ०९म० ६४सू० २२म०) स्वाहा इदमिन्द्राय न मम ।

शच्याः उत्तानपर्णे इत्यस्य इन्द्राणी ऋषिरनुष्टुप् छन्द इन्द्राणी देवता तत्प्रीतये पालाशादि० वि० । ओं उत्तान पर्णे सुभगे देवं जूते सहस्वति । सपत्नीं मे पराधम पतिं मे केवलं कुरु ( ऋ० १०म० १४५सू० २म० ) स्वाहा इदमिन्द्राण्यै न मम ।

प्रजापतेः प्रजापते इत्यस्य हिरण्यगर्भऋषिस्त्रिष्टुप् छन्दः प्रजापतिर्देवता तत्प्रीतये पालाशादि० वि० । ओं प्रजापते न त्वदेतान्यन्यो विश्वाजातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां (ऋ०१०म० १२१ सू० १०म०) स्वाहा इदं प्रजापतये न मम ।

सर्पाणाम् आयं गौरित्यस्य सर्पराज्ञी ऋषिर्गायत्री छन्दः सर्पादेवतास्तत्प्रीतये पालाशादि० वि० । ओं आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरञ्च प्रयन्त्स्वः (ऋ०१०म० १८९सू० १म०) स्वाहा इदं सर्पेभ्यो न मम ।

ब्रह्मणः ब्रह्म जज्ञानमित्यस्य गौतमो वामदेव ऋषिस्त्रिष्टुप् छन्दः ब्रह्मा देवता ब्रह्मप्रीतये पालाशादि० वि० । ओं ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः । स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः स्वाहा इदं ब्रह्मणे न मम ।

अथ विनायकादिपञ्चलोकपालानां तत्र विनायकस्य आतू न इन्द्रेत्यस्य कुसीदःकण्व ऋषिर्गायत्री छन्दो विनायको देवता तत्प्रीतये पालाशादि० वि० । ओं आतू न इन्द्र

द्युमन्तं चित्रं ग्राभं संगृभाय। महाहस्ती दक्षिणेन (ऋ०८ म०७०सू० १म०) स्वाहा इदं विनायकाय न मम।

दुर्गायाः जातवेदसे इत्यस्य मारीचः काश्यपऋषि स्त्रिष्टुप् छन्दो दुर्गा देवता तत्प्रीतये पालाशादि० वि०। ओं जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः (ऋ०१ म०९९सू० १म०) स्वाहा इदं दुर्गायै न मम।

वायोः कारणा शिशुरित्यस्य त्रितऋषिरुष्णिक्छन्दो वायुर्देवता वायुप्रीतये पालाशादि० वि०। ओं कारणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम्। विश्वा परिप्रिया भुवदध द्विता (ऋ०९म०१०२सू० १म०) स्वाहा इदं वायवे न मम।

आकाशस्य आदित्प्रत्नस्येत्यस्य वत्स ऋषिर्गायत्री छन्द आकाशो देवता तत्प्रीतये पालाशादि० वि०। ओं आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम्। परो यदिध्यते दिवा (ऋ०८म०६सू०३०म०) स्वाहा इदमाकाशाय न मम।

अश्विनयोः एषो उषा इत्यस्य प्रस्कण्व ऋषिर्गायत्री छन्दोऽश्विनौ देवते तत्प्रीतये पालाशादि० वि०। ओं एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः। स्तुषे वामश्विना बृहत् (ऋ० १म० ४६सू० १म०) स्वाहा इदमश्विनाभ्यां न मम।

अथ दिक्पालानां तत्रेन्द्रस्य इन्द्रं विश्वा इत्यस्य माधुच्छन्दसो जेतनामा ऋषिरनुष्टुप् छन्द इन्द्रो देवता तत्प्रीतये पालाशादि० वि०। ओं इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसं गिरः। रथीतमं रथीनां वाजानां सत्पतिं पतिं (ऋ०१म० ११सू०१म०) स्वाहा इदमिन्द्राय न मम।

अग्नेः अग्निं दूतमित्यस्य काण्वो मेधातिथिऋषिर्गायत्री छन्दोऽग्निर्देवता तत्प्रीतये पालाशादि० वि०। ओं अग्निं

दूतं वृणीमहे होतारं विश्ववेदसम्। अस्य यज्ञस्य सुक्रतुं स्वाहा इदमग्नये न मम।

यमस्य यमायेत्यस्य यम ऋषिरनुष्टुप् छन्दो यमो देवता यमप्रीतये पलाशादि० वि०। ओं यमाय सोमं सुनुत यमाय जुहुता हविः। यमो ह यज्ञं गच्छत्यग्निदूतो अरं कृत स्वाहा इदं यमाय न मम।

निर्ऋतेः मो षु ण इत्यस्य कण्व ऋषिर्गायत्री छन्दो निर्ऋतिर्देवता तत्प्रीतये पालाशादि० वि०। ओं मो षु णः परापरा निर्ऋतिर्दुर्हणा वधीत् पदीष्ट तृष्णया सह (ऋ० १म ३८ सू० ६म०) स्वाहा इदं निर्ऋतये न मम।

वरुणस्य उदुत्तममित्यस्याजिगर्त्तिः शुनःशेफ ऋषिस्त्रिष्टुप् छन्दो वरुणो देवता तत्प्रीतये पालाशादि० वि०। ओं उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय। अथावयमादित्य व्रते तवानागसो अदितये स्याम (ऋ०१म०२४सू० १५म०) स्वाहा इदं वरुणाय न मम।

वायोः वात इत्यस्य वातायन उलप ऋषिर्गायत्री छन्दो वायुर्देवता वायुप्रीतये पालाशादि० वि०। ओं वात आवातु भेषजं शम्भुमयोभु नो हृदे। प्राण आयूंषि तारिषत् (ऋ० १०म०१८६सू०२म०) स्वाहा इदं वायवे न मम।

सोमस्य सोमो धेनुमित्यस्य गौतम ऋषिस्त्रिष्टुप् छन्दः सोमो देवता तत्प्रीतये पालाशादि० वि०। ओं सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति। सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै (ऋ०१म०९१सू० २०म०) स्वाहा इदं सोमाय न मम।

ईशानस्य तमीशानमित्यस्य गौतम ऋषिर्जगती छन्द ईशानो देवता तत्प्रीतये पालाशादि० वि०। ओं तमीशानं

जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये (ऋ० १म० ८९सू० ५म०) स्वाहा इदमीशानाय न मम।

ब्रह्मणः ब्रह्म जज्ञानमित्यस्य हिरण्यगर्भ ऋषिस्त्रिष्टुप् छन्दः ब्रह्मा देवता तत्प्रीतये पालाशादि० वि०। ओं ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः स्वाहा इदं ब्रह्मणे न मम।

अनन्तस्य सहस्रशीर्षेत्यस्य नारायण ऋषिरनुष्टुप् छन्दोऽनन्तो देवता तत्प्रीतये पालाशादि० वि०। ओं सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलं स्वाहा इदमनन्ताय न मम।

वसूनां समुदितदेवतात्वपक्षे ज्मया अत्रेत्यस्य वसिष्ठ ऋषिस्त्रिष्टुप् छन्दो वसवो देवतास्तत्प्रीतये पालाशादि० वि०। ओं ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्तः शुभ्राः। अर्वाक्पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य (ऋ० ७म० ३९सू० ३म०) स्वाहा इदं ध्रुवादिवसुभ्यो न ममेति विंशत्यन्यूनाहुतीर्दद्यात्। प्रत्येकदेवतात्वपक्षे तु ओं ध्रुवाय स्वाहा इदं ध्रुवाय न ममेत्यादिक्रमेण प्रत्येकमष्टानां द्वादशान्यूनाहुतीर्दद्यात्। ते च (९०प० १२प०) प्रागुक्ताः।

रुद्राणां समुदितदेवतात्वपक्षे आ रुद्रास इत्यस्य श्यावाश्व ऋषिर्जगती छन्दो रुद्रा देवतास्तत्प्रीतये पालाशादि० वि०। ओं आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन। इयं वो अस्मत्प्रति हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे (ऋ० ५म० ५७सू० १म०) स्वाहा इदमजादिरुद्रेभ्यो न मम। मतान्तरे वीरभद्रादिभ्यो न ममेति विंशत्यन्यूनाहुती-

र्दद्यात् । प्रत्येकदेवतात्वपक्षे तु ओं अजाय स्वाहा इदमजाय न मम । मतान्तरे ओं वीरभद्राय स्वाहा इदं वीरभद्राय न ममेत्यादिक्रमेण एकादशानां प्रत्येकं द्वादशान्यूनाहुतीर्दद्यात् । ते च (८२प० १४प०) प्रागुक्ताः ।

आदित्यानां समुदितदेवात्वपक्षे यज्ञो देवानामित्यस्य कुत्स ऋषिस्त्रिष्टुप् छन्द आदित्या देवतास्तत्प्रीतये पालाशादि० वि० । ओं यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृड़यन्तः । आ वोऽर्वाची सुमतिर्ववृत्यादंहोश्चिद्या वरिवो वित्तरासत् (ऋ० १म० १०७सू० १म०) स्वाहा इदं धात्राद्यादित्येभ्यो न ममेति विंशत्यन्यूनाहुतीर्जुहुयात् । प्रत्येकदेवतात्वपक्षे तु ओं धात्रे स्वाहा इदं धात्रे न ममेत्यादिक्रमेण द्वादशानां प्रत्येकं द्वादशान्यूनाहुतीर्दद्यात् । ते च (प० ८४ प० १८) उक्ताः । तत्र मतभेदेन नामभेदेऽपि विकल्प एवाश्रयणीय आचारस्तत्रैकतरग्रहणे नियामक एवमन्यत्रापि ।

मरुद्गणानां समुदितदेवतात्वपक्षे आ विद्युदित्यस्य गौतम ऋषिः प्रस्तारपङ्क्तिश्छन्दो मरुतो देवतास्तत्प्रीतये पालाशादि० वि० । ओं आ विद्युन्मद्भिर्मरुतः स्वर्कैरथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः । आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः (ऋ० १म० ८८सू० १म०) स्वाहा इदमावहादिमरुद्भ्यो न ममेति विंशत्यन्यूनाहुतीर्दद्यात् । प्रत्येकदेवतात्वपक्षे तु ओं आवहाय स्वाहा इदमावहाय न ममेत्यादिक्रमेण प्रत्येकं सप्तानां द्वादशान्यूनाहुतीर्दद्यात् । ते च (प० ८४ प० १८) उक्ताः ।

ब्रह्मणः ब्रह्म जज्ञानमित्यस्य गौतम ऋषिस्त्रिष्टुप् छन्दो ब्रह्मा देवता तत्प्रीतये पालाशादि० वि० । ओं ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः । सबुध्न्या उपमा

अस्य विष्ठाः सतश्च योनिमसतश्च विवः स्वाहा इदं ब्रह्मणे न मम।

अच्युतस्य इदं विष्णुरित्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दोऽच्युतो देवता तत्प्रीतये पालाशादि० वि०। ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे स्वाहा इदमच्युताय न मम।

ईशस्य कद्रुद्रायेत्यस्य घोरपुत्रः कण्व ऋषिर्गायत्री छन्द ईशो देवता तत्प्रीत्यर्थं पालाशादि० वि०। ओं कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे। वोचेम शंतमं हृदे (ऋ० १म० ४३सू० १मं०) स्वाहा इदमीशाय न मम।

अर्कस्य चित्रं देवानामित्यस्य कुत्स ऋषिस्त्रिष्टुप् छन्दोऽर्को देवता तत्प्रीतये पालाशादि० वि०। ओं चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य्य आत्मा जगतस्तस्थुषश्च (ऋ० १म० ११५सू० १मं०) स्वाहा इदमर्काय न मम।

वनस्पतिः वनस्पते इत्यस्य भारद्वाजगर्ग ऋषिस्त्रिष्टुप् छन्दो वनस्पतिर्देवता तत्प्रीतये पालशादि० वि०। ओं वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः। गोभिः संनद्धो असि वीड़यस्वास्थाता ते जयतु जेत्वानि (ऋ० ६म० ४७सू० २६मं०) स्वाहा इदं वनस्पतये न मम एकपञ्चाशद्देवतापक्षे विंशत्यन्यूनाः पञ्चाशीतिदेवतापक्षे तु द्वादशान्यूना आहुतीस्तिलाज्यमिश्रितपालाशखादिरौड़म्बरान्यतमसमिद्भिर्जुहुयात्।

ततोऽग्रे वक्ष्यमाणस्विष्टकृदादिहोमः कार्य्यः। अत्रैव समये जापकास्तत्तद्देवता सूक्तं स्वस्वशाखोक्तं तदसत्त्वे तत्तन्मन्त्रो वा आर्य्यादिस्मरणपूर्वकं जपेयुः।

अथाधुना ऋग्वेदिनां जप्यसूक्तान्यभिधीयन्ते। तत्र सूर्य्यस्य

ह्वयाम्यग्निमित्यादिकस्यैकादशर्चस्य सूर्य्यसूक्तस्य हिरण्यस्तूप आङ्गिरस ऋषिराद्यायाः नवम्याश्च जगती छन्दः शिष्टानां त्रिष्टुप् छन्दः सूर्य्यो देवता सूर्य्यप्रीत्यर्थं जपे वि०। ओं ह्वयाम्यग्निं प्रथमं स्वस्तये ह्वयामि मित्रावरुणाविहावसे। ह्वयामि रात्रिं जगतो निवेशनीं ह्वयामि देवं सवितारमूतये ॥ १ ॥ आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च। हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ २ ॥ याति देवः प्रवता यात्युद्वता याति शुभ्राभ्यां यजतो हरीभ्याम्। आ देवो याति सविता परावतोऽप विश्वा दुरिता बाधमानः ॥ ३ ॥ अभीवृतं कृशनैर्विश्वरूपं हिरण्यशम्यं यजतो बृहन्तम्। अस्थाद्रथं सविता चित्रभानुः कृष्णा रजांसि तविषीं दधानः ॥ ४ ॥ वि जनान् श्यावाः शितिपादो अख्यन् रथं हिरण्यप्रउगं वहन्तः। शश्वद्विशः सवितुर्दैव्यस्योपस्थे विश्वा भुवनानि तस्थुः ॥ ५ ॥ तिस्रो द्यावः सवितुर्द्वा उपस्था एका यमस्य भुवने विराषाट्। आणिं न रथ्यममृताधि तस्थुरिह ब्रवीतु य उ तच्चिकेतत् ॥ ६ ॥ वि सुपर्णो अन्तरिक्षाण्यख्यद्गभीरवेपा असुरः सुनीथः। क्वेदानीं सूर्य्यः कश्चिकेत कतमां द्यां रश्मिरस्याततान ॥ ७ ॥ अष्टौ व्यख्यत् ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिन्धून्। हिरण्याक्षः सविता देव आगाद्दधद्रत्ना दाशुषे वार्य्याणि ॥ ८ ॥ हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवी अन्तरीयते। अपामीवां बाधते वेति सूर्य्यमभि कृष्णेन रजसा द्यामृणोति ॥ ९ ॥ हिरण्यहस्तो असुरः सुनीथः सुमृडीकः स्ववान् यात्वर्वाङ्। अपसेधन् रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः ॥ १० ॥ ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे। तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥ ११ ॥ (ऋ० १म० ३५सू०)

रुद्रस्य, इमा रुद्रायेत्यादिकस्यैकादशर्चस्य सूर्य्याधिदेव-
रुद्रसूक्तस्य कुत्स ऋषिर्दशम्या एकादश्याश्च त्रिष्टुप् छन्दः
शिष्टानां जगती छन्दः रुद्रो देवता रुद्रप्रीत्यर्थं जपे वि०।
ओं इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः।
यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥१॥
मृड़ा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते।
यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणी-
तिषु ॥ २ ॥ अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव
रुद्र मीढ्वः। सुम्नायन्निद्विशो अस्माकमाचरारिष्टवीरा जुहु-
वाम ते हविः ॥३॥ त्वेषं वयं रुद्र यज्ञसाधं वङ्कुं कविमवसे नि-
ह्वयामहे। आरे अस्मद्दैव्यं हेड़ो अस्य तु सुमतिमिद्वयमस्या
वृणीमहे ॥ ४ ॥ दिवो वराहमरुषं कपर्दिनं त्वेषं रूपं नमसा
नि ह्वयामहे। हस्ते बिभ्रद्भेषजा वार्य्याणि शर्म वर्म च्छर्दि-
रस्मभ्यं यंसत् ॥ ५ ॥ इदं पित्रे मरुतामुच्यते वचः स्वादोः
स्वादीयो रुद्राय वर्द्धनम् रास्वा च नो अमृत मर्तभोजनं
त्मने तोकाय तनयाय मृड़ ॥ ६ ॥ मा नो महान्तमुत मा नो
अर्भकं मा न उक्षन्तमुत मा न उक्षितम्। मा नो वधीः
पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः ॥ ७ ॥
मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु
रीरिषः। वीरान् मा नो रुद्र भामितो वधीर्हविष्मन्तः सद-
मित्त्वा हवामहे ॥ ८ ॥ उप ते स्तोमान् पशुपा इवाकरं रास्वा
पितर्मरुतां सुम्नमस्मे भद्रा हि ते सुमतिर्मृड़यत्तमाथा
वयमव इत्ते वृणीमहे ॥ ९ ॥ आरे ते गोघ्नमुत पुरुषघ्नं क्षय-
द्वीर सुम्नमस्मे ते अस्तु। मृड़ा च नो अधि च ब्रूहि देवाधा
च नः शर्म यच्छ द्विबर्हाः ॥ १० ॥ अवोचाम नमो अस्मा
अवस्यवः शृणोतु नो हवं रुद्रो मरुत्वान्। तन्नो मित्रो वरुणो

मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ११ ॥ (ऋ० १म० ११४सू०)।

अग्नेः, अग्निं दूतमित्यादिकस्य द्वादशर्चस्य सूर्य्यप्रत्यधिदैवताग्निसूक्तस्य काण्वो मेधातिथिर्ऋषिर्गायत्री छन्दोऽग्निर्देवताऽग्निप्रीतये जपे वि०। ओं अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्। अस्य यज्ञस्य सुक्रतुम् ॥ १ ॥ अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम्। हव्यवाहं पुरुप्रियम् ॥ २ ॥ अग्ने देवाँ इहावह जज्ञानो वृक्तबर्हिषे। असि होता न ईड्यः ॥ ३ ॥ ताँ उशतो वि बोधय यदग्ने यासि दूत्यम्। देवैरा सत्सि बर्हिषि ॥ ४ ॥ घृताहवन दीदिवः प्रतिष्म रिषतो दह। अग्ने त्वं रक्षस्विनः ॥ ५ ॥ अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा हव्यवाड् जुह्वास्यः ॥ ६ ॥ कविमग्निमुपस्तुहि सत्यधर्माणमध्वरे। देवममीवचातनम् ॥ ७ ॥ यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्य्यति। तस्य स्म प्राविता भव ॥ ८ ॥ यो अग्निं देववीतये हविष्माँ आविवासति। तस्मै पावक मृडय ॥ ९ ॥ स नः पावक दीदिवो अग्ने देवाँ इहा वह। उपयज्ञं हविश्च नः ॥ १० ॥ स नः स्तवान आ भर गायत्रेण नवीयसा रयिं वीरवतीमिषम् ॥ ११ ॥ अग्ने शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिः। इमं स्तोमं जुषस्व नः ॥ १२ ॥ (ऋ० १म० १२सू०)।

सोमस्य, त्वं सोमेत्यादिकस्य त्रयोविंशत्यृचस्य सोमसूक्तस्य गोतम ऋषिः पञ्चम्याद्यानां षोडश्यन्तानां द्वादशानामृचां गायत्री छन्दः सप्तदश्या उष्णिक् छन्दः शिष्टानां त्रिष्टुप् छन्दः सोमो देवता सोमप्रीत्यर्थं जपे वि०। ओं त्वं सोम प्र चिकितो मनीषा त्वं रजिष्ठमनु नेषि पन्थाम्। तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः ॥ १ ॥ त्वं सोम क्रतुभिः

सुक्रतुर्भूस्त्वं दक्षैः सुदक्षो विश्ववेदाः। त्वं वृषा वृषत्वेभि-र्महित्वाद्युम्नेभिर्द्युम्न्यभवो नृचक्षाः॥ २॥ राज्ञो नु ते वरुणस्य व्रतानि बृहद्गभीरं तव सोम धाम। शुचिष्ट्वमसि प्रियो न मित्रो दक्षाय्यो अर्यमेवासि सोम॥ ३॥ या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु। तेभिर्नो विश्वैः सुमना अहेलन् राजन्त्सोम प्रति हव्या गृभाय॥ ४॥ त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा। त्वं भद्रो असि क्रतुः॥५॥ त्वं च सोम नो वशो जीवातुं न मरामहे। प्रियस्तोत्रो वनस्पतिः॥ ६॥ त्वं सोम महे भगं त्वं यून ऋतायते। दक्षं दधासि जीवसे॥ ७॥ त्वं नः सोम विश्वतो रक्षा राजन्न-घायतः। न रिष्येत्त्वावतः सखा॥ ८॥ सोम यास्ते मयो-भुव ऊतयः सन्ति दाशुषे। ताभिर्नो ऽविता भव॥ ९॥ इमं यज्ञमिदं वचो जुजुषाण उपागहि। सोम त्वं नो वृधे भव॥ १०॥ सोम गीर्भिष्ट्वा वयं वर्द्धयामो वचो विदः। सुमृळीको न आ विश॥ ११॥ गयस्फानो अमीवहा वसुवित् पुष्टिवर्द्धनः। सुमित्रः सोम नो भव॥ १२॥ सोम रारन्धि नो हृदि गावो न यवसेष्वा। मर्य्य इव स्व ओक्ये॥ १३॥ यः सोम सख्ये तव रारणद्देव मर्त्यः। तं दक्षः सचते कविः॥ १४॥ उरुष्या णो अभिशस्तेः सोम नि पाह्यंहसः। सखा सुशेव एधि नः॥ १५॥ आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम्। भवावाजस्य संगथे॥ १६॥ आप्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः। भवा नः सुश्रवस्तमः सखा वृधे॥ १७॥ सं ते पयांसि समु यन्तु वाजाः संवृष्ण्यान्यभिमातिषाहः। आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व॥१८॥ या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम्। गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र चरा सोम

दुर्यान् ॥ १९ ॥ सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति । सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥ २० ॥ अषाढं युत्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपाम् । भरेषुजां सुक्षितिं सुश्रवसं जयन्तं त्वामनु मदेम सोम ॥ २१ ॥ त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः । त्वमा ततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ २२ ॥ देवेन नो मनसा देव सोम रायो भागं सहसावन्नभि युध्य । मा त्वा तनदीशिषे वीर्यस्योभयेभ्यः प्रचिकित्सा गविष्टौ ॥ २३ ॥ ( ऋ० १म० ९१सू० ) ।

उमायाः आपोहिष्ठेत्यादिकस्य नवर्चस्य चन्द्राधिदेवतोमासूक्तस्य सिन्धुद्वीप ऋषिरन्त्ययोरनुष्टुप् छन्दः शिष्टानां गायत्री छन्द उमा देवता उमाप्रीतये जपे वि० । ओं आपो हि ष्ठा मयो भुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥ १ ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥२॥ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥३॥ शन्नो देवीरभीष्टय आपो भवन्तु पीतये । शंयोरभिस्रवन्तु नः ॥ ४ ॥ ईशाना वार्य्याणां क्षयन्तीश्चर्षणीनाम् । आपो याचामि भेषजम् ॥ ५ ॥ अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वशंभुवम् ॥ ६ ॥ आपः पृणीत भेषजं वरूथं तन्वे मम । ज्योक् च सूर्य्यं दृशे ॥ ७ ॥ इदमापः प्रवहत यत्किञ्चिद्दुरितं मयि । यद्वाहमभि दुद्रोह यद्वा शेप उतानृतम् ॥ ८ ॥ आपो अद्यान्वचारिषं रसेन समगस्महि । पयस्वानग्न आगहि तं मा संसृज वर्चसा ॥ ९ ॥ ( ऋ० १०म० ९सू० ) ।

अपाम्, कस्य नूनमित्यादिकस्य पञ्चदशर्चस्य चन्द्रप्रत्यधिदैवतजलसूक्तस्याजिगर्त्तिः शुनःशेफ ऋषिरभित्वेत्यादितृचस्य

गायत्री छन्दः शिष्टानां त्रिष्टुप् छन्दः वरुणो देवता तत्प्रीतये जपे वि०। ओं कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम। को नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरञ्च॥ १॥ अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारु देवस्य नाम। स नो मह्या अदितये पुनर्दात् पितरञ्च दृशेयं मातरञ्च॥ २॥ अभि त्वा देव सवितरीशानं वार्य्याणाम्। सदावन् भागमीमहे॥ ३॥ यश्चिद्धि त इत्था भगः शशमानः पुरा निदः। अद्वेषो हस्तयोर्दधे॥ ४॥ भगभक्तस्य ते वयमुदशेम तवावसा। मूर्द्धानं राय आरभे॥ ५॥ न हि ते क्षत्रं न सहो न मन्युं वयश्चनामी पतयन्त आपुः। नेमा आपो अनिमिषं चरन्तीर्न ये वातस्य प्रमिनन्त्यभ्वम्॥ ६॥ अबुध्ने राजा वरुणो वनस्योर्द्ध्वं स्तूपं ददते पूतदक्षः। नीचीनाः स्थुरुपरि बुध्न एषामस्मे अन्तर्निहिताः केतवः स्युः॥ ७॥ उरुं हि राजा वरुणश्चकार सूर्य्याय पन्थामन्वेतवा उ। अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित्॥ ८॥ शतं ते राजन् भिषजः सहस्रमुर्वीगभीरा सुमतिष्टे अस्तु। बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत्॥ ९॥ अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः। अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति॥ १०॥ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः। अहेड़मानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः॥११॥ तदिन्नक्तं तद्दिवा मह्यमाहुस्तदयं केतो हृद आ वि चष्टे। शुनःशेपो यमह्वद्गृभीतः सोऽस्मान् राजा वरुणो मुमोक्तु॥ १२॥ शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः। अवैनं राजा वरुणः ससृज्याद्विद्वाँ अदब्धो वि मुमोक्तु पाशान्॥ १३॥ अव ते हेड़ो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः। क्षयन्नस्मभ्य-

मसुर प्रचेता राजन्नेनांसि शिश्रथः कृतानि॥ १४॥ उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम॥ १५॥ (ऋ०१म०२४सू०)

भौमस्य, समिधाग्निमित्यादिकस्य विंशत्यृचस्य मङ्गल-सूक्तस्य विरूपाङ्गिरस ऋषि गायत्री छन्दोऽङ्गारको देवता तत्-प्रीतये जपे वि०। ओं समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम्। अस्मिन् हव्या जुहोतन॥ १॥ अग्ने स्तोमं जुषस्व मे वर्द्धस्वानेन मन्मना। प्रतिसूक्तानि हर्य्यनः॥ २॥ अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे। देवाँ आसादयादिह॥ ३॥ उत्ते बृहन्तोऽर्चयः समिधानस्य दीदिवः। अग्ने शुक्रास ईरते॥ ४॥ उप त्वा जुह्वो मम घृताचीर्यन्तु हर्य्यते। अग्ने हव्या जुषस्व नः॥ ५॥ मन्द्रं होतारमृत्विजं चित्रभानुं विभावसुम्। अग्निमीळे स उ श्रवत्॥ ६॥ प्रत्नं होतारमीड्यं जुष्टमग्निं कविक्रतुम्। अध्वराणामभिश्रियम्॥ ७॥ जुषाणो अङ्गिरस्तमे मा हव्यान्यानुषक्। अग्ने यज्ञं न य ऋतु॥ ८॥ समिधान उसन्त्यशुक्रशोच इहावह। चिकित्वान् देव्यञ्जनम्॥ ९॥ विप्रं होतारमद्रुहं धूमकेतुं विभावसुम्। यज्ञानां केतुमीमहे॥१०॥ अग्ने नि पाहि नस्त्वं प्रतिष्पदे वरीषतः। भिन्धि द्वेषः सहस्कृत॥ ११॥ अग्निः प्रयत्नेन मन्मना शुम्भानस्तन्वस्वाम्। कविर्विप्रेण वा वृधे॥ १२॥ ऊर्जो न पातमाहुवे अग्निं पावकशोचिषम्। अस्मिन् यज्ञे स्वध्वरे॥ १३॥ स नो मित्र महस्त्व-मग्ने शुक्रेण शोचिषा। देवैरा सत्सि बर्हिषि॥ १४॥ यो अग्निं तन्वोद मे देवं मर्त्यः स पर्य्यति। तस्मा इद्दीदद्वसुम्॥ १५॥ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वति॥ १६॥ उदग्ने शुचयस्तव शुक्राभ्राजन्त ईरते। तव ज्योतींष्यर्च्चयः॥ १७॥ ईशिषे वार्य्यस्य हि दात्रस्याग्ने

स्वर्पतिः। स्तोतास्यां तव शर्मणि ॥ १८ ॥ त्वामग्ने मनीषिणस्त्वां हिन्वन्ति चित्तिभिः। त्वां वर्द्धन्तु नो गिरः ॥ १९ ॥ अदब्धस्य स्वधावतो दूतस्य रेभतः सदा। अग्नेः सख्यं वृणीमहे ॥ २० ॥ अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः। शुचीरोचत आहुतः ॥ २१ ॥ उत त्वा धीतयो मम न्तिुगरो वर्द्धं विश्वहा। अग्नेः सख्यस्य बोधिनः ॥ २२ ॥ यदग्ने स्यामहं त्वं त्वं वाघ्यास्या अहम्। स्युष्टे सत्या इहाशिषः ॥ २३ ॥ वसुर्वसुपतिर्हिंकमस्यग्ने विभावसुः। स्याम ते सुमतावपि ॥ २४ ॥ अग्ने धृतव्रताय ते समुद्रायेव सिन्धवः। गिरो वाश्रास ईरते ॥ २५ ॥ युवानं विश्पतिं कविं विश्वादं पुरुवेपसम्। अग्निं शुम्भामि मन्मभिः ॥ २६ ॥ यज्ञानां रथ्ये वयं तिग्मं जम्भाय वीलवे। स्तोमैरिषेमाग्नये ॥ २७ ॥ अयमग्ने त्वे अपि जरिताभू तुसन्त्य। तस्मै पावक मृलय ॥ २८ ॥ धीरोह्यस्यद्मसद्विप्रो न जागृविः सदा। अग्ने दीदयसि द्यवि ॥ २९ ॥ पुराग्ने दुरितेभ्यः पुरा मृध्रेभ्यः कवे। प्र ण आयुर्वसो तिर ॥३०॥ ( ऋ० ८म० ४४सू० )

स्कन्दस्य, प्रातर्युजेत्यादिकस्य पञ्चदशर्चस्य कुजाधिदैवतस्कन्दसूक्तस्य मेधातिथिऋषिर्गायत्री छन्द स्कन्दो देवता तत्प्रीतये जपे वि०। ओं प्रातर्युजा वि बोधयाश्विनावेह गच्छताम्। अस्य सोमस्य पीतये ॥ १ ॥ या सुरथा रथीतमोभा देवा दिविस्पृशा। अश्विना ता हवामहे ॥ २ ॥ या वां कशा मधुमत्यश्विना सुनृतावती। तया यज्ञं मिमिक्षतम् ॥ ३ ॥ न हि वामस्ति दूरके यत्रा रथेन गच्छथः। अश्विना सोमिनो गृहम् ॥ ४ ॥ हिरण्यपाणि मूतये सवितारमुपह्वये। स चेत्ता देवता पदम् ॥ ५ ॥ अपां न पातमवसे सवितारमुपस्तु हि। तस्य व्रतान्युश्मसि ॥ ६ ॥ विभक्तारं हवामहे वसोश्चित्रस्य

राधसः । सवितारं नृचक्षसम् ॥ ७॥ सखाय आ नि षीदत सविता स्तोम्यो नु नः । दाता राधांसि शुम्भति ॥ ८ ॥ अग्ने पत्नीरिहावह देवानामुशतीरुप । त्वष्टारं सोमपीतये ॥ ९ ॥ आग्ना अग्न इहावसे होत्रां यविष्ठ भारतीम् । वरूत्रीं धिषणां वह ॥ १० ॥ अभि नो देवी रवसा महः शर्मणा नृपत्नीः । अच्छिन्नपत्राः सचन्ताम् ॥ ११ ॥ इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये । अग्नायीं सोमपीतये ॥ १२ ॥ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥ १३ ॥ तयोरिद्घृतवत् पयो विप्रा रिहन्ति धीतिभिः । गन्धर्वस्य ध्रुवे पदे ॥ १४ ॥ स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ॥ १५ ॥ ( ऋ० १म० २२सू० )

क्षितेः, मङ्गलप्रत्यधिदैवतपृथिवीसूक्ताभावात् सूक्तस्थानीय-मन्त्रस्य मेधातिथिर्ऋषिर्गायत्री छन्दः पृथिवी देवता तत्प्रीतये जपे वि० । ओं स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ॥ १ ॥ ( ऋ० १म० २२सू० १५ म० )

बुधस्य, उद्बुध्यध्वमित्यादिकस्य द्वादशर्चस्य बुधसूक्तस्य बुध ऋषिस्त्रिष्टुप् छन्दो बुधो देवता बुधप्रीतये जपे वि० । ओं उद्बुध्यध्वं समनसः सखायः समग्निमिन्ध्वं बहवः सनीळाः । दधिक्रामग्निमुषसं च देवीमिन्द्रावतो वसे निह्वये वः ॥ १ ॥ मन्द्रा कृणुध्वं धिय आतनुध्वं नावमरित्रपरणीं कृणुध्वम् । इष्कृणुध्वमायुधारं कृणुध्वं प्राञ्चं यज्ञं प्रणयता सखायः ॥ २ ॥ युनक्त सीरा वियुगा तनुध्वं कृते योनौ वपतेह बीजम् । गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत्सृण्यः पक्वमेयात् ॥ ३ ॥ सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् धीरा देवेषु सुम्नया । निराहावान् कृणोतन संवरत्रा दधातन ॥ ४ ॥ अवतमुद्रिणं वयं सुषेकमनुपक्षितम् । इष्कृताहवमवतं सुवरत्रं सुषेचनम् उद्रिणं

सिञ्चे अक्षितम् ॥ ५ ॥ प्रीणीताश्वान् हितं जयाथ स्वस्तिवाहं रथमित् कृणुध्वम् । द्रोणाहावमवतमश्मचक्रमंसत्रकोशं सिञ्चता नृपाणाम् ॥ ६ ॥ व्रजं कृणुध्वं स हि वो नृपाणो वर्म सीव्यध्वं बहुला पृथूनि । पूरः कृणुध्वमायसीरधृष्टा मा वः सुस्रोच्चमसो दृंहता तम् ॥ ७ ॥ आवो धियं यज्ञियां वर्त ऊतये देवा देवीं यजतां यज्ञियामिह । सा नो दुहीयद्यवसेव गत्वी सहस्रधारा पयसा मही गौः ॥ ८ ॥ आतू षिंच हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः । परिष्वजध्वं दश कक्ष्याभिरुभे धुरौ प्रति वह्निं युनक्त ॥ ९ ॥ उभे धुरौ वह्निरापिब्दमानोऽन्तर्योनेव चरति द्विजानिः । वनस्पतिं वन आस्थापयध्वं नि षू दधिध्वमखनन्त उत्सम् ॥ १० ॥ कपृन्नरः कपृथमुद्दधातन चोदयत खुदत वाजसातये । निष्टिग्र्यः पुत्रमा च्यावयोतय इन्द्रं सबाध इह सोमपीतये ॥ ११ ॥ ( ऋ० १०म० १०१सू० )

विष्णोः, अतो देवा इत्यादिकस्य षडृचस्य बुधाधिदैवत विष्णुसूक्तस्य मेधातिथिर्ऋषिर्गायत्री छन्दो विष्णुर्देवता तत्प्रीतये जपे वि० । ओं अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः ॥ १ ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे ॥ २ ॥ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥ ३ ॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥४॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ ५ ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत् परमं पदम् । ( ऋ० १म० २२सू० )

नारायणस्य, सहस्रशीर्षेत्यादिकस्य षोड़शर्चस्य बुधप्रत्यधिदैवतनारायणसूक्तस्य विष्णुर्ऋषिरन्त्यायास्त्रिष्टुप् शिष्टानामनुष्टुप् छन्दो नारायणो देवता तत्प्रीतये जपे वि० । ओं सहस्र-

शीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृत्वा-त्यतिष्ठद्दशाङ्गुलम्॥ १॥ पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति॥ २॥ एतावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपा-दस्यामृतं दिवि॥ ३॥ त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाभवत् पुनः। ततो विष्वङ् व्यक्रामत् साशनानशने अभि॥ ४॥ तस्माद्विराडजायत विराजो अधिपूरुषः। स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः॥ ५॥ यत्पुरुषेण हविषा देवा यज्ञमत-न्वत। वसन्तो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः॥ ६॥ तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः। तेन देवा अयजन्त साध्या ऋषयश्च ये॥ ७॥ तस्माद् यज्ञात् सर्वहुतः संभृतं पृष-दाज्यम्। पशून् तांश्चक्रे वायव्यानारण्यान् ग्राम्याश्च ये॥ ८॥ तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत॥ ९॥ तस्मादश्वा अजायन्त ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजा-वयः॥ १०॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्। मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते॥ ११॥ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत॥ १२॥ चन्द्रमा मनसो जातश्चक्षोः सूर्य्यो अजायत। मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत॥ १३॥ नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमि-र्दिशः श्रोत्रात् तथा लोकानकल्पयत्॥ १४॥ सप्तास्यासन् परि-धयस्त्रिः सप्त समिधः कृताः। देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम्॥ १५॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥ १६॥ (ऋ० १०म० ९०सू०)

बृहस्पतेः, यस्तस्तम्भेत्यादिकस्य जीवसूक्तस्यैकादशर्चस्य वामदेव ऋषिर्दशम्याजगतीछन्दः शिष्टानां त्रिष्टुप् छन्दो बृहस्पतिर्देवता तत्प्रीतये जपे वि०। ओं यस्तस्तम्भ सहसा वि ज्मो अन्तान् बृहस्पतिस्त्रिषधस्थो रवेण। तं प्रत्नास ऋषयो दीध्यानाः पुरो विप्रा दधिरे मन्द्रजिह्वम्॥ १॥ धुनेतयः सुप्रकेतं मदन्तो बृहस्पते अभि ये नस्ततस्रे। पृषन्तं सुप्रमदब्धमूर्वं बृहस्पते रक्षतादस्य योनिम्॥ २॥ बृहस्पते या परमा परावदत आ त ऋतस्पृशो निषेदुः। तुभ्यं खाता अवता अद्रिदुग्धा मध्वः श्चोतन्त्यभितो विरप्शम्॥ ३॥ बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन्। सप्तास्यस्तुविजातो रवेण वि सप्तरश्मिरधमत्तमांसि॥ ४॥ स सुष्टुभा स ऋक्वता गणेन वलं रुरोज फलिगं रवेण। बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत्॥ ५॥ एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः। बृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम्॥ ६॥ स इद्राजा प्रतिजन्यानि विश्वा शुष्मेण तस्थावभि वीर्येण। बृहस्पतिं यः सुभृतं बिभर्त्ति वल्गूयति वन्दते पूर्वभाजम्॥ ७॥ स इत् क्षेति सुधित ओकसि स्वे तस्मा इला पिन्वते विश्वदानीम्। तस्मै विशः स्वयमेवा नमन्ते यस्मिन् ब्रह्मा राजनि पूर्व एति॥ ८॥ अप्रतीतो जयति सं धनानि प्रतिजन्यान्युत या सजन्या। अवस्यवे यो वरिवः कृणोति ब्रह्मणे राजा तमवन्ति देवाः॥ ९॥ इन्द्रश्च सोमं पिबतं बृहस्पते अस्मिन् यज्ञे मन्दसाना वृषण्वसू। आ वां विशन्त्विन्दवः स्वाभुवोऽस्मे रयिं सर्ववीरं नि यच्छतम्॥ १०॥ बृहस्पत इन्द्र वर्धतं नः सचा सा वां सुमतिर्भूत्वस्मे। अविष्टं धियो जिगृतं पुरन्धीर्जजस्तमर्यो वनुषामरातीः॥ ११॥ (ऋ० ४म० ५०सू०)।

ब्रह्मणः, अग्न आयाहीत्यादिकस्य विंशत्यृचस्य जीवाधिदेवब्रह्मसूक्तस्य भर्गोऽग्निर्ऋषिः प्रगाथश्छन्दः जीवाधिदेवब्रह्मा देवता तत्प्रीतये जपे वि० । ओं अग्न आयाह्यग्निभिर्होतारं त्वा वृणीमहे । आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥ १ ॥ अच्छा हि त्वा सहसा सूनो अङ्गिरः स्रुचश्चरन्त्यध्वरे । ऊर्जोनपातं घृतकेशमीमहेऽग्निं यज्ञेषु पूर्व्यम् ॥ २ ॥ अग्ने कविर्वेधा असि होता पावक यक्ष्यः । मन्द्रो यजिष्ठो अध्वरेष्वीड्यो विप्रेभिः शुक्रमन्मभिः ॥ ३ ॥ अद्रोघमावहो शतो यविष्ठ्यदेवाँ अजस्रवीतये । अभिप्रयांसि सुधिता वसोगहि मदस्वधीतिभिर्हितः ॥ ४ ॥ त्वमित् सप्रथा अस्यग्ने त्रातर्ऋतस्कविः । त्वां विप्रासः समिधान दीदिव आ विवासन्ति वेधसः ॥ ५ ॥ शोचाशोचिष्ठ दीदिहि विशे मयो रास्व स्तोत्रे महाँ असि । देवानां शर्मन्मम सन्तु सूरयः शत्रूषाहः स्वग्नयः ॥ ६ ॥ यथाचिद्वृद्ध मतसमग्ने संजूर्वसित्क्षमि । एवा दह मित्रमहो यो अस्म ध्रुरदुर्मन्माकश्च वेनति ॥ नो७ ॥ मा मर्त्ताय रिपवे रक्षस्विने माघशंसाय रीरधः । अस्रेधद्भिस्तरणिभिर्यविष्ठ्यशिवेभिः पाहि पायुभिः ॥ ८ ॥ पाहि नोऽग्न एकया पाह्युत द्वितीयया । पाहि गीर्भिस्तिसृभिरूर्जांपते पाहि चतसृभिर्वसो ॥ ९ ॥ पाहि विश्वस्माद्रक्षसो अराव्णः प्रस्म वाजेषु नोऽव । त्वामिद्धि नेदिष्ठं देवतातय पंनक्षा-आपि महे दधे ॥ १० ॥ आ नो अग्ने वयो वृधं रयिं पावक शंस्यम् । रास्वा चन उपमा ते पुरुस्पृहं सुनीती स्वयशस्तरम् ॥ ११ ॥ येन वंसामपृतनासु शर्द्धतन्तरन्तो अर्य्य आदिशः । स त्वं नो वर्द्धप्रयसा शचीवसो जिन्व धियो वसुविदः ॥ १२ ॥ शिशानो वृषभोऽयमग्निः शृङ्गे दविध्वत् । तिग्मा अस्य हनवो न प्रतिधृषे सुजम्भः सहसो यहुः ॥ १३ ॥

न ह्हि ते अग्ने वृषभ प्रतिधृषे जम्भासो यद्वितिष्ठसे। स त्वं नो होतः सुहुतं हविष्कृधि वंस्वानो वार्य्यापुरु॥ १४॥ शेषे वनेषु मात्रोः सं त्वा मर्त्ता स इन्धते। अतन्द्रोह व्यावहसि हविष्कृत आदिद्देवेषु राजसि॥ १५॥ सप्त होतारस्त्वामिदीलते त्वाग्ने सुत्यजमह्रयम्। भिनत्स्यद्रिं तपसा विशोचिषा प्राग्ने तिष्ठ जना अति॥ १६॥ अग्निमग्निं वो अध्रिगुं हुवेम वृक्तबर्हिषः। अग्निं हितप्रयसः शश्वतीष्वाहोतारं चर्षणीनाम्॥ १७॥ केतेन शर्मन् सचते सुषामण्यग्ने तुभ्यं चिकित्वना। इषण्यया न पुरुरूपमाभर वाजं नेदिष्ठमूतये॥ १८॥ अग्ने जरितर्विश्पतिस्ते पानो देव रक्षसः। अप्रोषिवान् गृहपतिर्महाँ असि दिवस्पायुर्दुरोणयुः॥ १९॥ मा नो रक्ष आवेशीदाघृणीवसो मायातुर्यातुमावताम्। परो गव्यूत्यनिरामय क्षुधमग्ने सेध रक्षस्विनः॥ २०॥ (ऋ० ८ म० ४९ सू०)।

शक्रस्य, जीवप्रत्यधिदैवतेन्द्रस्य सूक्ताभावात् न्द्इन्द्रायेवित्यादिमन्त्रस्य कश्यप ऋषिर्गायत्री छन्दो जीवप्रत्यधिदैवतशक्रो देवता तत्प्रीतये जपे वि०। ओं इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः। ऋतस्य योनिमासदम् (ऋ० ९म० ६४सू० २२म०)।

शुक्रस्य, शुक्रं ते इत्यादिकस्य शुक्रसूक्तस्य चतुर्ऋचस्य भरद्वाज ऋषिर्द्वितीयाया जगती छन्दः शिष्टानां त्रिष्टुप् छन्दः शुक्रो देवता तत्प्रीतये जपे वि०। ओं शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि। विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु॥ १॥ अजाश्वः पशुपा वाजपस्त्यो धियं जिन्वो भुवने विश्वे अर्पितः। अष्ट्रां पूषा शिथिरामुद्वरीवृजत् संचक्षाणो भुवना देव ईयते॥२॥

षास्ते पूषन्नावो अन्तः समुद्रे हिरण्मयीरन्तरिक्षे चरन्ति। ताभिर्यासि दूत्यं सूर्य्यस्य कामेन क्रतश्रव इच्छमानः॥ ३॥ पूषा सुबन्धुर्दिव आ पृथिव्या इळस्पतिर्मघवा दस्मवर्चाः। यं देवासो अददुः सूर्य्यायै कामेन क्रतं तवसं स्वञ्चं॥ ४॥ (ऋ० ६म० ५८सू०)।

इन्द्रस्य, इन्द्रं विश्वा इत्यादिकस्याष्टर्चस्य शुक्राधिदैवतेन्द्रसूक्तस्य जेतृनामको माधुच्छन्दसः ऋषिरनुष्टुप् छन्द इन्द्रो देवता इन्द्रप्रीतये जपे वि०। ओं इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसं गिरः। रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ १॥ सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते। त्वामभि प्र णोनुमो जेतारमपराजितम्॥ २॥ पूर्वीरिन्द्रस्य रातयो न विदस्यन्त्यूतयः। यदी वाजस्य गोमतः स्तोतृभ्यो मंहते मघम् ॥ ३॥ पुरां भिन्दुर्युवा कविरमितौजा अजायत। इन्द्रो विश्वस्य कर्मणो धर्त्ता वज्री पुरुष्टुतः॥ ४॥ त्वं बलस्य गोमतोऽपावरद्रिवो बिलम्। त्वां देवा अविभ्युषस्तुज्यमानास आविषुः॥५॥ तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन्। उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारवः॥ ६॥ मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः। विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर॥ ७॥ इन्द्रमीशानमोजसाभि स्तोमा अनूषत सहस्रं यस्य रातय उत वा सन्ति भूयसीः॥ ८॥ (ऋ० १म० ११सू०)

शच्याः, इमामित्यादिकस्य षडृचस्य शुक्रप्रत्यधिदैवतशचीसूक्तस्य इन्द्राणी ऋषिरन्त्यायाः पञ्चपदा पङ्क्तिः शिष्टानामनुष्टुप् छन्दः शची देवता तत्प्रीतये जपे वि०। ओं इमां खनाम्योषधिं वीरुधं बलवत्तमाम्। यया सपत्नीं बाधते यया संविन्दते पतिम्॥ १॥ उत्तानपर्णे सुभगे देवजूते सहस्वति। सपत्नीं मे पराधम पतिं मे केवलं कुरु॥ २॥ उत्तराहमुत्तर उत्तरेदुत्त-

राभ्यः। अथा सपत्नी या ममाधरा सा धराभ्यः॥ ३॥ नह्यस्या नाम गृह्णामि नो अस्मिन्रमते जने॥४॥ परामेव परावतं सपत्नीं गमयामसि। अहमस्मि सहमानाथ त्वमसि सासहिः॥ ५॥ उभे सहस्वती भूत्वा सपत्नीं मे सहावहै। उपतेधां सहमाना-मभि त्वा धां सहीयसा। मा प्रति मनोवत्सं गौरिव धावतु यथा। वारिव धावतु॥ ६॥ (ऋ० १०म० १४५सू०)

शनेः, आपो हि ष्ठेत्यादिकस्य नवर्चस्य शनिसूक्तस्य सिन्धुद्वीप ऋषिरन्त्ययोरनुष्टुप् शिष्टानां गायत्री छन्दः शनिर्देवता शनिप्रीतये जपे वि०।

यमस्य, परेयिवांसमित्यादिकस्य षोड़शर्चस्य शनैश्चराधिदेवयमसूक्तस्याद्यानां पञ्चानां यम ऋषिः षष्ठ्या आङ्गिरसस्ततस्तिसृणां शङ्खानाम्नौ शिष्टानां यम ऋषिराद्यानां द्वादशानां त्रिष्टूप् ततो द्वयोः पादनिवृत्ता त्रिष्टुप् पञ्चदश्या वृहती षोड़श्या अनुष्टुप् सर्वासां यमो देवता यमप्रीतये जपे वि०। ओं परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनु पस्पशानाम्। वैवस्वतं सङ्गमनं जनानां राजानं हविषा दुवस्य॥ १॥ यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्त्तवा उ। यत्रा नः पूर्वे पितरः परे पुरे नाजज्ञानाः पथ्या अनुस्वाः॥ २॥ मातली-कव्यैर्यमोऽङ्गिरोभिर्वृहस्पतिर्ऋक्वभिर्वावृधानः। यांश्च देवा वावृधुर्ये च देवान् स्वाहान्ये स्वधयान्ये मदन्ति॥ ३॥ इमं यम प्रस्तर माहि सीदाङ्गिरोभिः पितृभिः संविदानः। अत्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व॥ ४॥ अङ्गिरोभिरागहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व। विवस्वन्तं हुवे यः पिता तेऽस्मिन् यज्ञे वर्हिष्या निषद्य॥ ५॥ आङ्गिरसो नः पितरो न वग्वा अथर्वाणो भृगवः सोम्यासः। तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम॥ ६॥

प्रेहि प्रेहि पथिभिः पूर्व्येभिर्यत्रा नः पूर्वे पितरः परेयुः । उभा राजाना स्वधया मदन्ता यमं पश्यामि वरुणञ्च देवम् ॥ ७ ॥ संगच्छस्व पितृभिः संयमेनेष्टापूर्त्तेन परमे व्योमन् । हित्वा यावद्यं पुनरस्तमेहि संगच्छस्व तन्वा सुवर्चाः ॥ ८ ॥ अपेतवीतवि च सर्पतातो अस्मा एतं पितरं लोकमक्रन् । अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्यवसानमस्मै ॥ ९ ॥ अतिद्रव सारमेयौ श्वानौ चतुरक्षौ शवलौ साधुना पथा । अथा न्पितॄँ सुविदत्राँ उपेहि यमेन पेस धमादं मदन्ति ॥ १० ॥ यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथि रक्षी नृचक्षसौ । ताभ्यामेनं परिदेहि राजन्त् स्वस्ति चास्मा अनमीवञ्च धेहि ॥ ११ ॥ उरू णसा वसुतृपा उदङ्वलौ यमस्य दूतौ चरतो जनाँ अनु । तावस्मभ्यं दृशये सूर्य्याय पुनर्दाता वसुमद्येह भद्रम् ॥ १२ ॥ यमाय सोमं सुनुत यमाय जुहुता हविः । यमं ह यज्ञो गच्छत्यग्निदूतो अरं कृतः ॥ १३ ॥ यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत । स नो देवेष्वा यमद्दीर्घमायुः प्रजीवसे ॥ १४ ॥ यमाय मधुमत्तमं राज्ञे हव्यं जुहोतन । इदं नम ऋषिभ्यः पूर्वेभ्यः पूर्वजेभ्यः पथिकृद्भ्यः ॥ १५ ॥ त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद्बृहत् । त्रिष्टुब्गायत्रीच्छन्दांसि सर्वाता यम आहिता ॥ १६ ॥ ( ऋ० १०म १४सू० ) ।

प्रजापतेः, शनैश्चरप्रत्यधिदैवतप्रजापतेः सूक्ताभावात् प्रजापते । इत्यादिकस्य मन्त्रस्य हिरण्यगर्भ ऋषिस्त्रिष्टुप् छन्दः प्रजापतिर्देवता तत्प्रीतये जपे वि० । ॐ प्रजापते इत्यादि ( ६२प० २पं० ) प्राग्वत् ।

राहोः, कया नश्चित्र इत्यादिकस्य नवर्चस्य राहुसूक्तस्य वामदेव ऋषिर्गायत्री छन्दो राहुर्देवता राहुप्रीतये जपे वि० । ओं कया नश्चित्र आ भूवदुती सदा वृधः सखा । कया शचि-

ष्टया वृता ॥ १ ॥ कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः। दृढ़ा चिदा रुजे वसु ॥ २ ॥ अभी षु णः सखीनामविता जरितॄणाम्। शतं भवास्यूतिभिः ॥३॥ अभी न आ ववृत्स्व चक्रं न वृत्तमर्वतः। नियुद्भिश्चर्षणीनाम् ॥ ४ ॥ प्रवता हि क्रतूनामा हा पदेव गच्छसि। अभक्षि सूर्य्ये सचा ॥ ५ ॥ संयत्त इन्द्र मन्यव सं चक्राणि दधन्विरे। अध त्वे अध सूर्य्ये ॥ ६ ॥ उत स्माहि त्वामाहुरिन्मघवानं शचीपते। दातारमविदीधयुम् ॥७॥ उत स्मा सद्य इत् परि शशमानाय सुन्वते। पुरू चिन्मंहसे वसु ॥ ८ ॥ न हि ष्मा ते शतं चन राधो वरन्त आमुरः। न च्यौत्नानि करिष्यतः ॥ ९ ॥ ( ऋ० ४म० ३१सू० )

कालस्य, परं मृत्यवित्यादिकस्य चतुर्ऋचस्य राहुग्रहाधिदेवकालसूक्तस्य सङ्कुसुक ऋषिस्त्रिष्टुप् छन्दः कालो देवता तत्प्रीतये जपे वि०। ओं परं मृत्यो अनुपरेहि पन्थां यस्ते स्व इतरो देव यानात्। चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥ १ ॥ मृत्योः पदं योपयन्तो यदैतद्राघीय आयुःप्रतरं दधानाः। आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवत यज्ञियासः ॥ २ ॥ इमे जीवाविमृतैरावहृत्रं न भूद्भद्रा देवहूतिर्नो अद्य। प्राञ्चो अगाम नृतये हसाय द्राघीयः आयुःप्रतरं दधानाः ॥ ३ ॥ इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतं। शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ॥ ४ ॥ ( ऋ० १०म० १८सू० )

सर्पाणाम्, आयं गौरित्यादिकस्य तृचस्य राहुप्रत्यधिदैवतसर्पसूक्तस्य सर्पराज्ञी ऋषिर्गायत्री छन्दः सर्पा देवताः सर्पप्रीतये जपे वि०। ओं आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः। पितरञ्च प्रयन्त्स्वः ॥ १ ॥ अन्तश्चरति रोचनास्य प्राणादपानती। व्यख्यन्महिषो दिवम् ॥ २ ॥ त्रिंशद्धाम विराजति

वाक्पतङ्गाय धीयते । प्रतिवस्तो रहद्युवि ॥ ३ ॥ ( ऋ० १०म० १८९सू० )

केतूनां, युञ्जन्तीत्यादिकस्य दशर्चस्य केतुसूक्तस्य मधुच्छन्दा ऋषिर्गायत्री छन्दः केतवो देवतास्तत्प्रीतये जपे वि० । ओं युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि ॥ १ ॥ युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा ॥ २ ॥ केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥ ३ ॥ आदह स्वधामनु पुनर्गर्भत्वमेरिरे । दधाना नाम यज्ञियम् ॥ ४ ॥ वीडु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः । अविन्द उस्रिया अनु ॥ ५ ॥ देवयन्तो यथा मति-मच्छा विदद्वसुं गिरः । महामनूषत श्रुतम् ॥ ६ ॥ इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा । मन्दू समानवर्चसा ॥ ७ ॥ अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति । गणैरिन्द्रस्य काम्यैः ॥८॥ अतः परिज्मन्नागहि दिवो वा रोचनादधि । समस्मिन्नृञ्जते गिरः ॥ ९ ॥ इतो वा सातिमीमहे दिवो वा पार्थिवादधि । इन्द्रं महो वा रजसः ॥ १० ॥ ( ऋ० १म० ६सू० )

चित्रगुप्तस्य, सूक्ताभावात् सचित्रेत्यादिचित्रगुप्तमन्त्रस्य भरद्वाज ऋषिस्त्रिष्टुप् छन्दः केत्वधिदैवतचित्रगुप्तो देवता तत्-प्रीतये जपे वि० । ओं स चित्र चित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमं वयोधाम् । चन्द्रं रयिं पुरुवीरं बृहन्तं चन्द्र चन्द्राभि-र्गृणते युवस्व ॥ १ ॥ ( ऋ० ६म० ६सू० ७म० )

ब्रह्मणः, हिरण्यगर्भ इत्यादिकस्य दशर्चस्य केतुप्रत्यधिदैवत-ब्रह्मसूक्तस्य हिरण्यगर्भ ऋषिस्त्रिष्टुप् छन्दो केतुप्रत्यधिदैवत-ब्रह्मा देवता तत्प्रीतये जपे वि० । ओं हिरण्यगर्भः समवर्त्त-ताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १ ॥ य आत्मदवलदा

यस्य विश्व उपासते प्रशिषं यस्य देवाः । यस्य च्छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ २ ॥ यः प्राणतो निमिषतो महित्वे क इद्राजा जगतो बभूव । य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ ३ ॥ यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः । यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥ ४ ॥ येन द्यौरुग्रा पृथिवी च दृढ़ा येन स्वः स्तभितं येन नाकः । यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥ ५ ॥ यं क्रन्दसी अवसातस्तभाने अभ्यैक्षेतां मनसा रेजमाने । यत्राधिसूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥ ६ ॥ आपो ह यद्बृहतीर्विश्वमायन् गर्भं दधाना जनयन्तीरग्निम् । ततो देवानां समवर्त्ततासुरेकः कस्मै देवाय हविषा विधेम ॥ ७॥ यश्चिदापो महिना पर्य्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम् । यो देवेष्वधिदेव एक आसीत् कस्मै देवाय हविषा विधेम ॥ ८ ॥ मा नो हिंसीज्जनिता यः पृथिव्या यो दिवं सत्यधर्मा जजान । यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ॥ ९ ॥ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ १० ॥ ( ऋ० १०म० १२१सू० ) सौकर्य्यायान्यक्रतावपि स्थापनक्रमेणैव सूक्तादिजपः कार्य्यः ।

अथ लोकपालानाम् तत्र विनायकस्य, आतू न इत्यादिकस्य नवर्चस्य विनायकसूक्तस्य कुसीदः काण्व ऋषिर्गायत्री छन्दो विनायको देवता तत्प्रीतये जपे वि० । आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं संगृभाय । महा हस्ती दक्षिणेन ॥ १ ॥ विद्मा हि त्वां तुवि कूर्मिं तुवि देष्णं तुवी मघम् । तुविमात्रमवोभिः ॥ २ ॥ न हि त्वा शूरदेवा न मर्त्तासो दित्सन्तम् ।

भीमेन गां नारयन्ते ॥ ३ ॥ एतो न्विन्द्रस्तवामेशानं वस्वः स्वराजम् । नराधसा महिष्ठन्नः ॥ ४ ॥ प्रस्तोषदुपगासिषच्छ्रुवत् साम गीयमानम् । अभिराधसा जुगुरत् ॥ ५ ॥ आ नो भर दक्षिणेनाभिसव्येन प्रमृश । इन्द्र मा नो वसोर्निर्भाक् ॥ ६ ॥ उपक्रमस्वाभर धृषता धृष्णो जनानाम् । अदाशूष्टरस्य वेदः ॥ ७ ॥ इन्द्र य उ नु ते अस्ति वाजो विप्रेभिः सनित्वः । अस्माभिः सुतं सनुहि ॥ ८ ॥ सद्यो जुवस्ते वाजा अस्मभ्यं विश्वचन्द्राः । वशैश्च मंक्षूजरन्ते ॥ ९ ॥ ( ऋ० ८म० ७०सू० ) ।

दुर्गायाः, सूक्ताभावात् जातवेदसे इत्यादिदुर्गामन्त्रस्य काश्यप ऋषिस्त्रिष्टुप् छन्दो दुर्गा देवता तत्प्रीतये जपे वि० । ओं जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ १ ॥ ( ऋ०१म० ९९सू०१म० ) ।

वायोः, सूक्ताभावात् क्राणा शिशुरित्यादिवायुमन्त्रस्य त्रित ऋषिरुष्णिक् छन्दो वायुर्देवता वायुप्रीतये जपे वि० । ओं क्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम् । विश्वापरिप्रिया भुवदधद्विता ॥ १ ॥ ( ऋ० ९म० १०२सू० १म० ) ।

आकाशस्य, सूक्ताभावात् आदिदित्याद्याकाशमन्त्रस्य वत्स ऋषिर्गायत्री छन्दः आकाशो देवता तत्प्रीतये जपे वि० । ओं आदित् प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवा ॥ १ ॥ ( ऋ० ८म० ६सू० ३०म० ) ।

आश्विनयोः, एषो उषा इत्यादिकस्य पञ्चदशर्चस्याश्विनसूक्तस्य प्रस्कण्व ऋषिर्गायत्री छन्दोऽश्विनौ देवते तत्प्रीतये जपे वि० । ओं एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे वामश्विना बृहत् ॥१॥ या दस्रा सिन्धुमातरा मनोतरा रयीणाम् ।

धिया देवा वसुविदा ॥ २ ॥ वच्यन्ते वां ककुहासो जूर्णाया-
मधि विष्टपि। यद्वां रथो विभिष्पतात् ॥ ३ ॥ हविषा जारो
अपां पिपर्त्ति पपुरिर्नरा:। पिता कुटस्य चर्षणि: ॥ ४ ॥
आदारो वां मतीनां नासत्या मतवचसा। पातं सोमस्य
धृष्णुया ॥ ५ ॥ या न: पीपरदश्विना ज्योतिष्मती तमस्तिर:।
तामस्मे रासाथामिषम् ॥ ६ ॥ आ नो नावा मतीनां यातं
पाराय गन्तवे। युञ्जाथामश्विना रथम् ॥ ७ ॥ अरित्रं वां
दिवस्पृथु तीर्थे सिन्धूनां रथ:। धिया युयुज्र इन्दव: ॥ ८ ॥
दिवस्कण्वास इन्दवो वसु सिन्धूनां पदे। स्वं वव्रिं कुह धित्-
सथ: ॥ ९ ॥ अभूदु भा उ अंशवे हिरण्यं प्रति सूर्य्य:। व्यख्य-
ज्जिह्वया सित: ॥ १० ॥ अभुदु पारमेतवे पन्था ऋतस्य साधुया।
अदर्शि विस्रुतिर्दिव: ॥ ११ ॥ तत्तदिदश्विनो रवो जरिता
प्रति भूषति। मदे सोमस्य पिप्रतो: ॥ १२ ॥ वावसाना
विवस्वति सोमस्य पीत्या गिरा। मनुष्वच्छम्भू आगतम् ॥१३॥
युवोरुषा अनुश्रियं परिज्मनोरुपाचरत्। ऋता वनथो
अक्तुभि: ॥ १४ ॥ उभा पिबतमश्विनोभा न: शर्म यच्छतम्।
अविद्रियाभिरूतिभि: ॥ १५ ॥ ( ऋ० १म० ४६सू० )।

अथ दिक्पालानाम्। तत्रेन्द्रस्य, इन्द्रं विश्वा इत्यादिक-
स्याष्टर्चस्य दिक्पालेन्द्रसूक्तस्य माधुच्छन्दसो जेता ऋषिरनुष्टुप्
छन्द इन्द्रो देवता तत्प्रीतये जपे वि०। ओं इन्द्रं विश्वा
इत्यादि प्राग्वत्। ( १३०पृ० ६पं० )।

वह्नेः, अग्निः सप्तिमित्यादिकस्य सप्तर्चस्य वह्निसूक्तस्य
सौचिकोऽग्निर्ऋषिस्त्रिष्टुप् छन्दः वैश्वानरोऽग्निर्देवता तत्-
प्रीतये जपे वि०। ओं अग्निः सप्तिं वाजम्भरं ददात्यग्नि-
र्वीरं श्रुत्यं कर्मनिष्ठाम्। अग्नी रोदसी विचरत् समञ्जन्नग्नि-
र्नारीं वीरकुक्षिं पुरन्धिम् ॥ १ ॥ अग्नेरप्नसः समिदस्तु

भद्राग्निर्मही रोदसी आविवेश । अग्निरेकं चोदयत् समत्स्वग्निर्वृत्राणि दयते पुरूणि ॥ २ ॥ अग्निर्हत्यं जरतः कर्णमावाग्निरद्भ्यो निरदहज्जारूथम् । अग्निरत्रिं घर्म उरुष्यदन्तरग्निर्नृमेधं प्रजया सृजत् सम् ॥ ३ ॥ अग्निर्दाद्द्रविणं वीरपेशा अग्निरृषिं यः सहस्रा सनोति । अग्निर्दिवि हव्यमाततानाग्नेर्धामानि विभृता पुरुत्रा ॥ ४ ॥ अग्निमुक्थैरृषयो विह्वयन्ते अग्निं नरो यामनि बाधितासः । अग्निं वयो अन्तरिक्षे पतन्तोऽग्निः सहस्रा परियाति गोनाम् ॥ ५ ॥ अग्निं विश ईळते मानुषीर्या अग्निं मनुषो नहुषो विजाताः । अग्निर्गान्धर्वीं पथ्यामृतस्याग्नेर्गव्यूतिर्घृत आनिषत्ता ॥ ६ ॥ अग्नये ब्रह्म ऋभवस्ततक्षुरग्निं महामवोचामा सुवृक्तिम् । अग्ने प्राव जरितारं यविष्ठाग्ने महि द्रविणमायजस्व ॥ ७ ॥ ( ऋ० १०म० ८०सू० ) ।

यमस्य, परेयिवांसमित्यादिकस्य षोडशर्चस्य यमसूक्तस्याद्यानां पञ्चानां यम ऋषिः षष्ठ्या आङ्गिरसस्ततस्तिसृणां शङ्खानाम्नी चतसृणां यम ऋषिर्द्वादशानां त्रिष्टुप् ततो द्वयोः पादनिवृत्ता त्रिष्टुप् पञ्चदश्या बृहती षोडश्या अनुष्टुप् छन्दो यमो देवता यमप्रीतये जपे वि० । ओं परेयिवांसमित्यादि प्राग्वत् ( १३१प० १०पं० ) ।

निरृतिः, सूक्ताभावात् वेत्था हीत्यादि निरृतिमन्त्रस्य व्यश्व ऋषिरुष्णिक् छन्दो निरृतिर्देवता तत्प्रीतये जपे वि० । ओं वेत्था हि निरृतीनां वज्रहस्त परिवृजम् । अहरहः शुन्ध्युः परिपदामिव ॥ १ ॥ ( ऋ० ८म० २४सू० )

वरुणस्य, मोषु वरुणेत्यादिकस्य पञ्चर्चस्य वरुणसूक्तस्य वसिष्ठ ऋषिस्तिसृणां गायत्री अन्त्याया जगती छन्दो वरुणो देवता तत्प्रीतये जपे वि० । ओं मो षु वरुण मृन्मयं गृहं

राजन्नहं गमम्। मृड़ासु क्षत्र मृड़य ॥ १ ॥ यदेमि प्रस्फुरन्निव दृतिर्न ध्मातो अद्रिवः। मृड़ासु क्षत्र मृड़य ॥ २ ॥ क्रत्वः समहदीनता प्रतीपं जगमाशुचे। मृड़ासु क्षत्र मृड़य ॥ ३ ॥ अपां मध्ये तस्थिवांसं तृष्णा विदज्जरितारम्। मृड़ासु क्षत्र-मृडय ॥ ४ ॥ यत् किञ्चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि। अचित्तीयत्तव धर्मा युयोऽपि मस्मानस्तस्मादेनसो देव रीरिषः ॥ ५ ॥ ( ऋ० ७म० ८९सू० )

वायोः, वात आवात्वित्यादिकस्य तृचस्य वायुसूक्तस्य वातायन उलप ऋषिर्गायत्री छन्दो वायुर्देवता तत्प्रीतये जपे वि०। ओँ वात आवातु भेषजं शम्भुमयोभु नो हृदे। प्र ण आयूंषि तारिषत् ॥ १ ॥ उत वात पितासि न उत भ्रातोत नः सखा। स नो जीवा तवे कृधि ॥ २ ॥ यददो वात ते गृहे मृतस्य निधिर्हितः। ततो नो देहि जीवसे ( ऋ० १०म० १८६सू० )

सोमस्य, त्वं सोमेत्यादिकस्य त्रयोविंशत्यृचस्य प्राग्वत् ( ११८प० २१पं० )

ईशानस्य, इमा रुद्रायेत्यादिकस्य प्राग्वत् (११७प० १पं०)

ब्रह्मणः, हिरण्यगर्भ इत्यादिकस्य प्राग्वत् (१३४प० २२पं०)

अनन्तस्य, सहस्रशीर्षेत्यादिकस्य प्राग्वत् (१२५प० २४पं०)

अथ वस्वादीनाम्। तत्र वसूनाम्। सूक्ताभावात् ज्मया इत्यादिकस्य वसुमन्त्रस्य वसिष्ठ ऋषिस्त्रिष्टुप् छन्दो वसवो देवतास्तत्प्रीतये जपे वि०। ओँ ज्मया अत्र वसवो रन्त देवा उरावन्तरीक्षे मर्जयन्त शुभ्राः। अर्वाक्पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य। ( ऋ० ७म० ३९सू० ३म० )

रुद्राणाम्, आ रुद्रास इत्यादिकस्याष्टर्चस्य रुद्रसूक्तस्य श्यावाश्वः ऋषिः सप्तम्यष्टम्योस्त्रिष्टुप् शिष्टानां जगती छन्दो

रुद्रा देवतास्तत्प्रीतये जपे वि० । ओं आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन । इयं वो अस्मत् प्रति हर्य्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे ॥ १ ॥ वाशीमन्त ऋष्टिमन्तो मनीषिणः सुधन्वान इषुमन्तो निषङ्गिणः स्वश्वाः स्थः सुरथाः पृश्निमातरः स्वायुधा मरुतो याथना शुभम् ॥ २ ॥ धूनुथ द्यां पर्वतान् दाशुषे वसु नि वो वना जिहते यामनो भिया । कोपयथ पृथिवीं पृश्निमातरः शुभे यदुग्राः पृषतीरयुग्ध्वम् ॥ ३ ॥ वातत्विषो मरुतो वर्षनिर्णिजो यमा इव सुसदृशः सुपेशसः । पिशङ्गाश्वा अरुणाश्वा अरेपसः प्रत्वक्षसो महिना द्यौरिवोरवः ॥ ४ ॥ पुरुद्रप्सा अञ्जिमन्तः सुदानवस्त्वेषसंदृशो अनवभ्रराधसः । सुजातासो जनुषा रुक्मवक्षसो दिवो अर्का अमृतं नाम भेजिरे ॥ ५ ॥ ऋष्टयो वो मरुतो अंसयोरधि सह ओजो बाह्वोर्वो बलं हितम् । नृम्णा शीर्षस्वायुधा रथेषु वो विश्वा वः श्रीरधि तनूषु पिपिशे ॥ ६ ॥ गोमदश्वावद्रथवत् सुवीरं चन्द्रवद्राधो मरुतो ददा नः । प्रशस्तिं नः कृणुत रुद्रियासो भक्षीय वोऽवसो दैव्यस्य ॥ ७ ॥ हये नरो मरुतो मृड़ता नस्तुवीमघासो अमृता ऋतज्ञाः । सत्यश्रुतः कवयोः युवानो बृहद्गिरयो बृहदुक्षमाणाः ॥ ८ ॥ ( ऋ० ५म० ५७सू० )

आदित्यानाम्, इमा गिर इत्यादिकस्य सप्तदशर्चस्यादित्यसूक्तस्य गृत्समदपुत्रः कूर्म ऋषिस्त्रिष्टुप् छन्द आदित्या देवतास्तत्प्रीतये जपे वि० । ओं इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि । शृणोतु मित्रो अर्य्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः ॥ १ ॥ इमं स्तोमं स क्रतवो मे अद्य मित्रो अर्य्यमा वरुणो जुषन्त । आदित्यासः शुचयो धारपूता अवृजिना अनवद्या अरिष्टाः ॥ २ ॥ त आदित्यास उरवो गभीरा अदब्धासो दिप्सन्तो भूर्यक्षाः । अन्तः पश्यन्ति

वृजिनोत साधु सर्वं राजभ्यः परमा चिदन्ति ॥ ३ ॥ धारयन्त आदित्यासो जगत्स्था देवा विश्वस्य भुवनस्य गोपाः । दीर्घाधियो रक्षमाणा असुर्य्यमृतावानश्चयमाना ऋणानि ॥ ४ ॥ विद्यामादित्या अवसो वो अस्य यदर्य्यमन् भय आ चिन्म-योभु । युष्माकं मित्रावरुणा प्रणीतौ परि श्वभ्रेव दुरितानि वृज्याम् ॥ ५ ॥ सुगो हि वो अर्य्यमन्मित्र पन्था अनृक्षरो वरुण साधुरस्ति । तेनादित्या अधि वोचता नो यच्छता नो दुष्परिहन्तु शर्म ॥ ६ ॥ पिपर्त्तु नो अदिती राजपुत्राति द्वेषां-स्यर्य्यमा सुगेभिः । वृहन्मित्रस्य वरुणस्य शर्मोप स्याम पुरु-वीरा अरिष्टाः ॥ ७ ॥ तिस्रो भूमीर्धारयन् त्रीँरुत द्यून्त्रीणि व्रता विदथे अन्तरेषाम् । ऋतेनादित्या महि वो महित्वं तदर्य्यमन् वरुण मित्र चारु ॥ ८ ॥ त्री रोचना दिव्या धार-यन्त हिरण्ययाः शुचयो धारपूताः । अस्वप्नजो अनिमिषा अदब्धा उरुशंसा ऋजवे मर्त्याय ॥ ९ ॥ त्वं विश्वेषां वरुणासि राजा ये च देवा असुर ये च मर्त्त्याः । शतं नो रास्व शरदो विचक्षेऽश्यामायूंषि सुधितानि पूर्वा ॥ १० ॥ न दक्षिणा विचि-किते न सव्या न प्राचीनमादित्या नोत पश्चा । पाक्या चिद्-वसवो धीर्य्या चिद्युष्मानीतो अभयं ज्योतिरश्याम् ॥ ११ ॥ यो राजभ्य ऋतनिभ्यो ददाश यं वर्द्धयन्ति पुष्टयश्च नित्याः । स रेवान् याति प्रथमो रथेन वसुदावा विदथेषु प्रशस्तः ॥ १२ ॥ शुचिरपः सूयवसा अदब्ध उप क्षेति वृद्धवयाः सुवीरः । नकिष्टं घ्नन्त्यन्तितो न दूराद्य आदित्यानां भवति प्रणीतौ ॥ १३ ॥ अदिते मित्र वरुणोत मृड यद्वो वयं चकृमा कच्चिदागः । उर्वश्यामभयं ज्योतिरिन्द्र मा नो दीर्घा अभि नशन्तमिस्राः ॥ १४ ॥ उभे अस्मै पीपयतः समीची दिवो वृष्टिं सुभगो नाम पुष्यन् । उभा क्षयावाजयन्

याति घृत्सुभावर्द्धों भवतः साधु अस्मै ॥ १५ ॥ या वो माया अभिद्रुहे यजत्राः पाशा रिपवे विचृत्ताः । अश्वीव ताँ अति येषं रथेनारिष्टा उरावा शर्मन्त् स्याम ॥ १६ ॥ माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः । मा रायो राजन्त् सुयमादव स्थां बृहद्वदेम विदथे सुवीराः ॥ १७ ॥ ( ऋ० २म० २७सू० )

मरुद्गणानाम्, मरुतो यस्य हीत्यादिकस्य दशर्चस्य मरुद्गण-सूक्तस्य गोतम ऋषिर्गायत्री छन्दो मरुतो देवतास्तत्प्रीतये जपे वि० । ओं मरुतो यस्य हि क्षये पाथादिवो विमहसः । स सुगोपातमो जनः ॥ १ ॥ यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मतीनाम् । मरुतः शृणुता हवम् ॥ २ ॥ उत वा यस्य वाजिनोऽनु विप्रमतक्षत । स गन्ता गोमति व्रजे ॥ ३ ॥ अस्य वीरस्य बर्हिषि सुतः सोमो दिविष्टिषु । उक्थं मदश्च शस्यते ॥ ४ ॥ अस्य श्रोषन्त्वा भुवो विश्वा यश्चर्षणीरभि । सूरं चित् सस्रुषीरिषः ॥ ५ ॥ पूर्वीभिर्हि ददाशिम शरद्भिर्मरुतो वयम् । वचोभिश्चर्षणीनाम् ॥ ६ ॥ सुभगः स प्रयज्यवो मरुतो अस्तु मर्त्यः । यस्य प्रयांसि पर्षथ ॥ ७ ॥ शशमानस्य वा नरः स्वेदस्य सत्यशवसः । विदा कामस्य वेनतः ॥ ८ ॥ यूयं तत् सत्यशवस आविष्कर्त्त महित्वना । विध्यता विद्युता रक्षः ॥ ९ ॥ गूहता गुह्यं तमो वि यात विश्वमत्रिणम् । ज्योतिष्कर्त्ता यदुश्मसि ॥ १० ॥ ( ऋ० १म० ८६सू० )

ब्रह्मणः, हिरण्यगर्भ इत्यादिकस्य प्राग्वत् (१३४प० २२पं०)

अच्युतस्य, सहस्रशीर्षेत्यादिकस्य प्राग्वत् (१२५प० २४पं०)

ईशस्य, आ ते पितरित्यादिकस्य पञ्चदशर्चस्य ईशसूक्तस्य गृत्समद ऋषिस्त्रिष्टुप् छन्द ईशो देवता तत्प्रीतये जपे वि० । ओं आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्य्यस्य संदृशो युयोथाः ।

अभि नो वीरो अर्वति क्षमेत प्रजायेमहि रुद्र प्रजाभिः ॥ १ ॥
त्वादत्तेभी रुद्र शंतमेभिः शतं हिमा अशीय भेषजेभिः। व्यस्म-
द्द्वेषो वितरं व्यंहो व्यमी वाश्चातयस्वा विषूची ॥ २ ॥ श्रेष्ठो
जातस्य रुद्र श्रियासि तवस्तमस्तवसां वज्रबाहो। पर्षि णः
पारमंहसः स्वस्ति विश्वा अभीती रपसो युयोधि ॥ ३ ॥ मा
त्वा रुद्र चुक्रुधामा नमोभिर्मा दुष्टुती वृषभ मा सहूती। उन्नो
वीराँ अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमि ॥ ४ ॥
हवीमभिर्हवते यो हविर्भिरव स्तोमेभी रुद्रं दिषीय। ऋदूदरः
सुहवो मा नो अस्यै बभ्रुः सुशिप्रो रीरधन्मनायै ॥ ५ ॥ उन्मा
ममन्द वृषभो मरुत्वान् त्वक्षीयसा वयसा नाधमानम्।
घृणीव च्छायामरपा अशीया विवासेयं रुद्रस्य सुम्नम् ॥ ६ ॥
क्वस्य ते रुद्र मृळयाकुर्हस्तो यो अस्ति भेषजो जलाषः। अप-
भर्त्ता रपसो दैवस्याभी नु मा वृषभ चक्षमीथाः ॥ ७ ॥ प्र
बभ्रवे वृषभाय श्वितीचे महो महीं सुष्टुतिमीरयामि। नमस्या
कल्मलीकिनं नमोभिर्गृणीमसि त्वेषं रुद्रस्य नाम ॥ ८ ॥
स्थिरेभिरङ्गैः पुरुरूप उग्रो बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः।
ईशानादस्य भुवनस्य भूरेर्न वा उ योषद्रुद्रादसुर्य्यम् ॥ ९ ॥
अर्हन् बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपम्।
अर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्र त्वदस्ति ॥ १० ॥
स्तुहि श्रुतं गर्त्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम्। मृळा
जरित्रे रुद्रस्तवानोऽन्यं ते अस्मन्नि वपन्तु सेनाः ॥ ११ ॥
कुमारश्चित् पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम्। भूरे-
र्दातारं सत्पतिं गृणीषे स्तुतस्त्वं भेषजा रास्यस्मे ॥ १२ ॥ या
वो भेषजा मरुतः शुचीनि या शंतमा वृषणो या मयोभु।
यानि मनुरवृणीता पिता नस्ता शञ्च योश्च रुद्रस्य वश्मि ॥ १३ ॥
( ऋ० २म० ३३सू० )।

अर्कस्य, चित्रं देवानामित्यादिकस्य षडृचस्यार्कसूक्तस्य कुत्स ऋषिस्त्रिष्टुप् छन्दोऽर्को देवता तत्प्रीतये जपे वि० । ओं चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य्य आत्मा जगतस्तस्थुषश्च ॥१॥ सूर्य्यो देवीमुषसं रोचमानां मर्य्यो न योषामभ्येति पश्चात् । यत्रा नरो देवयन्तो युगानि वितन्वते प्रति भद्राय भद्रम् ॥ २ ॥ भद्रा अश्वा हरितः सूर्य्यस्य चित्रा एतग्वा अनुमाद्यासः । नमस्यन्तो दिव आ पृष्ठमस्थुः परि द्यावापृथिवी यन्ति सद्यः ॥ ३ ॥ तत् सूर्य्यस्य देवत्वं तन्महित्वं मध्या कर्त्तोर्विततं संजभार । यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥ ४ ॥ तन्मित्रस्य वरुणस्याभिचक्षे सूर्य्यो रूपं कृणुते द्योरुपस्थे । अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः संभरन्ति ॥ ५ ॥ अद्या देवा उदिता सूर्य्यस्य निरंहसः पिपृता निरवद्यात् । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥६॥ ( ऋ० १म० ११५सू० )

वनस्पतिः, वनस्पते इत्यादिकस्य त्र्यृचस्य वनस्पतिसूक्तस्य गर्ग ऋषिस्त्रिष्टुप् छन्दो वनस्पतिर्देवता तत्प्रीतये जपे वि० । ओं वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः । गोभिः संनद्धो असि वीलयस्वास्थाता ते जयतु जेत्वानि ॥ १ ॥ दिवस्पृथिव्याः पर्य्योज उद्भृतं वनस्पतिभ्यः पर्य्याभृतं सहः । अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्रं हविषा रथं यज ॥ २ ॥ इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः । सेमां नो हव्यदातिं जुषाणो देव रथ प्रतिहव्या गृभाय ॥ ३ ॥ ( ऋ० ६म० ४७सू० २६, २७, २८म० )

अत्रैव काले द्वारपालाः स्वस्वशाखोक्तशान्तिसूक्तादिकं पठेयुः । तानि चाग्रे वक्ष्यन्ते । एवं जापकद्वारपालाभ्यां सूक्ता-

दिषु जतेषु होता उत्तराङ्गं कर्म कुर्य्यात्। यथा यदस्येति मन्त्रस्य हिरण्यगर्भ ऋषिरतिष्टतिश्छन्दः स्विष्टकृदग्निर्देवता स्विष्टकृ-द्धोमे वि०। ओं यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टत् स्विष्टकृद्विद्वान् सर्वं स्विष्टं सुहुतं करोतु मे। अग्नये स्विष्टकृते सुहुतकृते सर्वप्रायश्चित्ताहुतीनां व्यासानां संवर्द्धयित्रे सर्वान्नः कामान् संवर्द्धय स्वाहा। इदमग्नये स्विष्टकृते न मम। प्रागुदग्वा जुहोति। तत इध्मबन्धनीरज्जुं विस्रस्य स्रुवस्रुचोर्लेपं प्रोक्ष्य ओं रुद्राय स्वाहेति हुत्वा वह्नौ क्षिपेत्। एवं परिस्तर-णानि तूष्णीं वह्नौ क्षिपेत्। ततः सङ्कल्पपूर्वकं प्रायश्चित्तहोमः। यथा। अयाश्चाग्ने इत्यस्य वामदेव ऋषिः पङ्क्तिश्छन्दो-ऽयोऽग्निर्देवता प्रायश्चित्तहोमे वि०। ओं अयाश्चाग्नेऽस्यनभि-शस्त्ययाश्च सत्वमित्त्वमया असि। अयसा वयसा कृतोऽयांसं हव्यमोहिषेऽया नो धेहि भेषजं स्वाहा इदयसेऽग्नये न मम। अतो देवा इत्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दोऽग्निर्देवता प्रायश्चित्तहोमे वि०। ओं अतो देवा अवन्तु नो यतो विष्णु-र्विचक्रमे। पृथिव्याः सप्तधामभिः स्वाहा इदं देवेभ्यो न मम। इदं विष्णुरित्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दो विष्णुर्देवता प्रायश्चित्तहोमे वि०। ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे स्वाहा इदं विष्णवे न मम। महाव्याहृतीनां व्यस्तसमस्तानां परमेष्ठी प्रजापतिर्ऋषिर्दैवी गायत्री दैव्युष्णिक् दैव्यनुष्टुप् दैवी बृहती छन्दांसि अग्निवायु-सूर्य्यप्रजापतयो देवताः प्रायश्चित्तहोमे वि०। ओं भूः स्वाहा इदमग्नये न मम। ओं भुवः स्वाहा इदं वायवे न मम। ओं स्वः स्वाहा इदं सूर्य्याय न मम। ओं भूर्भुवः स्वाहा इदं इदं प्रजापतये न मम। ओं विश्वेभ्यो देवेभ्यः स्वाहा इति ससंस्रवं हुत्वा अनाज्ञातमिति द्वाभ्यां जुहुयात्। अनाज्ञात-

मित्यादिकयोर्हिरण्यगर्भ ऋषिरनुष्टुप् छन्दोऽग्निर्देवता ज्ञाताज्ञातदोषपरिहारार्थं होमे वि०। ओं अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथः। अग्ने तदस्य कल्पय त्वं हि वेत्थ यथायथं स्वाहा इदमग्नये न मम। ओं पुरुषसम्मितो यज्ञो यज्ञः पुरुषसम्मतः। अग्ने तदस्य कल्पय त्वं हि वेत्थ यथायथं स्वाहा इदमग्नये न मम। ततः कर्मान्तरितकर्मविपर्य्यासकर्मविलोपप्रायश्चित्तार्थं त्वं नोऽग्ने सत्वं नोऽग्ने इत्येताभ्यां होष्ये इति सङ्कल्प्य जुहुयात्। त्वन्नोऽग्ने इत्येतयोर्वामदेव ऋषिस्त्रिष्टुप् छन्दोऽग्नीवरुणौ देवते प्रायश्चित्तहोमे वि०। ओं त्वन्नोऽग्ने वरुणस्य विद्वान् देवस्य हेडोऽवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् (ऋ० ४म० १सू० ४म०) स्वाहा इदमग्नीवरुणाभ्याम्। ओं सत्वं नोऽग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अवयक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न एधि (ऋ० ४म० १सू० ५म०) स्वाहा इदमग्नीवरुणाभ्यां न मम। स्वराक्षरपदहस्तवर्णलोपप्रायश्चित्तार्थं यद्वो देवा इत्यस्य प्रजापतिर्ऋषिर्जगती छन्दोऽग्निर्देवता प्रायश्चित्तहोमे वि०। ॐ यद्वो देवाश्चकृम जिह्वया गुरुमनसो वा प्रयुती देवहेडनम्। अरावायो नोऽभिदुच्छुनायते तस्मिन् तदेनो वसवो निधेतन स्वाहा इदमग्नये न मम। तत आचार्य्यः (१४६प० २प०) प्रागुक्तेन अनाज्ञातमित्यादिनाज्यं हुत्वा चतस्रो व्याहृतीर्जुहुयात्। तद्बोऽग्न्यायतनस्य समन्तात् दशसु दिक्षु दिक्पालेभ्यो माषभक्तबलिं दद्यात्। यथा ऋष्यादिस्मरणपूर्वकं प्रागुक्तदिक्पालादिहोममन्त्रानुक्त्वा ओं इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एष माषभक्तिबलिर्नम इति दत्त्वा प्रार्थयेत। भो इन्द्र दिशं रक्ष बलिं भुङ्क्ष्व मम यजमानस्य वा सकुटुम्बस्यायुः-

कर्त्ता क्षेमकर्त्ता शुभकर्त्ता शान्तिकर्त्ता पुष्टिदस्तुष्टिदो भवेति पुष्पाक्षतजलानि पूर्वाभिमुखः क्षिपेत्। एवमाग्नेय्यादिष्वपि। ततः साधिदेवतप्रत्यधिदैवतग्रहेभ्यो वलिं दद्यात्। तत्र प्रागुक्त-होममन्त्रमुच्चार्य्य एष माषभक्तवलिः साङ्गायेत्याद्यनन्तरमीश्व-राग्निरूपाधिदैवतप्रत्यधिदैवतसूर्य्यायेत्यधिकं प्रयोज्यम्। ततः प्रार्थनादि पूर्ववत्। स्वस्वमण्डलसमीपे पुष्पाक्षतादिप्रक्षेपः। एवं विनायकादीनामपि वलिं दत्त्वा प्रार्थयेत। पुष्पादिप्रक्षे-पस्तु प्रागुक्तस्थापनस्थानसमीपे इति विशेषः। ततो द्वितीये-ऽह्नि पुण्याहवाचनानन्तरं धामन्तमिति समुद्रादित्यनेन वा पूर्णाहुतिं जुहुयात्। यथा धामन्त इत्यस्य वामदेव ऋषि जगती छन्द आपो देवताः पूर्णाहुतिहोमे वि०। ओं धामन्ते विश्वं भुवनमधि श्रितमन्तःसमुद्रे हृद्यन्तरायुषि। अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम् (ऋ०४म० ५८सू० ११म०) स्वाहा इति घृतपुष्पफलयुतामनासीनः पूर्णा-हुतिं दद्यात्। विस्तरभयादन्यन्नोक्तम् ततः पूर्णपात्रं ब्रह्म-दक्षिणां दद्यात्। ततः पूर्णपात्रं वर्हिषि निधाय आपोऽस्मा-नित्यस्य देवश्रवस ऋषिस्त्रिष्टुप् छन्दः आपो देवता मार्जने वि०। ओं आपोऽस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु विश्वं हि विप्रं प्रवहन्ति देवीरुदिताभ्यः शुचिरापूत एमि। इदमाप इत्यस्य सिन्धुद्वीप ऋषिरनुष्टुप् छन्द आपो देवता मार्जने वि०। इदमापः प्रवहत यत्किञ्च दुरितं मयि। यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम्। (ऋ० १म० २३सू० २२म०) सुमित्रिया न इत्यस्य नारायण ऋषिस्त्रिष्टुप् छन्द आपो देवता मार्जने वि०। ओं सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म। त्रिभिरेतैर्मार्जनं कुर्य्यात्। ततः प्रणीतापात्रोदकं

वर्हिषि निनयेत् । ततः परिस्तरणं विसृज्य समूहनपर्य्युक्षणे पूर्ववत् कुर्य्यादिति ऋग्वेदिनामग्निस्थापनादि ।

अथ यजुर्वेदिनामग्निस्थापनादिविधिरुच्यते । तत्र क्रमः । कुशैर्हस्तमात्रपरिमितां चतुरस्रां कुण्डभूमिं स्थण्डिलभूमिं वा परिसमुह्य तान् कुशान् नैरृत्यां त्यक्त्वा गोमयोदकाभ्यामुपलिप्य कुशेन स्रुवमूलेन वा प्रागग्रा उदक्संस्थाः प्रादेशमात्रास्तिस्रो रेखा उत्तरोत्तरक्रमेण उल्लिख्य तेनैव क्रमेण अनामिकाङ्गुष्ठाभ्यां पांसुमुद्धृत्य कांस्यपात्रेण यथोक्तवह्निमादाय कुशोदके प्रत्यङ्मुखमुपसमाधाय (८८पृ० १८प०) प्राग्वत् ध्यात्वाऽग्निनाम कुर्य्यात् । अत्रैव समये ब्रह्मवरणम् । यथा । कर्त्तव्येऽस्मिन् मत्सङ्कल्पितहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्मकरणाय ब्रह्माणं यथानामगोत्रं भवन्तमहं वृणे इत्युक्ते ओं वृतोऽस्मीति प्रतिवचनम् । ततोऽग्नेर्दक्षिणतः शुद्धमासनं दत्त्वा तदुपरि प्रागग्रान् कुशानास्तीर्य्य ब्रह्माणमग्निप्रदक्षिणक्रमेणानीय ओं अत्र त्वं मे ब्रह्मेत्युक्तवति यजमाने ओं भवानीति तेनोक्ते तमासनोपर्य्युपवेशयेत् । ततो ग्रहयज्ञादौ ग्रहाद्यावाहनपूजे समाप्य प्रकृते चात्रैव काले साहसं वह्निमावाह्याभ्यर्च्य चरुं (८९ पृ०) प्राग्वत् पचेत् । ततः कुशकण्डिकां कुर्य्यात् । यथा । वारणं मृण्मयं वा प्रणीतापात्रं वारिणापूर्य्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्य अग्नेरुत्तरतः कुशोपरि निदध्यात् । ततः परिस्तरणं कुर्य्यात् । तद्यथा प्रभूतवर्हिषश्चतुरो भागान् विधायैकैकभागेन चतुर्षु दिक्षु अग्रेण मूलमाच्छाद्य वारत्रयं परिस्तरेत् । यथा प्राच्यामाग्नेयादीशानपर्य्यन्तम्, दक्षिणस्यां ब्रह्मस्थानादग्निपर्य्यन्तम्, पश्चिमायां नैरृताद्वायव्यान्तम्, उत्तरदिशि अग्नितः प्रणीतापर्य्यन्तम्, आस्तरेत् । ततः पात्राण्यासादयेत् । यथा अग्नेरुत्तरतः पश्चिमदिशि पवित्र-

च्छेदनार्थं त्रीणि कुशपत्राणि, पवित्रकरणार्थं साग्रमनन्तर्गर्भि कुशपत्रद्वयं प्रादेशमितं, वारुणं तैजसं वा प्रोक्षणीपात्रम्, आज्यस्थालीं ताम्रमयीं, संमार्जनकुशांस्त्रीन्, वेणीरूपो पय-मनकुशांस्त्रीन्, प्रादेशमात्रास्तिस्रः पालाशीः समिधः, खादिरं स्रुवं, गव्यमाज्यं, षट्पञ्चाशदधिकशतद्वयमुष्टिपरिमिततण्डुल-पूर्णं सूर्पादिपात्रं, दक्षिणार्थं हिरण्यादिकं च पवित्रच्छेदनार्थ-कुशानां पूर्वस्यां क्रमेण उदगग्रं, स्थापयेत्। ततः पवित्र-च्छेदनकुशैः द्वौ साग्रौ प्रादेशमितौ कुशौ मूलदेशे छित्त्वा पवित्रे संपाद्य प्रणीतोदकेनासिच्य प्रोक्षणीपात्रे निधाय द्वाभ्या-मनामिकाङ्गुष्ठाभ्यां मूलाग्रे पवित्रे धृत्वा त्रिरुत्पवनं कुर्य्यात्। ततः प्रणीतोदकेन प्रोक्षणं, प्रोक्षणीजलेन चासेचनं कृत्वा अग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रे निदध्यात्। तत आज्य-स्थाल्यामाज्यं दत्त्वाग्नावधिश्रित्य ज्वलत्तृणादिना प्रदक्षिण-क्रमेण हविर्वेष्टयित्वा अग्नौ तदुल्मूकं क्षिपेत्। ततः स्रुवं प्रागग्रमधोमुखमग्नौ त्रिःप्रताप्य संमार्जनकुशानामग्रैरन्तरतः, मूलैर्बाह्यतः, संमृज्य प्रणीतोदकेनाभ्युक्ष्य पुनःप्रताप्य स्वदक्षि-णतः कुशोपरि निधायाज्यमुदगुद्वास्य पवित्राभ्यामुत्पूय प्रोक्ष्यापद्रवं निरस्य प्रोक्षणीश्चोत्पूयोपयमनकुशानादाय सव्य-हस्ते धृत्वा तिष्ठन् प्रजापतिं मनसा ध्यायन् ब्रह्मणान्वारब्ध-स्तूष्णीमग्नौ सघृतास्तिस्रः समिधः क्षिपेत्। ततः सपवित्र-प्रोक्षण्युदकेन प्रदक्षिणक्रमेणाग्निं पर्य्युक्ष्य पवित्रे प्रणीतापात्रे निधाय संस्रवधारणार्थं प्रोक्षणीपात्रं प्रणीताग्न्योर्मध्ये निद-ध्यात्। अथ दक्षिणं जानु पातयित्वोपविष्टो हृदि सव्यहस्तं दत्त्वा स्रुवेणाज्यं गृहीत्वा जुहुयात्। सर्वाहुतिषु हुतशेषस्य घृतस्य प्रोक्षणीपात्रे प्रक्षेपः। ओं प्रजापतये स्वाहा इदं प्रजा-पतये एवं सर्वत्र। प्रजापतिं मनसा ध्यात्वा सततमृजुप्राञ्चं

पूर्वाघारमग्नौ समिद्धे उत्तरतो जुहुयात्। एवमेवोत्तराघारम् ओं इन्द्राय स्वाहा इदमिन्द्रायेति वह्नेर्दक्षिणतो जुहुयात् इत्याघारः। तत आग्नेयमाज्यभागम् ओं अग्नये स्वाहा इदमग्नये इति उत्तरपूर्वार्द्धे, ओं सोमाय स्वाहा इदं सोमायेति दक्षिणपूर्वार्द्धे, जुहुयात् इत्याघाराज्यभागौ। यद्वा समिद्धतमेऽग्निप्रदेशे सर्वाहुतिप्रक्षेपः कार्य्यः। भूरित्यस्य प्रजापतिर्ऋषिर्देवी गायत्री छन्दः अग्निर्देवता महाव्याहृतिहोमे वि०। ओं भूः स्वाहा इदं भूः। भुवरित्यस्य प्रजापतिर्ऋषिर्देव्युष्णिक् छन्दो वायुर्देवता महाव्याहृतिहोमे वि०। ओं भुवः स्वाहा इदं भुवः। स्वरित्यस्य प्रजापतिर्ऋषिर्देव्यनुष्टुप् छन्दः सूर्य्योदेवता महा० वि०। ओं स्वः स्वाहा इदं स्वः। ततः प्रधानहोमः प्राग्वत् संकल्पं विधायाग्निनाम कृत्वावाह्यार्चयेत्। तत एकैकाः प्रत्येकं चर्वाहुतीर्दत्त्वा समिदादिहोमः। तत्र ग्रहाणां वक्ष्यमाणनामकवह्निमावाह्य संपूज्यार्कादिसमिदादिभिरार्षादिस्मरणपूर्वकं वक्ष्यमाणमन्त्रैः प्रणवादि स्वाहान्तैर्होमः कार्य्यः।

अथ ग्रहादीनामाहुतिमन्त्राः। तत्र सूर्य्यस्य आ कृष्णेनेत्यस्य हिरण्यस्तूप ऋषिस्त्रिष्टुप् छन्दः सूर्य्यो देवता तत्प्रीतये कपिलाग्नावार्कसमिद्धोमे वि०। आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्। (य० ३३, अ० ४३) स्वाहा इदं सूर्य्याय।

सोमस्य, इमं देवा इत्यस्य वरुण ऋषिरत्यष्टिश्छन्दः सोमो देवता तत्प्रीतये पिङ्गलाग्नौ पालाशसमिद्धोमे वि०। इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रियस्येन्द्रियाय। इममसुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजा। (य० ९, अ० ४० ) स्वाहा इदं सोमाय।

भौमस्य, अग्निरित्यस्य विरूपाच ऋषिर्गायत्री छन्दो भौमो देवता तत्प्रीतये धूमकेत्वग्नौ खादिरसमिद्धोमे वि०। अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपां रेतांसि जिन्वति। (य०३, अ०१२) स्वाहा इदं भौमाय।

बुधस्य, उद्बुध्यस्वेत्यस्य परमेष्ठी ऋषिस्त्रिष्टुप् छन्दो बुधो देवता तत्प्रीतये जठराग्नावापामार्गसमिद्धोमे वि०। उद्बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्त्ते संसृजेथामयञ्च। अस्मिन् सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत (य० १५, अ० ५४) स्वाहा इदं बुधाय।

बृहस्पतेः, बृहस्पते इत्यस्य गृत्समद ऋषिस्त्रिष्टुप् छन्दो बृहस्पतिर्देवता तत्प्रीतये शिखिवह्नावाश्वत्थसमिद्धोमे वि०। बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम्। (य० २६ अ, ३) स्वाहा इदं बृहस्पतये।

शुक्रस्य, अन्नादित्यस्याग्निसरस्वतीन्द्रा ऋषयोऽतिजगती छन्दः शुक्रो देवता तत्प्रीतये हाटकाग्नावौडुम्बरसमिद्धोमे वि०। अन्नात् परिस्रुतो रसं ब्रह्मणा व्यपिवत् क्षत्रं पयः सोमं प्रजापतिः। ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु। (य० १९ अ०, ७५) स्वाहा इदं शुक्राय।

शनेः, शन्नो देवीरित्यस्य दध्यङ्ङाथर्वण ऋषिर्गायत्री छन्दः शनिर्देवता तत्प्रीतये महातेजोऽग्नौ शमीसमि० वि०। शन्नो देवीरभिष्टय आपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः। (य० ३६ अ०, १२) स्वाहा इदं शनये।

राहोः, कयान इत्यस्य वामदेव ऋषिर्गायत्री छन्दो राहुर्देवता तत्प्रीतये हुताशनाग्नौ दूर्वासमिद्धोमे वि०। कया

नश्चित्र आभुवदूती सदावृधः सखा। कया शचिष्ठया वृता।
( य० २७ अ०, ३९ ) स्वाहा इदं राहवे।

केतूनाम्, केतुं कृण्वन्नित्यस्य मधुच्छन्दा ऋषिरनिरुक्ता गायत्री छन्दः केतवो देवतास्तत्प्रीतये हुताशनाग्नौ कुशसमिद्धोमे वि०। केतुं कृण्वन्नकेतवे पेशो मर्य्या अपेशसे। समुषद्भिरजायथाः। ( य० २९ अ०, ३७ )

अथाधिदेवानाम्। तत्र सूर्य्याधिदेवशिवस्य, त्र्यम्बकमित्यस्य वसिष्ठ ऋषिरनुष्टुप् छन्दो रुद्रो देवता तत्प्रीतये शतमङ्गलाग्नौ पलाशादिसमिद्धोमे वि०। त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ( य० ३ अ०, ६० ) स्वाहा इदं शिवाय।

चन्द्राधिदेवोमायाः, श्रीश्चेत्यस्य नारायण ऋषिस्त्रिष्टुप् छन्द उमा देवता तत्प्रीतये पलाशादिसमिद्धोमे वि०। श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण ( य० ३१ अ, २२ ) स्वाहा इदमुमायै।

भौमाधिदेवस्कन्दस्य, यदक्रन्द इत्यस्य भार्गवो जमदग्निर्दीर्घतमाश्च ऋषी त्रिष्टुप् छन्दः स्कन्दो देवता तत्प्रीतये० वि०। यदक्रन्दः प्रथमं जायमान उद्यन्त् समुद्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् ( य० २९ अ०, १२ ) स्वाहा इदं स्कन्दाय।

बुधाधिदेवनारायणस्य, विष्णोरराटमित्यस्य प्रजापतिर्ऋषिश्छन्दोऽभावो नारायणो देवता तत्प्रीतये० वि०। विष्णोरराटमसि। विष्णोः श्नप्त्रे स्थः। विष्णोः स्यूरसि। विष्णोर्ध्रुवोऽसि। वैष्णवमसि विष्णवे त्वा ( य० ५ अ०, २१ ) स्वाहा इदं नारायणाय।

जीवाधिदेवब्रह्मण:, आब्रह्मन्नित्यस्य प्रजापतिर्ऋषिश्छन्दोऽभावो ब्रह्मा देवता तत्प्रीतये० वि० । आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर इषव्योऽति व्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामेनिकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् । ( य० २२ अ०, २२ ) स्वाहा इदं ब्रह्मणे ।

शुक्राधिदेवशक्रस्य, सजोषा इत्यस्य विश्वामित्र ऋषिस्त्रिष्टुप् छन्दः शक्रो देवता तत्प्रीतये० वि० । सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान् । जहि शत्रूँरपमृधो नुदस्वाथ भयं कृणुहि विश्वतो नः । ( य० ७ अ०, ३७ ) स्वाहा इदं शुक्राय ।

शनैश्चराधिदेवयमस्य, यमाय त्वेत्यस्य दध्यङ्ङाथर्वण ऋषिश्छन्दोऽभावो यमो देवता तत्प्रीतये० वि० । यमाय त्वाङ्गिरस्वते पितृमते स्वाहा । स्वाहा घर्माय । स्वाहा घर्मः पित्रे ( य० ३८ अ०, ९ ) स्वाहा इदं यमाय ।

राहुग्रहाधिदेवकालस्य, कार्षिरसीत्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दः कालो देवता तत्प्रीतये० वि० । कार्षिरसि । समुद्रस्य त्वाक्षित्या उन्नयामि । समापो अद्भिरग्मत समोषधीभिरोषधीः ( य० ६ अ०, २८ ) स्वाहा इदं कालाय ।

केतुग्रहाधिदेवचित्रगुप्तस्य, चित्रावसो इत्यस्य ऋषभ ऋषिश्छन्दोऽभावश्चित्रगुप्तो देवता तत्प्रीतये० वि० । चित्रावसो स्वस्ति ते पारमशीय स्वाहा इदं चित्रगुप्ताय ।

अथ प्रत्यधिदैवतानाम् । तत्र सूर्य्यप्रत्यधिदैवताग्नेः, अग्निं दूतमित्यस्य विरूपाक्ष ऋषिर्गायत्री छन्दोऽग्निर्देवता तत्प्रीतये० वि । अग्निं दूतं पुरो दधे हव्यवाहमुपब्रुवे । देवाँ आसादयादिह ( य० २२ अ०, १७ ) स्वाहा इदमग्नये ।

सोमप्रत्यधिदैवतानामपाम्, आपो हि ष्ठेत्यस्य सिन्धुद्वीप ऋषिर्गायत्री छन्द आपो देवतास्तत्प्रीतये॰ वि॰ । आपो हि ष्ठा मयो भुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे (य॰ ११ अ॰, ५०) स्वाहा इदमद्भ्यः ।

भौमाधिदैवतपृथिव्याः, स्योनेत्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दः पृथिवी देवता तत्प्रीतये॰ वि॰ । स्योना पृथिवि नो भवा-नृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः (य॰ ३५ अ॰, २१) स्वाहा इदं पृथिव्यै ।

बुधप्रत्यधिदैवतविष्णोः, इदं विष्णुरित्यस्य मेधातिथिर्ऋषि-र्गायत्री छन्दो विष्णुर्देवता तत्प्रीतये॰ वि॰ । इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे। (य॰ ५ अ॰, १५) स्वाहा इदं विष्णवे ।

जीवप्रत्यधिदैवतेन्द्रस्य, इन्द्र आसामित्यस्य प्रजापतिर्ऋषि-स्त्रिष्टुप् छन्द इन्द्रो देवता तत्प्रीतये॰ वि॰ । इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः। देवसेनानामभिभञ्ज-तीनां जयन्तीनां मरुतो यन्त्वग्रम् (य॰ १७ अ॰, ४०) स्वाहा इदमिन्द्राय ।

शुक्राधिदैवतेन्द्राण्याः, अदित्यै इत्यस्य प्रजापतिर्ऋषिश्छ-न्दोऽभाव इन्द्राणी देवता तत्प्रीतये॰ वि॰। अदित्यै रास्नासी-न्द्राण्या उष्णीषः। पूषासि। घर्माय दीष्व (य॰ ३८ अ॰, २) स्वाहा इदमिन्द्राण्यै ।

शनिप्रत्यधिदैवतप्रजापतेः, प्रजापते इत्यस्य हिरण्यगर्भ ऋषिस्त्रिष्टुप् छन्दः प्रजापतिर्देवता तत्प्रीतये॰ वि॰ । प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव। यत् कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् (य॰ १० अ॰, २०) स्वाहा इदं प्रजापतये ।

राहुप्रत्यधिदैवतसर्पाणाम्, नमोऽस्तु सर्पेभ्य इत्यस्य देवा ऋषयोऽनुष्टुप् छन्दः सर्पा देवतास्तत्प्रीतये वि०। नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरीक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः (य० १३ अ०, ६) इदं सर्पेभ्यः।

केतुप्रत्यधिदैवतब्रह्मणः, ब्रह्म जज्ञानमित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो ब्रह्मा देवता तत्प्रीतये० वि०। ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः (य० १३ अ०, ३) स्वाहा इदं ब्रह्मणे।

अथ लोकपालानाम्। तत्र विनायकस्य, गणानामित्यस्य प्रजापतिर्ऋषिश्छन्दोऽभावः विनायको देवता तत्प्रीतये० वि०। गणानां त्वा गणपतिं हवामहे प्रियाणां त्वा प्रियपतिं हवामहे निधीनां त्वा निधिपतिं हवामहे वसो मम। आहमजानि गर्भधमा त्वमजासि गर्भधम् (य०२३, अ०१९) स्वाहा इदं विनायकाय।

दुर्गायाः, अम्बे इत्यस्य प्रजापतिर्ऋषिर्निचृदनुष्टुप् छन्दो दुर्गा देवता तत्प्रीतये० वि०। अम्बे अम्बिके अम्बालिके न मानयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् (य० २३, अ० १८) स्वाहा इदं दुर्गायै।

वायोः, वायो ये इत्यस्य प्रजापतिर्ऋषिर्गायत्री छन्दो वायुर्देवता तत्प्रीतये० वि०। वायो ये ते सहस्रिणो रथासस्तेभिरागहि। नियुत्वान्त्सोमपीतये (य० २७ अ० ३२) स्वाहा इदं वायवे।

आकाशस्य, घृतमित्यस्य मेधातिथिर्ऋषिश्छन्दोऽभाव आकाशो देवता तत्प्रीतये० वि०। घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा। दिशः—

प्रदिशः । आदिशः । विदिशः । उद्दिशः । दिग्भ्यः स्वाहा ( य०६, अ० १९ ) स्वाहा इदमाकाशाय ।

आश्विनयोः, या वामित्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दोऽश्विनौ देवते तत्प्रीतये० वि० । या वां कशा मधुमत्यश्विना सुनृतावती । तया यज्ञं मिमिक्षतम् ( य०७ अ०११ ) स्वाहा इदमश्विनाभ्याम् ।

अथ दिक्पालानां । तत्रेन्द्रस्य, त्रातारमित्यस्य गर्ग ऋषिस्त्रिष्टुप् छन्द इन्द्रो देवता तत्प्रीतये वि० । त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः (य०२० अ०५०) स्वाहा इदमिन्द्राय ।

अग्नेः, अग्निं दूतमित्यस्य विरूपाक्ष ऋषिर्गायत्री छन्दोऽग्निर्देवता तत्प्रीतये० वि० । अग्निं दूतं पुरोदधे हव्यवाहमुपब्रुवे । देवाँ आसादयादिह स्वाहा इदमग्नये ।

यमस्य, यमाय त्वेत्यस्य प्रजापतिर्ऋषिश्छन्दोऽभावो यमो देवता तत्प्रीतये वि० । यमाय त्वाङ्गिरस्वते पितृमते स्वाहा । स्वाहा घर्माय । स्वाहा घर्मः पित्रे स्वाहा इदं यमाय ।

निर्ऋतेः, असुन्वन्तमित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो निर्ऋतिर्देवता तत्प्रीतये० वि० । असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य । अन्यमस्मदिच्छ सात इत्या नमो देवि निर्ऋते तुभ्यमस्तु ( य० १२ अ० ६२ ) स्वाहा इदं निर्ऋतये ।

वरुणस्य, इमं मे इत्यस्य शुनःशेफ ऋषिर्गायत्री छन्दो वरुणो देवता तत्प्रीतये० वि० । इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके ( य० २१ अ० १ ) स्वाहा इदं वरुणाय ।

वायोः, वायो ये इत्यस्य प्रजापतिर्ऋषिर्गायत्री छन्दो वायुर्देवता तत्प्रीतये॰ वि॰। वायो ये ते सहस्रिणो रथासस्तेभिरागहि। नियुत्वाँ सोमपीतये (य॰ २७ अ॰, ३२) स्वाहा इदं वायवे।

सोमस्य, वयं सोमेत्यस्य बन्धुर्ऋषिर्गायत्री छन्दः सोमो देवता तत्प्रीतये॰ वि॰। वयं सोम व्रते तव मनस्तनुषु बिभ्रतः। प्रजावन्तः सचेमहि (य॰ ३ अ॰, ५६) स्वाहा इदं सोमाय।

ईशस्य तमीशानमित्यस्य गौतम ऋषिर्जगती छन्द ईशानो देवता तत्प्रीतये॰ वि॰। तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये (य॰ २५, अ॰, १८) स्वाहा इदमीशानाय।

ब्रह्मणः, ब्रह्म जज्ञानमित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो ब्रह्मा देवता तत्प्रीतये॰ वि॰। ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः (य॰ १३ अ॰ ३) स्वाहा इदं ब्रह्मणे।

अनन्तस्य, नमोऽस्त्वित्यस्य देवा ऋषयोऽनुष्टुप् छन्दोऽनन्तो देवता तत्प्रीतये॰ वि॰। ओं नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरीक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः इदमनन्ताय।

वसूनाम्, सुगाव इत्यस्य देवा ऋषयस्त्रिष्टुप् छन्दः वसवो देवतास्तत्प्रीतये॰ वि॰। सुगा वो देवाः सदना अकर्म य आजग्मेदं सवनं जुषाणाः। भरमाणा वहमाना हवींष्यस्मे धत्त वसवो वसूनि स्वाहा (य॰ ८, अ॰, १८) इदं वसुभ्यः। प्रत्येकदेवतात्वपक्षे, ओं धराय स्वाहा इदं धरायेत्यादिना जुहुयात्। तन्नामानि संख्या च (८॰पृ॰ पं १४) प्रागुक्तानि

रुद्राणाम्, रुद्रा इत्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दो रुद्रा देवतास्तत्प्रीतये० वि०। रुद्राः संसृज्य पृथिवीं बृहज्ज्योतिः समीधिरे। तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते (य०११ अ०, ५४) स्वाहा इदं रुद्रेभ्यः। प्रत्येकदेवतात्वपक्षे प्रणवादिनाममन्त्रेण स्वाहान्तेन जुहुयात्। तन्नामानि संख्या च (९३पृ० १पं०) प्रागुक्तानि।

आदित्यानाम्, यज्ञो देवानामित्यस्य कुत्स ऋषिस्त्रिष्टुप् छन्द आदित्या देवतास्तत्प्रीतये० वि०। यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः। आ वोऽर्वाची सुमतिर्ववृत्यादंहोश्चिद्या वरिवो वित्तरासत्। (य० ८ अ०, ४) स्वाहा इदमादित्येभ्यः। प्रत्येकदेवतात्वपक्षे प्रणवादिनाममन्त्रेण स्वाहान्तेन होमः। तन्नामानि संख्या च ( ९५पृ० ७ पं ) प्रागुक्तानि।

मरुद्गणानाम्, मरुत इत्यस्य प्रजापतिर्ऋषिर्गायत्री छन्दो मरुतो देवतास्तत्प्रीतये० वि०। मरुतो यस्य हि क्षये पाथा दिवो विमहसः। स सुगोपातमो जनः (य०८अ०, ३१) स्वाहा इदं मरुद्भ्यः। प्रत्येकदेवतात्वपक्षे प्रणवादिस्वाहान्तनाममन्त्रेण होमः। तन्नामानि संख्या च ( ९५पृ० २१पं०) प्रागुक्तानि।

ब्रह्मणः, ब्रह्म जज्ञानमित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो ब्रह्मा देवता तत्प्रीतये० वि०। ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ( य० १३ अ०, ३ )स्वाहा इदं ब्रह्मणे।

अच्युतस्य, इदं विष्णुरित्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दोऽच्युतो देवता तत्प्रीतये० वि०। इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे स्वाहा इदमच्युताय।

ईशस्य, नमस्ते इत्यस्य परमेष्ठी ऋषिर्गायत्री छन्द ईशो देवता तत्प्रीतये० वि०। नमस्ते रुद्र मन्यव उतोत इषवे

नमः। बाहुभ्यामुत ते नमः। (य० १६ अ०, १) स्वाहा इदमीशाय।

अर्कस्य, स्वर्णघर्म इत्यस्य प्रजापतिर्ऋषिर्गायत्री छन्दोऽर्को देवता तत्प्रीतये० वि०। स्वर्णघर्मः स्वाहा। स्वर्णार्कः स्वाहा। स्वर्णशुक्रः स्वाहा। स्वर्णज्योतिः स्वाहा। स्वर्णसूर्यः स्वाहा। (य० १८ अ०, ५०) इदमर्काय।

वनस्पतेः, वनस्पते इत्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो वनस्पतिर्देवता तत्प्रीतये० वि०। वनस्पते वीड्वङ्गो हि भूया अस्मत् सखा प्रतरणः सुवीरः। गोभिः संनद्धो असि वीड़यस्वास्थाता ते जयतु जेत्वानि (य० २९ अ०, ५२) स्वाहा इदं वनस्पतये। इति होममन्त्राः। [य र ल व श ष स ह परे पदान्तानुस्वारस्य स्थाने गुं प्रयोगः कार्य्यः।]

अथ जप्यसूक्तानि। तत्र रवेः, विभ्राडित्यादिकस्य सप्तदशर्चस्य रविसूक्तस्याद्याया विभ्राट्, ततस्तिसृणां प्रस्कण्वः पञ्चम्याः स्ववत्सारः काश्यपः, षष्ठ्या वेनः, सप्तम्या कुत्सः, अष्टम्या अगस्त्यः, नवम्याः श्रुतकक्षसुकक्षौ, दशम्याः प्रस्कण्वः, ततो द्वयोः कुत्सः, ततो द्वयोर्जमदग्निः, पञ्चदश्याः नृमेधः, षोड़श्याः कुत्सः, अन्त्याया हिरण्यस्तूपः, आङ्गिरसः, ऋषयः, आद्यायाः पञ्चम्याश्च जगती, द्वितीयादितिसृणां नवम्या दशम्याश्च गायत्री, त्रयोदशीपञ्चदश्योर्बृहती, चतुर्दश्या अतिबृहती, शिष्टानां सप्तानां त्रिष्टुप्, छन्दांसि पञ्चम्याः विश्वे देवाः षष्ठ्याः सोमः शिष्टानां सूर्य्यो देवताः, सूर्य्यप्रीतये जपे वि०। विभ्राड् बृहत् पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम्। वातजूतो यो अभिरक्षति त्मना प्रजाः पुपोष पुरुधा विराजति॥ १॥ उदुत्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्य्यम्॥ २॥ येना पावक चक्षसा भुरण्यन्तं जनाँ अनु। त्वं वरुण पश्यसि॥ ३॥ दैव्यावध्वर्य्यू

आगतं रथेन सूर्य्यत्वचा। मध्वा यज्ञं समञ्जाथे ॥ ४ ॥ तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं वर्हिषदं स्वर्विदम्। प्रतीचीनं वृजनं दोहसे धुनिमाशुं जयन्तमनु यासु वर्द्धसे ॥ ५ ॥ अयं वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने। इममपां सङ्गमे सूर्य्यस्य शिशुं न विप्रा मतिभी रिहन्ति ॥ ६ ॥ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य्य आत्मा जगतस्तस्थुषश्च ॥ ७ ॥ आ न इडाभिर्विदथे सुशस्ति विश्वानरः सविता देव एतु। अपि यथा युवानो मत्सथा नो विश्वं जगदभिपित्वे मनीषा ॥ ८ ॥ यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य्य। सर्वं तदिन्द्र ते वशे ॥ ९ ॥ तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य्य। विश्वमाभासि रोचनम् ॥ १० ॥ तत्सूर्य्यस्य देवत्वं तन्महित्वं मध्या कर्त्तोर्विततं संजभार। यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥ ११ ॥ तन्मित्रस्य वरुणस्याभिचक्षे सूर्य्यो रूपं कृणुते द्योरुपस्थे। अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सम्भरन्ति ॥ १२ ॥ वण्महाँ असि सूर्य्य वडादित्य महाँ असि। महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ असि ॥ १३ ॥ वट्सूर्य्य श्रवसा महाँ असि सत्रा देव महाँ असि। मह्ना देवानामसूर्य्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥ १४ ॥ आयन्त इव सूर्य्यं विश्वेदिन्द्रस्य भक्षत। वसूनि जाते जनमान ओजसा प्रति भागं न दीधिम ॥ १५ ॥ अद्या देवा उदिता सूर्य्यस्य निरंहसः पिपृता निरवद्यात्। तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ १६ ॥ आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च। हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥१७॥ (य०३३ अ०, ३० मन्त्रावधि ४३ म०)।

सोमस्य, अषाढमित्यादिकस्य ऋक्चतुष्टयात्मकस्य सोमसूक्तस्य गौतम ऋषिस्त्रिष्टुप् छन्दः सोमो देवता तत्प्रीतये० वि०। अषाढं युत्सु पृतनासु पप्रिम् स्वर्षामप्सां वृजनस्य गोपाम्। भरेषुजां सुक्षितिं सुश्रवसं जयन्तं त्वामनुमदेम सोम ॥ १ ॥ सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति। सादन्यं विदथ्यं सभेयं पितृश्रवणं यो ददाशदस्मै ॥ २ ॥ त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः। त्वमाततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ ३ ॥ देवेन नो मनसा देव सोम रायो भागं सहसावन्नभियुध्य। मा त्वातनदीशिषे वीर्यस्योभयेभ्यः प्रचिकित्सा गविष्टौ ॥ ४ ॥ (य० ३४ अ०, २० मन्त्रावधि २३ म०)।

मङ्गलस्य, सूक्ताभावात् (१५१ पृ० १पं०) प्राग्वत् मन्त्रस्य जपः।

बुधस्य सूक्ताभावात् (१५१ पृ० ५पं०) प्राग्वत् मन्त्रजपः।

गुरोः, सूक्ताभावात् (१५१पृ० १० पं०) प्राग्वत् मन्त्रजपः।

शुक्रस्य, सूक्ताभावात् (१५१पृ० १५पं०) प्राग्वत् मन्त्रजपः।

शनेः, सूक्ताभावात् (१५१ पृ० २१पं०) प्राग्वत् मन्त्रजपः।

राहोः, कयान इत्यादित्र्यृचस्य राहुसूक्तस्य वामदेव ऋषिर्गायत्री छन्दो राहुर्देवता तत्प्रीतये० वि०। कया नश्चित्र आभुवदूती सदावृधः सखा। कया शचिष्ठया वृता ॥ १ ॥ कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः। दृढा चिदारुजे वसु ॥ २ ॥ अभी षु णः सखीनामविता जरितॄणाम्। शतं भवास्यूतये। (य०२७ अ०, ३९ मन्त्रावधि ४१ म०)।

केतोः, सूक्ताभावात् (१५२पृ० ३पं०) प्राग्वत् मन्त्रजपः।

अथाधिदेवानाम् तत्र सूर्य्याधिदेवरुद्रस्य, नमस्ते रुद्रेत्यादि-

कस्यानुवाकात्मक षोड़शर्चस्य रुद्रसूक्तस्य परमेष्ठी ऋषिः आद्यायाः गायत्री, ततस्तिसृणामनुष्टुप्, ततस्तिसृणां पङ्क्तिः, ततः सप्तानामनुष्टुप्, ततो द्वयोर्जगती, छन्दांसि सर्वासामेक रुद्रो देवता तत्प्रीतये जपे वि०। नमस्ते रुद्र मन्यव उतो त इषवे नमः। बाहुभ्यामुत ते नमः॥ १॥ या ते रुद्र शिवा तनूरघोरापापकाशिनी। तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि॥ २॥ यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे। शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत्॥ ३॥ शिवेन वचसा त्वा गिरिशाच्छा वदामसि। यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत्॥ ४॥ अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्। अहींश्च सर्वान् जम्भयन् सर्वाश्च यातुधान्योऽधराचीः परासुव॥ ५॥ असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः। ये चैनं रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषां हेड ईमहे॥ ६॥ असौ योऽवसर्पति नीलग्रीवो विलोहितः। उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्य्यः सदृष्टो मृड़याति नः॥ ७॥ नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे। अथो ये अस्य सत्वानो अहं तेभ्योऽकरं नमः॥ ८॥ प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम्। याश्च ते हस्त इषवः परा ता भगवो वप॥ ९॥ विज्यं धनुः कपर्दिनो विशल्यो वाणवाँ उत। अनेशन्नस्य या इषव आभुरस्य निषङ्गधिः॥ १०॥ या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः। तयास्मान् विश्वतस्त्वमयक्ष्मया परि भुज॥ ११॥ परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः। अथो य इषुधिस्तवारे अस्मन्निधेहि तम्॥ १२॥ अवतत्य धनुष्ट्वं सहस्राक्ष शतेषुधे। निशीर्य्य शल्यानां मुखा शिवो नः सुमना भव॥ १३॥ नमस्त आयुधायानातताय धृष्णवे। उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने॥ १४॥ मा नो महान्तमुत मा

नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम्। मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः॥ १५॥ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। मा नो वीरान् रुद्र भामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे॥ १६॥ (य० १६ अ०, १ मन्त्रावधि १६ म०)।

चन्द्राधिदेवोमायाः, सूक्ताभावात् (१५२पृ० १२पं०) प्राग्वत् मन्त्रजपः।

भौमाधिदेवस्कन्दस्य, सूक्ताभावात् (१५२पृ० १७पं०) प्राग्वत् मन्त्रस्य जपः।

विष्णोः, सहस्रशीर्षेत्यादिकस्य षोड़शर्चस्य नारायणसूक्तस्य नारायणपुरुष ऋषिरन्त्यायास्त्रिष्टुप् शिष्टानामनुष्टुप् छन्दो नारायणो देवता तत्प्रीतये जपे वि०। सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं सर्वतः स्पृत्वात्यतिष्ठद्दशाङ्गुलम्॥ १॥ पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति॥ २॥ एतावानस्य महिमाऽतो ज्यायाँश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥ ३॥ त्रिपादूर्द्ध्व उदैत् पुरुषः पादोऽस्येहाभवत् पुनः। ततो विष्वङ् व्यक्रामत् साशनानशने अभि॥४॥ ततो विराडजायत विराजो अधि पूरुषः। स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः॥ ५॥ तस्माद्यज्ञात् सर्वहुतः सम्भृतं पृषदाज्यम्। पशूँस्ताँश्चक्रे वायव्या नारण्या ग्राम्याश्च ये॥ ६॥ तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायतः॥ ७॥ तस्मादश्वा अजायन्त ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः॥ ८॥ तं यज्ञं वर्हिषि प्रौक्षन् पुरुषं जातमग्रतः। तेन

देवा अयजन्त साध्या ऋषयश्च ये ॥ ९ ॥ यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखं किमस्यासीत् किं बाहू किमूरू पादा उच्येते ॥ १० ॥ ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ ११ ॥ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ १२ ॥ नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्त्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥ १३ ॥ यत् पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ १४ ॥ सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं तन्वाना अवध्नन् पुरुषं पशुम् ॥ १५ ॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥ ( य० ३१अ०, १मन्त्रावधि १६म० )

जीवाधिदेवब्रह्मणः, सूक्ताभावात् ( १५३ पृ० १पं० ) पूर्ववत् मन्त्रजपः ।

शुक्राधिदेवशक्रस्य, आशुरित्यादिकस्य द्वादशर्चस्य शक्रसूक्तस्याप्रतिरथ ऋषिस्त्रिष्टुप् छन्दः शक्रो देवता तत्प्रीतये० वि० । आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् । संक्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत् साकमिन्द्रः ॥ १ ॥ संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ २ ॥ स इषुहस्तैः स निषङ्गिभिर्वशी संस्रष्टा स युध इन्द्रो गणेन । संसृष्टजित् सोमपा बाहुशर्द्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥ ३ ॥ बृहस्पते परीदीया रथेन रक्षोहामित्राँ अपबाधमानः । प्रभञ्जन् सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥ ४ ॥ बलविज्ञाय स्थविरः प्रवीरः सहस्वान्

वाजी सहमान उग्रः । अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥ ५ ॥ गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा । इमं सजाता अनु वीरयध्वमिन्द्रं सखायो अनु संरभध्वम् ॥ ६ ॥ अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाड़युध्योऽस्माकं सेना अवतु प्र युत्सु ॥ ७ ॥ इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः । देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥८॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्द्ध उग्रम् । महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ ९ ॥ उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनांसि । उद्वृत्रहन् वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः ॥ १० ॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु । अस्माकं वीरा उत्तरे भवन्त्वस्माँ उ देवा अवता हवेषु ॥ ११ ॥ अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि । अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ( य० १७ अ०, ३३ मन्त्रावधि ४४म )।

शनैश्चराधिदेवयमस्य, सूक्ताभावात् ( १५३पृ० १२ पं० ) पूर्ववन्मन्त्रजपः ।

राहुग्रहाधिदेवकालस्य, सूक्ताभावात् ( १५३ पृ० १६ पं० ) पूर्ववन्मन्त्रजपः ।

केतुग्रहाधिदेवचित्रगुप्तस्य, सूक्ताभावात् (१५३पृ० २०पं०) प्राग्वन्मन्त्रजपः ।

अथ प्रत्यधिदेवतानां तत्र सूर्य्यप्रत्यधिदेवताग्नेः अस्याजरास इत्यादि सप्तदशर्चस्य वह्निसूक्तस्याद्याया वत्स प्रीर्ऋषिस्त्रिष्टुप् छन्द इन्द्रवायू देवते द्वितीयाया विश्वरूप ऋषिर्गायत्री छन्द इन्द्रवायू देवते तृतीयाया गौतम ऋषिर्गायत्री छन्दः मित्रा-

वरुणौ देवते चतुर्थ्यां विरूप ऋषिर्गायत्री छन्द अग्निर्देवता पञ्चम्याः कुत्स ऋषिस्त्रिष्टुप् छन्दः शुक्रो देवता षष्ठ्या वामदेव ऋषि एकोना जगती० छन्द अग्निर्देवता सप्तम्या विश्वामित्र ऋषिस्त्रिष्टुप् छन्दः विश्वे देवा देवता अष्टम्या भरद्वाज ऋषिस्त्रिष्टुप् छन्दः वैश्वानरोऽग्निर्देवता नवम्या भरद्वाज ऋषिर्गायत्री छन्द इन्द्राग्नी देवता दशम्या मेधातिथिः ऋषिर्गायत्री छन्दः विश्वे देवा देवता एकादश्याः शक्तिः पाराशर ऋषिस्त्रिष्टुप् छन्दः मरुतो देवता द्वादश्या अत्रिदुहिता विश्ववारा ऋषिस्त्रिष्टुप् छन्दः मरुतो देवता त्रयोदश्या भरद्वाज ऋषिस्त्रिष्टुप् छन्दः महेन्द्रो देवता चतुर्दश्या वसिष्ठ ऋषि बृहती छन्द आदित्यो देवता पञ्चदश्याः प्रस्कण्व ऋषि बृहती छन्द आदित्यो देवता षोडश्या गौतम ऋषिस्त्रिष्टुप् छन्द आदित्यो देवता सप्तदश्या लुशोधानाक ऋषिस्त्रिष्टुप् छन्दः सविता देवता अग्निप्रीतये जपे वि० । अस्याजरसो दमामरित्रा अर्चद्धूमासो अग्नयः पावकाः । श्वितीचयः श्वात्रासो भुरण्यवो वनर्षदो वायवो न सोमाः ॥ १ ॥ हरयो धूमकेतवो वातजूता उप द्यवि । यतन्ते बृथगग्नयः ॥ २ ॥ यजा नो मित्रावरुणा यजा देवाँ ऋतं बृहत् । अग्ने यक्षि स्वं दमम् ॥ ३ ॥ युक्ष्वा हि देवहूतमाँ अश्वाँ अग्ने रथीरिव । निहोता पूर्व्यः सदः ॥ ४ ॥ द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुपधापयेते । हरिरन्यस्यां भवति स्वधावान् शुक्रो अन्यस्यां ददृशे सुवर्चाः ॥ ५ ॥ अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विशे ॥६॥ त्रीणि शता त्री सहस्राण्यग्निं त्रिंशच्च देवा नव चासपर्यन् । औक्षन् घृतैरस्तृणन् बर्हिरस्मा आदिद्धोतारं न्यसादयन्त ॥ ७ ॥ मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् । कविं सम्राजमतिथिं जनाना-

मासन्ना पात्रं जनयन्त देवाः ॥८॥ अग्निर्वृत्राणि जंघनद् द्रविण-
स्युर्विपन्यया । समिद्धः शुक्र आहुतः ॥ ९ ॥ विश्वेभिः सोम्यं
मध्वग्न इन्द्रेण वायुना । पिवा मित्रस्य धामभिः ॥ १० ॥ आ
यदिषे नृपतिं तेज आनट् शुचि रेतो निषिक्तं द्यौरभीके । अग्निः
शर्द्धमनवद्यं युवानं स्वाध्यं जनयत् सूदयच्च ॥ ११ ॥ अग्ने शर्द्ध
महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु । सं जास्पत्यं सुयम-
माकृणुष्व शत्रूयतामभितिष्ठा महांसि ॥१२॥ त्वां हि मन्द्रतममर्क-
शोकैर्ववृमहे महि नः श्रोष्यग्ने । इन्द्रं न त्वा शवसा देवता
वायुं पृणन्ति राधसा नृतमाः ॥ १३ ॥ त्वे अग्ने स्वाहुत
प्रियासः सन्तु सूरयः । यन्तारो ये मघवानो जनानामूर्वान्
दयन्तः गोनाम् ॥ १४ ॥ श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सया-
वभिः । आसीदन्तु वर्हिषि मित्रो अर्य्यमा प्रातर्यावाणो अध्व-
रम् ॥ १५ ॥ विश्वेषामदितिर्यज्ञियानां विश्वेषामतिथिर्मानुषा-
णाम् । अग्निर्देवानामव आवृणानः सुमृडीको भवतु जात-
वेदाः ॥ १६ ॥ महो अग्नेः समिधानस्य शर्मण्यनागा मित्रे
वरुणे स्वस्तये । श्रेष्ठे स्याम सवितुः सवीमनि तद्देवानामवो
अद्या वृणीमहे ॥ १७ ॥ (य० ३३अ०, १ मन्त्रावधि १७म०)

अपाम्, आपो हि ष्ठेत्यादिकस्य तृचस्यापस्सूक्तस्य सिन्धु-
द्वीप ऋषिर्गायत्री छन्द आपो देवतास्तत्प्रीतये० वि० ।
आपो हि ष्ठा मयो भुवस्ता न ऊर्जे दधातन । महे
रणाय चक्षसे ॥ १ ॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ॥ २ ॥ तस्मा अरं गमाम वो यस्य
क्षयाय जिन्वथ । आपो जनयथा च नः (य० ११अ०,
५० मन्त्रावधि ५२ म० ) ।

भौमप्रत्यधिदैवतभूम्याः, सूक्ताभावात् ( १५४पृ० ५पं० )
प्राग्वत् मन्त्रजपः ।

बुधप्रत्यधिदैवतविष्णोः, सहस्रशीर्षेत्यादिसूक्तम् (१५४पृ० ८ पं०) प्राग्वत्।

जीवप्रत्यधिदैवतशक्रस्य, आशुरित्यादिसूक्तम् (१५४ पृ० १३ पं०) प्राग्वत्।

शुक्रप्रत्यधिदैवतशच्याः, सूक्ताभावात् (१५४ पृ० १८पं०) प्राग्वत् मन्त्रजपः।

शनिप्रत्यधिदैवतप्रजापतेः, सूक्ताभावात् (१५४पृ० २२पं०) प्राग्वन्मन्त्रजपः।

राहुप्रत्यधिदैवतसर्पाणाम्, नमोऽस्त्वित्यादि तृचस्य प्रजापतिर्ऋषिर्गायत्री छन्दः सर्पा देवतास्तत्प्रीतये० वि०॥ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः॥१॥ या इषवो यातुधानानां ये वा वनस्पतीँरनु। ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः॥२॥ ये वामी रोचने दिवो ये वा सूर्यस्य रश्मिषु। येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः॥३॥ (य० १३अ०, ६ मन्त्रावधि ८ म०)

केतुप्रत्यधिदैवतब्रह्मणः, सूक्ताभावात् ब्रह्म जज्ञानमित्यादिमन्त्रः (१५५पृ० ५पं०) प्राग्वत्।

अथ लोकपालानां तत्र विनायकस्य, गणानामित्यादिमन्त्रः (१५५पृ० १०पं०) प्राग्वत्।

दुर्गायाः, सूक्ताभावात् अम्बे इत्यादिमन्त्रः (१५५ पृ० १६पं०) प्राग्वत्।

वायोः, नियुत्वानित्यादिकस्य षडृचस्य वायुसूक्तस्याद्याया गृत्समदः, द्वितीयायाः पुरुमीढाजमीढौ, ततस्तिसृणां प्रजापतिः, षष्ठ्या व्यश्व आङ्गिरसः, ऋषयः द्वितीयाया अनुष्टुप् पञ्चम्यास्त्रिष्टुप्, शिष्टानां गायत्री छन्दांसि वायुर्देवता वायुप्रीतये जपे वि०। नियुत्वान् वायवागह्ययं शुक्रो अयामि

नै। गन्तासि सुन्वतो गृहम्॥ १॥ वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु। आयाहि सोमपीतये स्पार्हो देवो नियुत्वता॥ २॥ वायुरग्रेगा यज्ञप्रीः साकं गन्मनसा यज्ञम्। शिवो नियुद्भिः शिवाभिः॥ ३॥ वायो ये ते सहस्रिणो रथासस्तेभिरागहि। नियुत्वान्त्सोमपीतये॥ ४॥ एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विंशती च। तिसृभिश्च वहसे त्रिंशता च नियुद्भिर्वायविह ता विमुञ्च॥ ५॥ तव वायवृतस्पते त्वष्टुर्जामातरद्भुत। अवांस्यावृणीमहे। (य० २७ अ०, २९ मन्त्रावधि)।

आकाशस्य, सूक्ताभावात् (१५५पृ० २४पं०) प्राग्ववन्मन्त्रजपः।

आश्विनयोः, सूक्ताभावात् (१५६पृ० ३पं०) प्राग्वन्मन्त्रजपः।

अथ दिक्पालानां तत्रेन्द्रस्य, आशुरित्यादिसूक्तम् (१६४पृ० १६पं०) प्राग्वत्।

वह्नेः, अश्वाजरस इत्यादिसूक्तम् (१६५पृ० २३पं०) प्राग्वत्।

यमस्य, सूक्ताभावात् (१५६पृ० १५पं०) प्राग्वन्मन्त्रजपः।

निर्ऋतेः, असुन्वन्तमित्यादिकस्य तृचस्य निर्ऋतिसूक्तस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दो निर्ऋतिर्देवता तत्प्रीतये जपे वि०। असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्करस्य। अन्यमस्मदिच्छ सा त इत्यानमो देवि निर्ऋते तुभ्यमस्तु॥ १॥ नमः सु ते निर्ऋते तिग्मतेजोऽयस्मयं विचृता बन्धमेतम्। यमेन त्वं यम्या संविदानोत्तमे नाके अधिरोहयैनम्॥ २॥ यस्यास्ते घोर आसन् जुहोम्येषां बन्धानामवसर्जनाय। यां त्वा जनो भूमिरिति प्रमन्दते निर्ऋतिं त्वाहं परिवेद विश्वतः॥ ३॥ (य० १२अ०, ६२ मन्त्रावधि)

वरुणस्य, सूक्ताभावात् ( १५६पृ० २३पं० ) प्रागवत् इमं मे इत्यादिमन्त्रः ।

वायोः, नियुत्वानित्यादि षडृचं सूक्तं ( १६८पृ० २२पं० ) प्रागवत् ।

सोमस्य, अषाढ़ं युत्स्वित्यादि चतुर्ऋचं सूक्तं ( १६१पृ० १पं० ) प्रागवत् ।

ईशस्य, नमस्ते रुद्र इत्यादि षोड़शर्चं सूक्तं ( १६१पृ० २६पं० ) प्रागवत् ।

ब्रह्मणः, सूक्ताभावात् ब्रह्म जज्ञानमित्यादि मन्त्रः (१५७पृ० १३पं०) प्रागवत्

अनन्तस्य, नमोस्त्वित्यादि तृचं सूक्तं ( १६८पृ० ८पं० ) प्रागवत् ।

वसूनाम्, सूक्ताभावात् सुगा व इत्यादि मन्त्रः प्रागवत् ( १५७पृ० २१पं० ) ।

रुद्राणाम्, नमस्ते रुद्रेत्यादि षोड़शर्चं प्रागवत् ( १६१पृ० २६पं० ) ।

आदित्यानाम्, सूक्ताभावात् यज्ञो देवानामित्यादि मन्त्रः ( १५८पृ० ७पं० ) प्रागवत् ।

मरुद्गणानाम्, सूक्ताभावात् मरुत इत्यादि मन्त्रः (१५८पृ० १३पं) प्रागवत् ।

ब्रह्मणः, सूक्ताभावात् ब्रह्म जज्ञानमित्यादि मन्त्रः (१५८पृ० १८पं० ) प्रागवत् ।

अच्युतस्य, सहस्रशीर्षेत्यादिकं षोड़शर्चं सूक्तं ( १६३पृ० ११पं० ) प्रागवत् ।

ईशस्य, नमस्ते, रुद्रेत्यादि षोड़शर्चं सूक्तं (१६१पृ० २६पं०) प्रागवत् ।

अर्कस्य, विभ्राड़ित्यादि सप्तदशर्चं सूक्तं (१५८पृ० १२पं) प्रागवत्।

वनस्पतेः, सूक्ताभावात् वनस्पते इत्यादि मन्त्रः (१५८ पृ० ६पं०), प्रागवत्।

एवं जापकैः सूक्तमन्त्रेषु अत्रैवकाले द्वारपालैश्च वक्ष्यमाण-शान्त्यादिसूक्तेषु जप्तेषु होता उत्तराङ्गं कर्म्म कुर्य्यात्। यथा चरु-शेषमवदाय ओं अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते। इति स्विष्टकृद्धोमं कुर्य्यात्। अनेकदिनसाध्यहोमे तु पर्य्युषित-दोषपरिहारार्थं हविःशेषं स्विष्टकृदर्थं घृतमध्ये स्थापयेत्। नष्टे दुष्टे वा हविषि आज्येनैव स्विष्टकृद्धोमः। ततो नवाहुतीर्जुहु यात्। यथा भूरित्यस्य प्रजापतिर्ऋषिर्गायत्री छन्दोऽग्निर्देवता अनादिष्टप्रायश्चित्तहोमे वि०। ओं भूः स्वाहा इदमग्नये। भुव-रित्यस्य प्रजापतिर्ऋषिरुष्णिक् छन्दो वायुर्देवताऽनादिष्टप्राय-श्चित्तहोमे वि०। ओं भुवः स्वाहा इदं वायवे। स्वरित्यस्य प्रजा-पतिर्ऋषिरनुष्टुप् छन्दः सूर्य्यो देवता अनादिष्टप्रायश्चित्तहोमे वि०। ओं स्वः स्वाहा इदं सूर्य्याय। भूर्भुवः स्वरिति महा-व्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्नि-वायुसूर्य्या देवता अनादिष्टप्रायश्चित्तहोमे वि०। ओं भूर्भुवः स्वः स्वाहा इदमग्निवायुसूर्य्येभ्यः। त्वं नो अग्ने इत्यस्य वामदेव ऋषिस्त्रिष्टुप् छन्दः अग्नीवरुणौ देवते अनादिष्टप्रायश्चित्तहोमे वि०। ओं त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेड़ो अवया-सिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्रमुमु-ग्ध्यस्मत्। (य० २१ अ०, ३म०) स्वाहा इदमग्नीवरुणाभ्याम्। स त्वं नो अग्ने इत्यस्य वामदेव ऋषिस्त्रिष्टुप् छन्दोऽग्नीवरुणौ देवते अनादिष्टप्रायश्चित्तहोमे वि०। ओं स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अवयक्ष्व नो वरुणं

रराणो वीहि मृडीकं सुहवो न एधि (य० २१ अ०, ४) स्वाहा इदमग्नीवरुणाभ्याम् अयाश्चाग्न इत्यस्य वामदेव ऋषिर्बृहती छन्दोऽयोऽग्निर्देवता अनादिष्टप्रायश्चित्त वि०। ओं अयाश्चाग्नेऽस्यनभिशस्त्ययाश्च स त्वमित्त्वमया असि। अया नो यज्ञं वहास्यया नो धेहि भेषजं स्वाहा इदमयसेऽग्नये। ये ते शतमित्यस्य वामदेव ऋषिस्त्रिष्टुप् छन्दो वरुणः सविता विष्णुर्विश्वे देवा मरुतः स्वर्का देवता अनादिष्टप्रायश्चित्तहोमे वि०। ओं ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेऽभि नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च। उदुत्तममित्यस्य शुनःशेफ ऋषिस्त्रिष्टुप् छन्दो वरुणो देवता अनादिष्टप्रायश्चित्तहोमे वि०। ओं उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम (य०१२अ०१२) स्वाहा इदं वरुणाय। इति नवाहुतीर्हुत्वा ओं प्रजापतये स्वाहा इदं प्रजापतये इत्यपि जुहुयात्। ततोऽग्न्यायतनस्य समन्तात् दशसु दिक्षु दिक्पालेभ्यो माषभक्तबलिं दद्यात्। यथा ऋष्यादिस्मरणपूर्वकं प्रागुक्तदिक्पालादिहोममन्त्रानुक्त्वा ओं इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एष माषभक्तिबलिर्नम इति दत्त्वा प्रार्थयेत। भो इन्द्र दिशां रक्ष बलिं भुङ्क्ष्व मम यजमानस्य वा सकुटुम्बस्यायुःकर्त्ता क्षेमकर्त्ता शुभकर्त्ता शान्तिकर्त्ता पुष्टिदस्तुष्टिदो भवेति पुष्पाक्षतजलानि पूर्वाभिमुखः क्षिपेत्। एवमाग्नेय्यादिष्वपि। ततः साधिदेवतप्रत्यधिदेवतग्रहेभ्यो बलिं दद्यात्। तत्र प्रागुक्तहोममन्त्रमुच्चार्य्य एष गुडौदनादिबलिः साङ्गायेत्याद्यनन्तरं सेश्वराग्निरूपाधिदैवतप्रत्यधिदैवतसूर्य्यायेत्यधिकं प्रयोज्यम्। ततः प्रार्थनादि पूर्ववत्। स्वस्वमण्डलसमीपे पुष्पाक्षतादि-

प्रक्षेपः। एवं विनायकादीनामपि बलिं दत्त्वा प्रार्थयेत। पुष्पादिप्रक्षेपस्तु प्रागुक्तस्थापनस्थानसमीपे इति विशेषः। ततः परदिने स्वस्तिवाचनानन्तरं मृड़नामाग्निमावाह्याभ्यर्च्य स्रक्-चन्दनचर्चितौ स्रुक्स्रुवौ सव्यहस्तेनादाय नाभिमूले संयोज्य अनुपविष्टो यजमानसहितो होता मूर्द्धानमित्यस्य भरद्वाज ऋषि-स्त्रिष्टुप् छन्दो वैश्वानरोऽग्निर्देवता पूर्णाहुतिहोमे वि०। ओँ मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम्। कविं सम्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः (य० ७अ०, २४) स्वाहा इदमग्नये इत्यनेन पूर्णाहुतिं फलवस्त्र-स्वर्णादिसहितां दद्यात्। ततः पूर्णपात्रदक्षिणा। ततः संस्रव-प्राशनम्। पवित्राभ्यां मार्जनम् (१४७पृ० १पं०) प्राग्वत् कुर्य्यात्। ततः पवित्रप्रतिपत्तिः। इति यजुर्वेदिनां कुश-कण्डिका।

अथ सामगानामग्निस्थापनादि। कर्त्ता शुचिराचान्तः कृतनित्यक्रिय उभयतो हस्तमितां स्थण्डिलभूमिं कुण्डभूमिं वा कुशैः केशतुषाद्यपद्रव्यनिरसनेन गोमयेन उपलिप्य उत्तरस्यां दिशि अभ्युक्षणार्थं कुशकुसुमसहितं जलपात्रं निधाय दक्षिणं जानु भूमौ पातयित्वा प्रादेशप्रमाणं सव्याङ्गुष्ठानामिकाभ्यां कुशमवलम्ब्य आवह्निस्थापनं सव्यहस्तं भूमौ निधाय दक्षिण-हस्तानामिकाङ्गुष्ठाभ्यां गृहीतकुशमूलेन तिस्रो रेखाः कुर्य्यात्। यथा दीर्घऋजुकुशादिना अङ्गुष्ठमानं विधाय स्थण्डि-लस्य दक्षिणभागे सार्द्धमङ्गुलं त्यक्त्वा द्वादशाङ्गुलां पूर्वमुखीं प्रथमां, रेखेयं पृथिवीदेवताका पीतवर्णासीति पीततया ध्यातां पृथिवीदेवताकां रेखामुल्लिख्य तन्मूलत उत्तरगामिनीमेक-विंशत्यङ्गुलां, रेखेयमग्निदेवताका लोहितवर्णासीति लोहित-तया ध्यातामाग्नेयीं रेखां तथैवोल्लिखेत्। ततः पार्थिवरेखातः

सप्ताङ्गुलान्तरे उत्तरस्यां प्रादेशप्रमाणां पूर्वमुखीं, रेखेयं प्राजापत्या कृष्णवर्णासीति कृष्णतया ध्यातां प्राजापत्यां रेखाम्, ततः सप्ताङ्गुलान्तरिते उत्तरस्यां प्रादेशप्रमाणां पूर्वमुखीं, रेखेयमैन्द्री नीलवर्णासीति नीलतया ध्यातामैन्द्रीं रेखाम्, ततस्तावदन्तरिते देशे उत्तरस्यां प्रादेशमितां प्राङ्मुखीं, रेखेयं सौम्या पीतवर्णासीति पीततया ध्यातां सौम्यां रेखाम्, उल्लिखेत्। ततः क्रमेण रेखाभ्य उत्करं गृहीत्वा ऐशान्यामरत्निमात्रान्तरिते देशे ओं निरस्तः परावसुरित्युक्त्वा निरस्येत्। ततः पूर्वस्थापितजलेन रेखाभूभागमभ्युक्ष्य आयसाश्मगोमयमृण्मयादिव्यतिरिक्तास्फुटित निर्णिक्त स्वर्णताम्रकांस्यादिपात्रेण सन्निधापितयथोक्ताग्नेर्ज्वलदिन्धनं गृहीत्वा क्रव्यादंशपरित्यागाय ज्वलत्तृणनिरसनं कुर्य्यात्। यथा क्रव्यादमित्यर्द्धर्चस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दोऽग्निर्देवता ज्वलत्तृणनिरसने वि०। ओं क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः ( य०३५, अ०, १८ ) इत्यर्द्धर्चेनैव ज्वलत्तृणं नैर्ऋत्यां दिशि क्षिपेत्। ततः पुनरग्निं गृहीत्वा स्थापयेत्। यथा व्याहृतीनां प्रजापतिर्ऋषिर्बृहती छन्दोऽग्निर्देवताऽग्निस्थापने वि०। ओं भूर्भुवः स्वरोँ इत्यनेन तृतीयरेखोपरि स्वाभिमुखमग्निं स्थापयेत्। ततस्तूष्णीमेव समिधमग्नौ क्षिप्त्वा वामहस्तमुत्तोल्य अञ्जलिं बध्वा इहैवायमित्युत्तरार्द्धर्चस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दोऽग्निर्देवताऽभ्युपस्थाने वि०। ओं इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् ( य० ३५अ०, १९ ) इत्युत्तरार्द्धर्चेनाग्निज्वालाप्रत्यक्षीकरणरूपमुपस्थानं कुर्य्यात्। ततः प्रागुक्तं ( १००पृ, ७पं० ) ध्यात्वाऽग्ने त्वममुकनामासीति तत्तत्कर्मानुसारेण नाम कुर्य्यात्। नामविशेषाज्ञाने तु ओं सर्वतः पाणिपादान्तः

सर्वतोऽक्षिशिरोमुखः। विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु इत्यनेन विश्वरूपनाम कृत्वा उपतिष्ठेतेति गुणविष्णुरघुनन्दनभट्टाचार्य्यप्रभृतयः। ततो घृताक्तां प्रादेशमितां समिधमग्नौ दत्त्वा ब्रह्मवरणं कुर्य्यात्। अधीतवेदं दत्तोत्तरासङ्गकमण्डलुसहितं ब्राह्मणं तदभावे कुशनिर्मितं ब्राह्मणं वा दक्षिणाङ्गुष्ठानामिकाभ्यां धृत्वा धारासहितमुदकपात्रं गृहीत्वा अग्नेरुत्तरतः प्रभृति दक्षिणावर्त्तेन दक्षिणां दिशं गत्वा वङ्केररत्निमात्रान्तरिते देशे प्राङ्मुखीं वारिधारां दत्त्वा तदुपरि प्रागग्रान् कुशान् आस्तीर्य्य पश्चिमाभिमुखोऽनुपविष्टो वामहस्तानामिकाङ्गुष्ठाभ्यामास्तीर्णकुशानामेकं कुशपत्रमादाय निरस्त इत्यस्य प्रजापतिॠषिरुष्णिक्छन्दोऽभावः परावसुर्देवता तृणनिरसने वि०। ओं निरस्तः परावसुः इत्यनेन नैॠत्यां निरस्येत्। ततोऽप उपस्पृश्य दक्षिणपादेन सव्यपादमाक्रम्योदङ्मुख आस्तीर्णकुशान् अङ्गिरभ्युक्ष्य आवसोरित्यस्य प्रजापतिॠषिरुष्णिक्छन्दोऽभावः परावसुर्देवता ब्रह्मोपवेशने वि०। ओं आवसोः सदने सीद इत्यनेन यजुषा कुशमयं ब्रह्माणं कुशोपरि उपवेशयेत्। ब्राह्मणब्रह्मपक्षे तु ब्राह्मण एव तत्र उदङ्मुखीभूय ओं सीदामीति प्रतिब्रूयात्। कुशोपरि कुशमयब्राह्मणं प्राङ्मुखं स्थापयित्वा कुशैराच्छाद्य अङ्गिरभ्युक्ष्य कुसुमैस्तमर्चयेत्। ब्राह्मणब्रह्मा तु अयज्ञियां वाचं नियम्य प्राञ्जलिर्विष्णुमनुस्मरन् आकर्मसमाप्ति तत्र आसीत। स यदि त्वयज्ञियां वाचं वदति तदा इमं वैष्णवं मन्त्रं पठेत्। यथा इदं विष्णुरित्यस्य मेधातिथिॠषिर्गायत्री छन्दो विष्णुर्देवताऽयज्ञियवाग्वचननिमित्तजपे वि०। ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढ़मस्य पांसुले (सा० चिं३प्र०१अ०, ३द०८म०) कुशमयब्रह्मपक्षे तु कर्म्मकर्त्तैव तन्मन्त्रं जपेत्। ततस्तेनैव पथा परिहृत्यासने

प्राङ्मुख उपविशेत्। यदि प्रकृते कर्मणि चरुहोमोऽस्ति तदास्मिन्नेव समये साहसनामकं वह्निमावाह्य अभ्यर्च्य चरुं अर्पयेत्। यथा अग्नेः पश्चिमायां दिशि प्रागग्रान् कुशान् आस्तीर्य्य तदुपरि प्रक्षालितं वारुणमुदूखलमूषलं वैणवञ्च सूर्पं वारुणचमसस्थजलप्रोक्षितं संस्थाप्य व्रीहीन् यवान् वा सूर्पे कांस्यपगोले तु चरुस्थाल्यां निधाय ओं सवित्रे त्वा जुष्टं निर्वपामीत्यनेन तत उद्धृत्य उदूखले स्थापयेत् द्विस्तूष्णीं निदध्यात्। एवं प्रकृते रव्यादिपञ्चाशीतिदेवतानां मुष्टिग्रहणं कुर्य्यात्। ततो दक्षिणहस्तमुपरि कृत्वा मूषलेनावहत्य सूर्पेण स्फोटयेत् इत्थं वारत्रयं कृत्वा त्रिः प्रक्षालयेत्। ततश्चरुस्थाल्यां तूष्णीमुदङ्मुखं पवित्रं निधाय तदुपरि दुग्धं दत्त्वा स्तोकं स्तोकमुदकं दत्त्वा तन्मध्ये खदिरपलाशोडुम्बराणामन्यतमजातं प्रादेशमितमग्रे उभयतः सार्द्धाङ्गुष्ठमितचतुष्कोणपुष्करं मेक्षणं दक्षिणावर्त्तेन भ्रामयित्वा तथा पचेत् यथा अन्तरुष्मणा सम्यक् पाको भवेत् न च गलितं दग्धं वा भवेत्। अथ सम्यक्पाके भूते मध्ये घृतस्रवं दत्त्वा प्रागादिदिक्चिह्नितं कृत्वा चरुमवतार्य्य अग्नेरुत्तरतः कुशोपरि स्थापयित्वा पुनर्मध्ये घृतस्रवं दद्यात्। ततः कर्त्ता वह्नेरुत्तरतः उदगग्राणि प्राक्संस्थानि बर्हिरिध्माज्यस्रुक्स्रुव कुसुमादिसहितोदकसमिदादीनि द्रव्याणि आसादयेत्। ततोऽग्नेः पश्चात् दक्षिणहस्तोपरिभावेन अधोमुखौ हस्तौ भूमौ निधाय भूमिजपं कुर्य्यात्। यथा इदं भूमेरित्यस्य परमेष्ठी ऋषिरनुष्टुप् छन्दोऽग्निर्देवता भूमिजपे वि०। ओं इदं भूमेर्भजामह इदं भद्रं सुमङ्गलम्। परासपत्नान् बाधस्वान्येषां विन्दते धनम्। ( छा० ब्रा० २प्र० ४क० ) इति सकृत् जपेत्। रात्रौ तु धनमित्यत्र वसु इत्यूहेत। ततो गृहीतकुशेन दक्षिण-

हस्तेन उत्तरादिदक्षिणान्तमग्नेस्तृणनिरसनरूपं परिसमूहनं कुर्य्यात्। यथा इमं स्तोममित्यादित्रचस्य कौत्स ऋषिर्जगती छन्दोऽग्निर्देवता पृष्ठस्य षड़हस्य षष्ठेऽहन्याग्निमारुते शस्त्रे परिसमूहने वि०। ओं इमं स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया। भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मारिषामा वयं तव। भरामेध्मं कृणवामा हवींषि ते चितयन्तः पर्वणा पर्वणा वयम्। जीवातवे प्रतरां साधया धियोऽग्ने सख्ये मारिषामा वयं तव। शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्याहुतम्। त्वमादित्याँ आवह तान् ह्युश्मस्यग्ने सख्ये मारिषामा वयं तव। (छा० ब्रा० २प्र ४क०) ततः परिसमूहनकुशान् ऐशान्यां क्षिप्त्वा अग्नेः पूर्वस्यामुत्तरान्तात् दक्षिणान्तं यावत् उपमूलमूलानेकपत्नीकृतान् प्रागग्रान् कुशान् अग्रेण मूलमाच्छादयन् त्रिधास्तरेत्। ततो दक्षिणस्यां दिशि पूर्वान्तात् पश्चिमान्तं, प्रतीच्यामुत्तरान्तात् दक्षिणान्तम्, उदीच्यां पश्चिमान्तात् पूर्वान्तं, च तथैव वारत्रयमास्तरेत्। ततो दशसु दिक्षु ओं इन्द्राय नम इत्यादिना स्वस्तिकान् दत्त्वा प्रादेशद्वयप्रमाणां खदिरपलाशोडुम्बराणामन्यतमजातं विंशतिकाष्ठरूपमिध्ममादाय तदुपरि घृतस्रवं दत्त्वा प्रजापतिं मनसा ध्यायन् तूष्णीमग्नौ क्षिपेत्। तत आस्तरणकुशादेव साग्रं कुशपत्रद्वयं गृहीत्वा कुशान्तरेण वेष्टयित्वा पवित्रे संपाद्य छेदयेत्। यथा पवित्रे इत्यस्य प्रजापतिर्ऋषिश्छन्दोऽभावः पवित्रे देवते पवित्रच्छेदने वि०। ओं पवित्रे स्थो वैष्णव्यौ (य० १अ०, १२) इति यजुषा प्रादेशप्रमाणं साग्रं कुशद्वयं कुशान्तरेण छित्त्वा विष्णोर्मनसेत्यस्य प्रजापतिर्ऋषिः पवित्रे देवते पवित्रमार्जने वि०। ओं विष्णोर्मनसा पूते स्थः इत्यनेन ताम्रादिपात्रे पवित्रमुदगग्रं स्थापयित्वा तत्र होमार्थं घृतं

क्षिपेत्। ततस्तत् कुशपत्रद्वयरूपं पवित्रमग्रे दक्षिणहस्ता-नामिकाङ्गुष्ठाभ्यां मूले च वामहस्तानामिकाङ्गुष्ठाभ्यां गृहीत्वा दक्षिणहस्तोपरिभावेनाधोमुखव्यस्तपाणिः देवस्त्वेत्यस्य प्रजा-पतिर्ऋषिराज्यं देवताज्योत्पवने वि०। ओं देवस्त्वा सवितोत्-पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिः स्वाहा। अनेन यजुषा पवित्रमध्येन घृतमादाय सकृत् जुहुयात् तूष्णीं वार-द्वयम्। ततस्तत्पवित्रमद्भिरभ्युक्ष्याग्नौ क्षिपेत्। ततस्तस्याज्य-पात्रस्योदकेनानुमार्जनमग्नेरुपरि निधानमुत्तरस्यामवतारण-मित्थं वारत्रयं संस्कुर्य्यादित्याज्यसंस्कारः। ततः खदिर-पलाशोडुम्बराणामन्यतमजातमरत्निमात्रं भ्रमिताङ्गुष्ठपर्वमात्र-विलमुखं स्रुवमप्याज्यवत् वारत्रयं संस्कुर्य्यात्। ततो दक्षिणं जानु भूमौ पातयित्वा जलाञ्जलीनादाय अदिते इत्यस्य प्रजा-पतिर्ऋषिरदितिर्देवता जलाञ्जलिसेके वि०। ओं अदिते अनुमन्यस्व। अनेन वह्नेर्दक्षिणस्यां पश्चिमान्तात् पूर्वान्तं यावत् धारया जलाञ्जलिना सिञ्चेत्। अनुमत इत्यस्य प्रजापति-र्ऋषिरनुमतिर्देवता जलाञ्जलिसेके वि०। ओं अनुमते अनु-मन्यस्व। अनेनाग्नेः पश्चात् दक्षिणान्तादुत्तरान्तं यावज्जला-ञ्जलिना सिञ्चेत्। सरस्वतीत्यस्य प्रजापतिर्ऋषिः सरस्वती देवता जलाञ्जलिसेके वि०। ओं सरस्वत्यनुमन्यस्व। अने-नाग्नेरुत्तरस्यां पश्चिमान्तात् पूर्वान्तं यावत् जलाञ्जलिना सिञ्चेत्। ततो जलाञ्जलिं गृहीत्वा संलग्नधारया देवसवि-तरित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप् छन्दः सविता देवताऽग्नि-पर्य्युक्षणे वि०। ओं देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय। दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु (छा० ब्रा० १प्र० १क०) अनेन जलाञ्जलिना होमीयद्रव्यसहितमग्निं दक्षिणावर्त्तेन वेष्टयेत्। अथ जानू-

स्थाप्य उपर्य्यधःस्थितदक्षिणवाममुष्टिभ्यां कतिपयास्तरणकुशा-
नादाय विरूपाक्षजपं कुर्य्यात्। तपश्चेत्यादिकस्य वसिष्ठ ऋषिः
कालाग्निरुद्रो देवता विरूपाक्षजपे वि० इति स्मृत्वा तपश्चेत्या-
रभ्य श्वासं नियम्य भूर्भुवः स्वरोमित्यन्तं पठित्वोच्छ्वसेत्। ओं
तपश्च तेजश्च श्रद्धा च ह्रीश्च सत्यञ्चाक्रोधश्च त्यागश्च धृतिश्च
धर्मश्च सत्वं च वाक् च मनश्चात्मा च ब्रह्म च तानि प्रपद्ये
तानि मामवन्तु ओं भूर्भुवः स्वरों महान्तमात्मानं प्रपद्ये
विरूपाक्षोऽसि दन्ताञ्जिस्तस्य ते शय्यापर्णे गृहा अन्तरिक्षे
विमितं हिरण्मयं तद्देवानां हृदयान्ययस्मये कुम्भेऽन्तःसन्निहि-
तानि तानि बलभृच्च बलसाच्च रक्षतोऽप्रमणी अनिमिषतः सत्यं
यत्ते द्वादश पुत्रास्ते त्वा संवत्सरे संवत्सरे कामप्रेण यज्ञेन
याजयित्वा पुनर्ब्रह्मचर्य्यमुपयन्ति त्वं देवेषु ब्राह्मणोऽस्यहं मनु-
ष्येषु ब्राह्मणो वै ब्राह्मणमुपधावत्युप त्वा धावामि जपन्तं मा मा
प्रतिजापीर्जुह्वन्तं मा मा प्रतिहौषीः कुर्वन्तं मा मा प्रति-
कार्षीस्त्वां प्रपद्ये त्वया प्रसूत इदं कर्म करिष्यामि तन्मे राध्यतां
तन्मे समृध्यतां तन्मे उपपद्यतां समुद्रो मा विश्वव्यचाः ब्रह्मानु-
जानातु तुथो मा विश्ववेदा ब्रह्मणः पुत्रोऽनुजानातु श्वात्रो
मा प्रचेता मैत्रावरुणोऽनुजानातु तस्मै विरूपाक्षाय दन्ताञ्जये
समुद्राय विश्वव्यचसे तुथाय विश्ववेदसे श्वात्राय प्रचेतसे
सहस्राक्षाय ब्रह्मणः पुत्राय नमः (छा० ब्रा० २प्र० ४क०) इति
जप्त्वा कुशान् प्रागुदीच्यां क्षिपेत्। यदि न काम्यकर्मार्थं
कुशकण्डिका तदा तपश्चेत्यादि मामवन्त्वित्यन्तं न पाठ्यम्।
ततो दक्षिणावर्त्तेनाग्निं परिक्रम्य हस्तस्थितपुष्पाक्षतैर्ब्रह्माणं
पूजयित्वा तेनैव पथा ससमित्कं हस्तमानीय समिधमग्नौ
क्षिपेत्। इति सर्वकर्मसाधारणी कुशकण्डिका।

एवं कुशकण्डिकानन्तरं प्रकृते तत्तत्कर्मणि कर्त्तव्ये तत्र

प्रथमं प्रादेशमितां घृताक्तां समिधं तूष्णीमग्नौ हुत्वा महाव्याहृतिहोमं कुर्य्यात्। प्रकृते च चरुहोमस्य विद्यमानतया प्रथमं चरुणैव होतव्यं तदसत्त्वे स्रुवेणाज्याहुतिं दद्यात्। चरुहोमो यथा। भार्गवादिपञ्चप्रवरैर्जुह्वां घृतस्रवपञ्चकदानमितरप्रवरैस्तु घृतस्रव चतुष्टयदानम्। ततोऽग्नेरुत्तरभागे ओं अग्नये स्वाहा इति जुहुयात्। तथैवाग्नेर्दक्षिणभागे ओं सोमाय स्वाहा। ततो जुह्वां चरुमध्ये च घृतस्रवं दत्त्वा तत्रैव मेक्षणेनावदाय जुह्वां स्थापयेत्। चरौ चावदानस्थाने घृतस्रवं दद्यात्। ततश्चरोः पूर्वभागे घृतस्रवं दत्त्वा तत्रैव मेक्षणेनावदाय पुनरपि जुह्वां स्थापयेत्। अवदानस्थाने चरौ च तथैव घृतस्रवं दद्यात्। ततश्चरोः पश्चिमभागे मेक्षणेनावदाय पुनरपि जुह्वां स्थापयेत्। तथैवावदानस्थाने च चरौ घृतस्रवं दद्यात्। जुह्वां सर्वोपरि घृतस्रवं दत्त्वा अग्निमध्ये ओं सवित्रे स्वाहेति जुहुयात्। एतच्च भार्गवादिपञ्चविधप्रवरविषयम्। अन्यप्रवरस्तु पश्चिमभागेऽवदानं न कुर्य्यात् किन्तु जुह्वां घृतस्रवं दत्त्वा चरुमध्ये चरुपूर्वभागे चावदाय पूर्ववत् सर्वोपरि घृतस्रवं दत्त्वा जुहुयात्। ततो जुह्वां घृतस्रवद्वयं दत्त्वा चरोरुत्तरतः पूर्वभागे च घृतस्रवं दत्त्वा मेक्षणेन चरोर्बहुतरमन्नमादाय जुह्वां स्थापयेत्। अवदानस्थाने च चरौ घृतस्रवं दद्यात्। ततो जुह्वामुपरि घृतस्रवं दत्त्वाऽग्नेः पूर्वोत्तरभागे ओं अग्नये स्विष्टकृते स्वाहा इति जुहुयात्। भार्गवादिप्रवरः घृतस्रवद्वयं दद्यात् इतर प्रवरस्त्वेकघृतस्रवमिति विशेषः। ततो महाव्याहृतिहोमं कुर्य्यात्। यथा प्रजापतिरृषिर्गायत्री छन्दोऽग्निर्देवता महाव्याहृतिहोमे वि०। ओं भूः स्वाहा। प्रजापतिरृषिरुष्णिक् छन्द वायुर्देवता महाव्याहृतिहोमे वि०। ओं भुवः स्वाहा। प्रजापतिरृषिरनुष्टुप् छन्द सूर्य्यो देवता

महाव्याहृतिहोमे वि०। ओं स्वः स्वाहा। प्रजापतिर्ऋषिर्बृहती छन्दः प्रजापतिर्देवता महाव्याहृतिहोमे वि०। ओं भूर्भुवः स्वः स्वाहा। एवं प्रत्येकहोमारम्भे महाव्याहृतिहोमं कुर्य्यात्। ततो यजमानः संकल्पपूर्वकं होमीयद्रव्यं त्यजेत्। ततो ग्रहादीनामेकैकाश्चर्वाहुतीर्दद्यात्। ततो मेक्षणमग्नौ तूष्णीं हुत्वा घृताक्तां प्रादेशमितां समिधमग्नौ क्षिप्त्वा संकल्पं विधायाग्निनाम कृत्वावाह्याभ्यर्च्य आर्षादिस्मरणपूर्वकं तत्तन्मन्त्रैः प्रणवादिस्वाहान्तैः ग्रहादिपञ्चाशीतिदेवेभ्यो जुहुयात्।

अथ रव्यादीनामाहुतिमन्त्राः। तत्र रवेः, उदुत्यमित्यस्य प्रस्कण्व ऋषिर्गायत्री छन्दः सूर्य्यो देवता तत्प्रीतये कपिलाग्नावर्कसमिदादिहोमे वि०। उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्य्यम् (सामार्चिके १प्रपाठके १ अ० ३दशतौ ११ मन्त्रः)।

सोमस्य, सन्ते पयांसीत्यस्य सोम ऋषिस्त्रिष्टुप् छन्दः सोमो देवता तत्प्रीतये पिङ्गलाग्नौ पलाशसमिदादिहोमे वि०। सन्ते पयांसि समु यन्तु वाजाः संवृष्ण्यान्यभिमातिषाहः। आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व (सा० आरण्यौ ६ अध्या० ३क०)।

भौमस्य, अग्निर्मूर्द्धेत्यस्य वरुण ऋषिर्गायत्री छन्दो भौमो देवता तत्प्रीतये धूमकेत्वग्नौ खादिरसमिदादिहोमे वि०। अग्निर्मूर्द्धेति (१०६पृ० ८पं०) प्राग्वत् (सा० र्चि० १प्र० १अ० ३द० ७म०)।

बुधस्य, अग्ने विवस्वदित्यस्य भद्रो जमदग्निर्ऋषिर्बृहती छन्दो बुधो देवता तत्प्रीतये जाठराग्नावपामार्गसमिदादिहोमे वि०। अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य। आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः (सा०१प्र०१अ०,४द०६म०)।

बृहस्पतेः, बृहस्पते इत्यस्याप्रतिरथ ऋषिस्त्रिष्टुप् छन्दो बृहस्पतिर्देवता तत्प्रीतये शिखिनामाग्नावाश्वत्थसमिदादिहोमे वि० । बृहस्पते परि दीया रथेन रक्षोहामित्रॉ अपबाधमानः । प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् । (उ०सा०चिं०९प्र०३अ०, २क०१म० ) ।

शुक्रस्य, शुक्रं ते इत्यस्य भरद्वाज ऋषिस्त्रिष्टुप् छन्दः शुक्रो देवता तत्प्रीतये हाटकाग्नावौडुम्बरसमिदादिहोमे वि० । शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि । विश्वा हि माया अवसि स्वधावन् भद्रा ते पूषन्निह रातिरस्तु (सा० चिं० १प्र० २अ०, ३द० ३म० ) ।

शनेः, शन्नो देवीरित्यस्य सिन्धुद्वीप ऋषिर्गायत्री छन्दः शनिर्देवता शनिप्रीतये महातेजोऽग्नौ शमीसमिदादिहोमे वि० । शन्नो देवीरभिष्टये शंनो भवन्तु पीतये । शंयोरभि स्रवन्तु नः (सा० चिं० १प्र० १अ०, ३द० १३म० ) ।

राहोः कया न इत्यादि (१०७पृ० १०पं० ) (सा चिं० २प्र० २अ०, ३द०५म० ) ।

केतूनाम्, केतुं कृण्वन्नित्यादि (१०७पृ०, १४पं० ) प्राग्वत् (उ०सा०चिं०६प्र०३अ०, १२क० ३म० ) ।

अथाधिदेवानां तत्र सूर्य्याधिदेवशिवस्य, आ वो राजानमित्यस्य वामदेव ऋषिस्त्रिष्टुप् छन्दो रुद्रो देवता तत्प्रीतये शतमङ्गलाग्नौ पलाशादिसमिदादिहोमे वि० । आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः । अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् (सा० चिं० १प्र० २अ०, २द० ७म० ) ।

उमायाः, आपो हि ष्ठेत्यस्य सिन्धुद्वीप ऋषिर्गायत्री छन्द उमा देवता तत्प्रीतये शतमङ्गलाग्नौ पलाशादिसमिदादिहोमे

वि०। आपो हि ष्ठा मयो भुवस्ता न ऊर्ज्जे दधातन। महे रणाय चक्षसे (उ० सा० चिं० ९प्र० २अ०, १० क० १म०)।

स्कन्दस्य, स्योनेत्यस्य मेधातिथिर्ऋषिर्गायत्री छन्दः स्कन्दो देवता तत्प्रीतये वि०। स्योनेत्यादि (१०९पृ० १९पं०) (छा० ब्रा० २प्र० २क० ७म०)।

नारायणस्य, इदं विष्णुरित्यादि (१७५पृ० २४पं०) प्राग्वत्।

ब्रह्मणः, त्वमिदित्यस्य गौतम ऋषिर्बृहती छन्दो ब्रह्मा देवता तत्प्रीतये वि० (१०८पृ० १२पं०) प्राग्वत्।

इन्द्रस्य, इन्द्रमिदित्यस्य प्रजापतिर्ऋषिर्बृहती छन्द इन्द्रो देवता तत्प्रीतये वि०। इन्द्रमिद् देवतातय इन्द्रं प्रयत्यध्वरे। इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये (सा० चिं० ३प्र० २अ०, १द० ७म०)।

यमस्य, आयं गौरित्यस्य सर्पराज्ञी ऋषिर्गायत्री छन्दो यमो देवता तत्प्रीतये वि०। आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः। पितरञ्च प्रयन्त्स्वः (उ०सा० चिं० ६प्र० १अ०, ११क० १म०)।

कालस्य, ब्रह्मजज्ञानमित्यस्य ब्रह्मा ऋषिस्त्रिष्टुप् छन्दः कालो देवता तत्प्रीतये वि०। ब्रह्मजज्ञानमित्यादि (१०८पृ० २६पं०) (सा० चिं० ४प्र० १अ० ३द० ९म०)

चित्रगुप्तस्य, चित्र इदित्यस्य चित्रगुप्त ऋषिर्जगती छन्दश्चित्रगुप्तो देवता तत्प्रीतये वि०। चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावन्वेति धातवे। अनूधा यदजीजनदधा चिदा ववक्षत् सद्यो महि दूत्यां चरन् (सा० चिं० १प्र० २अ० २द० २म०)

अथ प्रत्यधिदैवतानां तत्राग्नेः, अग्निं दूतमित्यस्य भरद्वाज

ऋषिर्गायत्री छन्दोऽग्निर्देवता तत्प्रीतये वि० । अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ( सा० चिं० १प्र० १अ० १द० ३म० )

अपाम्, उदुत्तममित्यस्य गौतम ऋषिस्त्रिष्टुप् छन्द आपो देवतास्तत्प्रीतये वि० । उदुत्तममित्यादि ( १७२पृ० १२पं० ) प्राग्वत् ( छा० ब्रा० १प्र० ७क० )

भूम्याः, पृथिव्यन्तरिक्षमित्यस्य विष्णुर्ऋषिरुष्णिक् छन्दः पृथिवी देवता तत्प्रीतये वि० । पृथिव्यन्तरिक्षं द्यौरापः कनिक्रदत् । सिन्धुरापो मरुतो मादयन्तां घर्मो ज्योतिः । ( सा० गा० ३प्र० २अ० १६गा० ) ।

विष्णोः, सहस्रशीर्षेत्यस्य नारायण ऋषिरनुष्टुप् छन्दो-विष्णुर्देवता तत्प्रीतये वि० । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं सर्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् । ( सा० आरण्यके ६अध्या० ४ख० १३द० ३म० )

इन्द्रस्य, इन्द्रायेन्दवित्यस्य दृषोद्दधीय ऋषिर्गायत्री छन्द इन्द्रो देवता तत्प्रीतये वि० । इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः । अर्कस्य योनिमासदम् । ( सा० चिं० ५प्र० २अ० ४द० ६म० )

शच्याः, एकाष्टकेत्यस्य वसिष्ठ ऋषिस्त्रिष्टुप् छन्दः शची देवता तत्प्रीतये वि० । एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् । तेन देवा असहन्त शत्रून् हन्तासुराणामभवच्छचीभिः ( छा० ब्रा० २प्र० ३क० )

प्रजापतेः, प्रजापते इत्यादि (११०पृ० ११पं०) प्राग्वत् (छा० ब्रा० २प्र० ५क० )

सर्पाणाम्, तवेदित्यस्य वसिष्ठ ऋषिस्त्रिष्टुप् छन्दः सर्पा देवतास्तत्प्रीतये वि० । तवेदिन्द्रा वमं वसु त्वं पुष्यसि मध्य-

सम्। सत्रा विश्वस्य परमस्य राजसि नकिष्ट्वा गोषु वृखते (सा० चिं० ३प्र० २अ० ३द० ८म० )

ब्रह्मण:, एष ब्रह्मेत्यस्य प्रजापतिर्ऋषिर्द्विपदा गायत्री छन्दो ब्रह्मा देवता तत्प्रीतये वि०। एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे ( सा० चिं० ५प्र० २अ० १द० २म० )

अथ विनायकादिपञ्चकस्य। तत्र विनायकस्य, आ तू न इत्यस्य गौरवीत ऋषिर्गायत्री छन्दो विनायको देवता तत्प्रीतये वि०। आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं संगृभाय। महाहस्ती दक्षिणेन ( सा० चिं० २प्र० २अ० ३द० ३म० )

दुर्गाया:, इमं स्तोममित्यस्य कुत्स ऋषिर्जगती छन्द: दुर्गा देवता तत्प्रीतये वि०। इमं स्तोममर्हते इत्यादि (१७७पृ० ४पं० ) ( सा० चिं० १प्र० २अ० २द० ४म० )

वायो:, क्राणा शिशुरित्यस्येन्द्र ऋषिस्त्रिष्टुप् छन्दो वायुर्देवता तत्प्रीतये वि०। क्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम्। विश्वा परिप्रिया भुवदध द्विता ( सा० चिं० ६प्र० २अ० ३द० ५म० ) क्राणा इत्यत्र शाखान्तरे प्राणा इति पाठ:।

आकाशस्य, आदित् प्रत्नस्येत्यस्य निधानकाम ऋषिर्गायत्री छन्द आकाशो देवता तत्प्रीतये वि०। आदित् प्रत्नस्य रेतसो ज्योति: पश्यन्ति वासरम्। परो यदिध्यते दिवि। ( सा० चिं० १प्र० १अ० २द० १०म० )

आश्विनयो:, एषो उषा इत्यस्य प्रस्कण्व ऋषिर्गायत्री छन्द आश्विनौ देवते तत्प्रीतये वि०। एषो उषा अपूर्व्या व्युच्छति प्रिया दिव:। स्तुषे वामश्विना बृहत् ( उत्तरसा० चिं० ८प्र० ३अ० ७क० १म० )

अथ दिक्पालानां तत्रेन्द्रस्य, त्वामिद्धीत्यस्य भरद्वाज ऋषिर्बृहती छन्द इन्द्रो देवता तत्प्रीतये वि०। त्वामिद्धि हवामहे

साती वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठा-स्ववंतः ( सा० चिं० ३प्र० १अ० ५द० २म० )

अग्नेः, अग्निरित्यस्य श्रौत ऋषिर्गायत्री छन्दोऽग्निर्देवता तत्प्रीतये वि० । अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतः । ( सा० चिं० १प्र० १अ० १द० ४म० ) ।

यमस्य, नाके सुपर्णमित्यस्य यम ऋषिस्त्रिष्टुप् छन्दो यमो देवता तत्प्रीतये वि० । नाके सुपर्णमुप यत् पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा । हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ( सा० चिं० ४प्र० १अ० ३द० ८म० )

निर्ऋतेः, वेत्था हीत्यस्यादित्य ऋषिरुष्णिक् छन्दो निर्ऋतिर्देवता तत्प्रीतये वि० । वेत्था हि निर्ऋतीनां वज्र-हस्त परिवृजम् । अहरहः शुन्ध्युः परिपदामिव । ( सा० चिं० ५प्र० १अ० १द० ६म० )

वरुणस्य, इमं मे इत्यस्य पुष्कल ऋषिर्गायत्री छन्दो वरुणो देवता तत्प्रीतये वि० । इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युरा च के (उ० सा० चिं० ७प्र० ३अ० ६क०)

वायोः, वात आवात्वित्यस्य प्रतीचीनेन्दुः काशीत ऋषि-र्गायत्री छन्दो वायुर्देवता तत्प्रीतये वि० । वात आवातु भेषजं शंभु मयोभु नो हृदे । प्र न आयूंषि तारिषत् ( सा० चिं० २प्र० २अ० ४द० १०म० )

सोमस्य, स्वादिष्ठयेत्यस्य गम्भीर ऋषिर्गायत्री छन्दः सोमो देवता तत्प्रीतये वि० । स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः । (सा०चिं०५प्र०२अ०४द०२म०)

ईशानस्य, तद्वो गायेत्यस्य रुद्र ऋषिर्गायत्री छन्द ईशानो देवता तत्प्रीतये वि० । तद्वो गाय सुते सचा पुरुहूताय सत्वने । शंयद्गवे न शाकिने ( सा० चिं० २प्र० १अ० ३द० १म० )

ब्रह्मणः, ब्रह्म जज्ञानमित्यादि मन्त्रः ( ११० पृ० २१पं० ) प्राग्वत्।

अनन्तस्य, समान इत्यस्य उशना ऋषिस्त्रिष्टुप् छन्दोऽनन्तो देवता तत्प्रीतये वि०। समानो अध्वा स्वस्रोरनन्तस्तमन्यान्या चरतो देवशिष्टे। न मेथेते न तस्थतुः सुमेके नक्तोयासा समनसा विरूपे। ( उ० सा० चिं० ८प्र० ३अ० १४क० ३म० )

अथ वस्वादीनां तत्र वसूनाम्, तमग्निमस्त इत्यस्य वामदेव ऋषि विराट् छन्दो वसवो देवतास्तत्प्रीतये वि०। तमग्निमस्ते वसवो न्यृण्वन्त्सुप्रतिचक्षमवसे कुतश्चित्। दक्षाय्यो यो दम आस नित्यः। ( उ० सा० चिं० ६प्र० १अ० १०क० २म० ) प्रत्येकदेवतात्वपक्षे ओं धराय स्वाहेत्यनेन जुहुयात्। तन्नामानि (९०पृ० १४पं०) होमसंख्या च (११३ पृ० २०पं०) प्राग्वत्।

रुद्राणाम्, आ वो राजानमित्यादि ( १८२ पृ० २१पं० ) प्राग्वत्। प्रत्येकदेवतात्वपक्षे प्रणवादिनाममन्त्रेण स्वाहान्तेन होमः। तन्नामानि (९२ पृ० २६ पं०) होमसंख्या च (११४ पृ० ३पं० ) प्राग्वत्।

आदित्यानाम्, आदित्यैरित्यस्य भरद्वाज ऋषिः विराट् छन्द आदित्या देवतास्तत् प्रीतये वि०। आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं भेषजा करत्। ( उ० सा० चिं० ४प्र० १अ० २३क० ३म० ) प्रत्येकदेवतात्वपक्षे प्रणवादिनाममन्त्रेण स्वाहान्तेन होमः। तन्नामानि ( ९५पृ० ७पं० ) होमसंख्या च ( ११४पृ० १२पं० ) प्राग्वत्।

मरुद्गणानाम्, पवमाना इत्यस्याप्सरस ऋषयः बृहती छन्दो मरुतो देवतास्तत्प्रीतये वि०। पवमाना असृक्षत पवित्रमति धारया। मरुत्वन्तो मत्सरा इन्द्रियाहयामेधामभिप्रयांसि च ( सा०

र्चि॰ ६प्र॰ १अ॰ ३द॰ १२म॰ ) प्रत्येकदेवतात्वपक्षे प्रणवादि-स्वाहान्तनाममन्त्रेण होमः । तन्नामानि ( ८५ पृ॰ २१पं॰ ) होमसङ्ख्या च ( ११४ पृ॰ २२पं॰ ) प्राग्वत् ।

ब्रह्मणः, ब्रह्म जज्ञानमित्यादि मन्त्रः ( ११४ पृ॰ २५पं॰ ) प्राग्वत् ।

अच्युतस्य, इदं विष्णुरित्यादि ( १७५ पृ॰ २४पं ) प्राग्वत् ।

ईशस्य, आ त्वा सोमस्येत्यस्य सोम ऋषिर्बृहती छन्द ईशो देवता तत्प्रीतये वि॰ । आ त्वा सोमस्य गल्दया सदा याचन्नहं ज्या भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ( सा॰ र्चि॰ ४प्र॰ १अ॰ २द॰ ५म॰ )

अर्कस्य, इन्द्रायेत्यस्य गौरवीत ऋषि गायत्री छन्दोऽर्को देवता तत्प्रीतये वि॰ । इन्द्राय मद्वने सुतं परिष्टोभन्तु नो गिरः । अर्कमर्चन्तु कारवः । (सा॰ र्चि॰ २प्र॰ २अ॰ २द॰ ४म॰)

वनस्पतेः, वनस्पते इत्यस्य वाभ्रव्य ऋषिस्त्रिष्टुप् छन्दो वनस्पतिर्देवता तत्प्रीतये वि॰ । वनस्पते वीड्वङ्गो हि भूयाः अस्मत्सखा प्रतरणः सुवीरः । गोभिः संनद्धो असि वीलयस्व आस्थाता ते जयतु जेत्वानि । ( छा॰ ब्रा॰ १प्र॰ २अ॰ ७क॰ )

अत्रैव समये जापकैः सूक्तानि जप्यानि येषां सूक्तं नास्ति तेषामार्षादिस्मरण पूर्वकं होममन्त्र एव जप्यः ।

अथ सामगानां जप्यसूक्तानि अभिधीयन्ते । तत्र रव्यादिकेत्वन्तानां नवानां ग्रहाणां मध्ये सोमं विना सर्वेषां होममन्त्रा एव सूक्तरूपाः । ते च प्रागुक्ताः प्रागुक्तार्षादिस्मरणपूर्वकं जप्याः ।

सोमस्य तु । प्रकाव्यमुशनेवेत्यस्य द्वादशर्चस्य सोमसूक्तस्याद्यानां तिसृणां वाजजिदृषिस्त्रिष्टुप् छन्दः शिष्टानामादित्य ऋषिर्गायत्री छन्दः सोमो देवता तत्प्रीतये जपे वि॰ । ओं प्रकाव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति । महि-

व्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन्॥ १॥ प्र हंसासस्तृपला वग्नुमच्छामादस्तं वृषगणा अयासुः। अङ्गोषिणं पवमानं सखायो दुर्मर्षं वाणं प्रवदन्ति साकम्॥ २॥ स योजत उरुगायस्य जूतिं वृथा क्रीड़न्तं मिमते न गावः। परीणसं कृणुते तिग्मशृङ्गो दिवा हरिर्ददृशे नक्तमृज्रः॥ ३॥ प्रस्वानासो रथा इवार्वन्तो न श्रवस्यवः। सोमासो राये अक्रमुः॥ ४॥ हिन्वानासो रथा इव दधन्विरे गभस्त्योः। भरासः कारिणामिव॥ ५॥ राजानो न प्रशस्तिभिः सोमासो गोभिरञ्जते। यज्ञो न सप्त धातृभिः॥ ६॥ परि स्वानास इन्दवो मदाय वर्हणा गिरा। मधो अर्षन्ति धारया॥ ७॥ आपानासो विवस्वतो जिन्वन्त उषसो भगम्। सूरा अण्वं वितन्वते॥ ८॥ अप द्वारा मतीनां प्रत्ना ऋण्वन्ति कारवः। वृष्णो हरस आयवः॥ ९॥ समीचीनास आशत होतारः सप्तजानयः। पदमेकस्य पिप्रतः॥ १०॥ नाभा नाभिं न आददे चक्षुषा सूर्य्यं दृशे। कवेरपत्यमा दुहे॥ ११॥ अभिप्रियं दिवस्पदमध्वर्य्युभिर्गुहा हितम्। सूरः पश्यति चक्षसा॥ १२॥ (ऊ० सा० चिं० ४प्र० २अ० १क०)

अथाधिदेवानां तत्र रुद्रस्य, एकादशसामात्मकरुद्रसंहितारूपरुद्रसूक्तस्य, आद्यस्या वो राजानमित्यस्य वामदेव ऋषिस्त्रिष्टुप् छन्द, तद्वो गायेति चतुःसाम्नो वर्गस्य रुद्रभार्गवौ ऋषी गायत्री छन्द, मूर्द्धानं दिव इत्यस्यास्त्चि गीतानामाज्यदोहाख्यानां त्रयाणां साम्नां वैश्वानरः ऋषिस्त्रिष्टुप् छन्द, अधिपतायौत्यादिकानां देवव्रतसंज्ञकानां त्रयाणां मध्ये पूर्वयोः, रुद्र ऋषि अन्त्यस्य विश्वे देवा ऋषि उत्कृतिश्छन्दः, सर्वेषां रुद्रो देवता तत्प्रीतये रुद्रसंहितात्मकसूक्तजपे वि०। आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः। अग्निं पुरा

तनयित्नोरचित्ताद्धिरण्यरूपमवसे क्रणुध्वम् । ( सा० चिं० १प्र० २अ० २द० ७म० ) । तद्दो । हो वा । गाया २, सुतायि सा २,३,४चा । पुरुहूता । य सोत्वा १, ना २, यि । शंयत् । हा ३, उ ५, होयि । गा २,३,४ वायि । ना २ शा २,३,४ । उ५, हो वा । ए ३, । किनै २,३,४,५ ॥ १ ॥ तद्दो गाया सुतायि सचा ३ । पूरू २,३ हूता ३,४ । हा हो ३, । या सात्वा २,३,४ नायि । शंयद्गा २,३, वे । ना शा २, । हो २, हु वो २,३,४, वा । का ५, यि नै ६, । हायि ॥ २ ॥ तद्दो गाय सुते सचा ६, । ए । पुरुहूताय सत्वने । पुरुहूता या सत्त्वा २,३, ना ३,४, यि । शंयत् गावा । उ २,३,४, वा । ना २,३, शा ३, का ३,४,५, । यि नै ६, । हायि ॥ ३ ॥ तद्दो गाय सुते सचा ६, । ए । पुरुहूताय सत्वनायि । शंयद्गा २,३, । वे । ऐ २, हो १, औ २, ३, यिही । न शा २,३, । का २, यि ना २,३,४, । उ ५, हो वा ई २,३,४, ॥ ४ ॥ ( सा० वेगाने ३प्र० २अ० १द० १,२,३,४ गा० ) एकद्वित्वादिचिह्नसूचितनिषादादिस्वरैर्गाना-शक्तौ । तद्दो गाय सुते सचा पुरुहूताय सत्वने । शंयद्गवे न शाकिनै इति मन्त्रं चतुर्द्धा जपेत् । अथ आज्यदोहानि त्रीणि । हाउ ( त्रिधा ) आज्यदोहम् ( त्रिधा ) । मूर्द्धानं दा यि वा ३, अरातिं पृथिव्याः । वैश्वानराम् । ऋत आ । जातमग्निम् । कविं सम्रा । जा ३, मतिथिं जनानाम् । आसन्नः पा । त्रा ३, जनय । न्त देवाः । हाउ ॥ १ ॥ आज्यदोहम् (द्विधा) आज्यदो ५, हा उ । वा ए । आज्यदोहम् । ए । आज्यदोहा २, '३ ४, ५ म् ॥ १ ॥ हाउ ( त्रिधा ) । ह्रम् चिदोहम् । ३ । मूर्द्धानं दायि इत्यादि देवा इत्यन्तं पूर्ववत् । हाउ ( त्रिधा ) ह्रम् चिदोहम् । ( द्विधा ) चिदो ३, हाउ । वा । ३ ई २, ३, ४, ५ ॥ २ ॥ हाउ । ३ च्योहम् । ३ । मूर्द्धानं दायीत्यादिपूर्व-

वत्। हाउ। ३। वोहम् २। च्यो ३, हाउ। वा ३, ए ३,। च्यताम्॥ ३॥ (सामारण्ये १प्र० २अ०, १६, १७, १८गा०) एवं गानाशक्तौ मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्। कविं सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवा इति मन्त्रं त्रिधा जपेत्। अथ देवव्रवसंज्ञकानि त्रीणि। अधिप तायि मित्र। पतायि। चत्रप। तायि। स्वः प तायि धनप। ता २, यि। ना २, माः। मन्युना वृत्रहा सूर्य्येण स्वराडन्नेन मघवा दक्षिणास्य प्रिया तनू राज्ञा विश्वं दाधार। वृषभस्त्वष्टा वृत्रेण शचीपतिरन्नेन गयः पृथिव्या स्वणिकोऽग्निना विश्वं भूतम्। भ्यभवो वायुना विश्वाः। प्रजा अभ्यपवथा वषट्कारेणार्द्धभाक् सोमेन सोमपाः समिज्या परमेष्ठी। ये देवादेवाः। दिविषदः स्थलेभ्यो वो देवादेवेभ्यो नमः। ये देवादेवाः। अन्तरिक्षसदः। स्थलेभ्यो वो देवादेवेभ्यो नमः। ये देवादेवाः। पृथिवीषदः। स्थलेभ्यो वो देवादेवेभ्यो नमः। ये देवादेवाः। असुषदः। स्थलेभ्यो वो देवादेवेभ्यो नमः। ये देवादेवाः। दिक्षुसदः। स्थलेभ्यो वो देवादेवेभ्यो नमः। ये देवादेवाः। आशासदः। स्थलेभ्यो वो देवादेवेभ्यो नमः। ये देवादेवाः। अवज्यामिव धन्वने वितं मन्युन्नयामसि मृड़तां न इह अस्मभ्यम्। (इडा २, ३, भा)। य इदं विश्वं भूतं प्रुयो ३,। आउ (। वा २, ३,) ना २, ३, ४, माः ॥ १॥ अधिप। तायि। मित्रप। तायि। चत्रप। तायि। स्वः प। तायि। धनप। ता २, यि। ना २, माः। नम उत्तिभ्यश्चोत्तन्वानेभ्यश्च नमो नीषङ्गिभ्यश्चोपवीतिभ्यश्च नमोऽस्यद्भ्यश्च प्रतिदधानेभ्यश्च नमः प्रविध्यद्भ्यश्च प्रव्याधिभ्यश्च नमः त्सरद्भ्यश्च त्सारिभ्यश्च नमः श्रीतिभ्यश्च आयिभ्यश्च नमस्तिष्ठद्भ्यश्चोपतिष्ठद्भ्यश्च नमो यते च वियते च नमः पथे च विपथाय

च । अवज्यामिव धन्वने इत्यादि प्राग्वत् ॥ २ ॥ अधिप । तायि । मित्रप । तायि । चत्रप । तायि । स्वः प । तायि । धनप । ता २, यि । ना २ माः । नमोऽन्नाय नमोऽन्नपतये एकात्त्वाय चावपन्नादाय च नमो नमः । रुद्राय तीक्ष्णदे नमः स्थिराय स्थिरधन्वने नमः प्रतिपदाय च पटरिणे च नमस्त्रियम्बकाय च कपर्दिने च नम आस्रायेभ्यश्च प्रत्यास्रायेभ्यश्च नमः क्रव्येभ्यश्च विरिम्फेभ्यश्च नमः संवृते च विवृते च । अवज्यामित्यादि पूर्ववत् ॥ ३ ॥ ( सामारण्यौ ५प्र० १अ० ६,७,८ गा० ) गानाशक्तौ अधिपतये इत्याद्यनुवाकं त्रिधा जपेत् अधिपतये मित्रपतये चत्रपतये स्वःपतये धनपतये नम इत्येव पठनीयमेवमग्रेऽपि अस्मभ्यमित्यनन्तरं य इदं विश्वं भूतं षूयोवे नम इति नीषङ्गीत्यत्र निषङ्गीत्येव पठनीयमन्यत् गानांशं विहाय समानम् ।

उमायाः, सूक्ताभावात् आपो हिष्ठेति मन्त्रः प्राग्वत् ।

स्कन्दस्य, एकादशसामात्मकस्कन्दसंहितारूपस्कन्दसूक्तस्य मध्ये आमन्द्रैरित्यादि त्रयाणां कण्व ऋषिर्बृहती छन्द, आनो विश्वा सुहव्यमित्यादि त्रयाणां शक्तिर्ऋषिर्बृहती छन्द, प्रसेनानीरित्यादि त्रयाणां कुत्स ऋषिस्त्रिष्टुप् छन्द, पवित्रं ते इत्यादिद्वयोरादित्य ऋषि जगती छन्दः, सर्वेषां स्कन्दो देवता तत्प्रीतये वि० । आ मन्द्रैरी । न्द्र हरिभायियाँहि मयूरा ३, रोमा भा ३, यिः । मा त्वा कायि चीत् । नियेमू २, ३, ४, रीत् । न पाशिनाः । अति धान्वे २, । वताँ २, ३, । आ २ यि हा २, ३, ४ उ५, ही वा । वा २, ३, ४, याः ॥ १ ॥ आमन्द्रैरिन्द्र । हा ५, रिभायिः । याहि मयूररोमभायिः । मा त्वा का २, ३, ई चीत् । नायि ये मूरित् । न पाशायिनाः । अतायि धा २, ३, न्वे । वताँ २, ३, । आ २ यि हा २, ३, ४, । उ५

हौ वा। व योरे, भी २, ३, ४, ५ : ॥ २ ॥ आमन्द्रैरिन्द्र। हा ५ रिभीः। याहि मयूररोम भाउ। वा २। मा त्वा २,। केचिन्नियेमु रिन्न पाशिना उ। वा २,। आ ति २,। धन्वे व ता ३, १,। उ५ वा २, ३, उ५ ई२, ३, ४, हौ ॥ ३ ॥ (सामवेगाने ६ प्र० २ अ० २७, २८, २९ गा०) गानाशक्तौ आमन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः। मा त्वा केचिन्नि येमुरिन्न पाशिनोऽति धन्वेव ताँ इहि इति मन्त्रं त्रिधा जपेत्। आ नः। ए। विश्वा सुहाव्या २, म्। आयिन्द्रं समत्। सु भू १, षाता। ऊ २, ३, ४, ५। हा ३, हायि। ब्रह्माणि सवना। नि वृत्रहान्, परमा २, ३, ज्याः। आर्चा ३,। हायि। षमा उ ५, ३,। हौ वा हौ ५, ईड़ा ॥ १ ॥ आनो विश्वासु हाव्याम्। इन्द्रं समत्सु भूषतो। पब्रा २, ३, ह्माणि सवना। नि वृत्रहान् परमा २, ३, ज्याः। अर्चा ३। हायि। षमा। उ ५, ३, हौ वा हौ ५, ईडा ॥ २ ॥ आनो विश्वासु हाव्याम्। इन्द्राम्। समत्सु भूषत। उपा ब्रा १. ह्मा २, णि सवनानि वृत्रहन्। परामा १, ज्या २, :। ऋचीषा २, ३, मा ३ ४, ३,। ओ २, ३, ४, ५, ईडा ॥३॥ (सा० वे० ७प्र० २अ० ७; ८, ९गा०) गानाशक्तौ आनो विश्वासु हव्यमिन्द्रं समत्सु भूषत। उप ब्रह्माणि सवनानि वृत्रहन् परमज्या ऋचीषम इति मन्त्रं त्रिधा जपेत्। हौ ४ वा। उहुवा (त्रिधा) हौवा। प्रसेनानायिः। शूरो आ ३, ग्रायि रथानाम्। गव्यं न तायि हर्षता ३, यि। ह। अस्य सेना। भद्रान् कृणवान्। इन्द्र हा ३,। वानुत्सखिभ्याः। आ सोमो व। स्वा ३, रभसानि दत्तायि। हौ ४ वा उहुवा। ३। हौवा ६, हाउवा ॥१॥ उ ५, हौ। ३। वा ३,४,५,। प्रसेना नायिः। शूरो आ ३,। ग्रायि रथानाम्। गव्यं न ताई। हर्षता ३, यि। अस्य सेना। भद्रान् कृणवान्। इन्द्रहा ३,। वानुत्सखिभ्याः। उ५, हौ।

३। वा ३, ४, ५,। श्रा सोमो वा। स्त्वा ३, रभ। सा ३ ४,३,। नी३, दा ५, त्ता ६, ५, ६, यि॥ २॥ श्रो हो ३, वा ३, ४, ५,। प्रसेनानायिः। शूरो श्रा ३,। ग्रायि रथानाम्। गव्यं नेतायि। हर्यता ३ यि। श्रस्य सेना। भद्रान् कृखान्। इन्द्र हा ३,। वान्तसखिभ्याः। श्रो हो ३, वा ३,४,५,। श्रा सोमो वा। स्त्वा ३, रभ सा ३, ४, ३, नी३, दा ५,। त्ता २,३,४,५; यि॥ ३॥ (सा० वेगा० १५प्र० २श्र० १६, १७, १८गा०) गानाशक्तौ प्रसेनानीः शूरो श्रग्रे रथानां गव्यं नेति हर्षते श्रस्य सेना। भद्रान् कृखन्निन्द्र हवान्तसखिभ्यः श्रा सोमो वस्त्रा रभसानि दत्ते इत्यस्य त्रिधा जपः। पवित्रं ते विततं ब्रह्मणस्पते ३,। हुवे २,।३। हुवे २,।३। होवा।३। हा।३। हायि। प्रभुर्गायत्राणि परियेषि विश्वता २, ३, :। हुवे २,।३। हुवे २, ।३। होवा ।३। हा।३। हायि। श्रतप्ततनूर्न तदा २ मो श्रश्नुते।३। हुवे २, ।३। हुवे २,।३। होवा।३। हा।३। हायि। शृतास इद्वहन्तः सं तदा २ शत। हुवे २,। ३। हुवे २,।३। होवा।३। हा।३। हा ३, ४, उ ५, होवा। श्रर्को देवाना २, परमे वि या २, मा २, ३, ४, ५, न्॥ १॥ पवित्रं ते विततं ब्रह्मणस्पते ३,। हुवायि उ ५, होवा।२। प्रभुर्गात्राणि परियेषि विश्वता २, ३, :। हुवायि। उ ५, होवा।२। श्रतप्ततनूर्न तदा २ मो श्रश्नुते ३। उ ५, होवा।२। शृतास इद्वहन्तः संतदा २, शत। हुवायि उ ५, हो।२। वा २, ३, ४। उ ५। होवा। श्रर्कास्य देवाः परमे वियो २, मा २, ३, ४, ५, न्॥२॥ (सा० वेगा० १६ प्र० २श्र० ३४, ३५गा०) गानाशक्तौ पवित्रं विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्य्येषि विश्वतः। श्रतप्त तनूर्न तदामो श्रश्नुते शृतास इद्वहन्तः सं तदाशत। इति मन्त्रस्य द्विधा जपः।

नारायणस्य, नवसामात्मकविष्णुसंहितारूपनारायणसूक्तस्य

मध्ये इदं विष्णुरित्यस्य विष्णुर्ऋषिर्गायत्री छन्दः, वृत्तस्य वृष्णा इत्यस्य विष्णुर्ऋषिर्जगती छन्दः, प्रकाव्यमुशना इत्यन्त्यवाराहस्य वाजजिदृषिस्त्रिष्टुप् छन्दः, सहस्रशीर्षेत्यादिषड्चगीतयोः पुरुषव्रतयोर्मध्ये पञ्चानामनुष्टुप्, अन्त्याया गायत्री छन्दः, सर्वेषां नारायणो देवता तत्प्रीतये वि०। इदा ६, मे। विष्णू २, :। विचक्रा २, ३, ४, मायि। त्रायि धा नि। दधायि पा १, दा २, म्। समू २,। ह्वो १,। ढा २, ३, मा ३,। स्या २, पां० २, ३, ४,। उ५, हो वा। ए ३,। सुले १॥ १॥ (सा० वे० ६ प्र० १अ० १४ गा०) गानाशक्तौ इदं विष्णुरित्यादि (१७५पृ० २४पं०) प्रागुक्तमन्त्रस्य जपः। हा उ २, हा उ। औं हा २,। औं हाइ। वयो होइ ३,। ३। पयो होइ। ३। चक्षुर्होइ। ३। श्रोत्रा होइ। ३। आयुर्होइ। ३। तपो होइ ३,। ३। वर्चो होइ। ३। तेजो होइ। ३। सुवर्होइ। ३। ज्योतिर्होइ। ३। पृत्तस्य वृष्णो अरुषस्य नु मा २, ३, हाः। प्र नो वर्चो विदथा जातवेदा २, ३, साइ। वैश्वानराय मतिर्न व्यसे शु २, ३, चोः। सोम इव पवते चारुरग्ना २, ३, या ३, य्। हाउ २,। हाउ। औं हा। २। औं हाइ। वयो होइ। ३। पयो होइ। ३। चक्षुर्होइ। ३। श्रोत्रा होइ। ३। आयुर्होइ। ३। तपो होइ। ३। वर्चो होइ। ३। तेजो होइ। ३। सुवर्होइ। ३। ज्योतिर्होइ। २। ज्योतिर्हो २, वा २, ३, ४,। अहो वा। ए। अग्निः समुद्रमाचयता ए। अग्निर्मूर्द्धाभवद्दिवः। ए। आयुर्धा अस्मभ्यं वर्चोधा देवेभ्या २, ३, ४, ५, :॥ १॥ (सा० अर० ६प्र० १अ० ३गा०) गानाशक्तौ पृत्तस्य वृष्णो अरुषस्य नु महः प्र नो वचो विदथा जातवेदसे। वैश्वानराय मतिर्न व्यसे शुचिः सोम इव पवते चारुरग्नये इति मन्त्रस्य त्रिर्जपः। हा उ हाउ। हुप्। प्रकावियाम्। उशने। व ब्रुवाणाः। देवो देवा। ना ३, ज्ञनि। मा

विवक्ती । मह्विव्रताः । शुचि वा ३, । न्धूः पावाकाः । हाउ हाउ । हुप् । पदा वरा । हो ३, अभि । आ ३, ४, ३, यि । ती ३, रा ५, यि भा ६, ५, ६, न् ॥ १ ॥ (सा० वे० १५प्र० १अ० ३६गा०) गानाग्रक्तौ प्रकाव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति । मह्विव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् । इत्यस्य त्रिर्जपः । अथ पुरुषव्रतं पश्चानुगानम् । उहु वा हाउ । (त्रिधा) सहस्रशीर्षा पुरू २, ३, षाः । सहस्राक्षः सहस्रा १, २, पात् । स भूमिं सर्वतो वा २, ३, त्वी । अत्यति-ष्ठद्दशाङ्गु १, २, लाम् । उहु वा हाउ । (द्विधा) उहु वा ३, हाउ । वा ३, । ईट् । ईडा २, ३, ४, ५ ॥१॥ उहुवौ होवा २, । (त्रिधा) त्रिपादूर्द्ध्वं उदैत् पुरू २ ३, षाः । पादोऽस्येहाभवत् पू २, ३, नाः । तथा विष्वङ्विया क्रा २, ३, मान् । अशनान-शने आ २, ३, भी । उहुवौ होवा २, । (द्विधा) उहु वौ । हो २, । वा २, ३, ४; । ऊ५, हो वा । ई २, ३, ४, डा । उहुवौ होवा २, । (द्विधा) । उहुवौ । हो २. । वा सू २, ३, ४, वाः । उहुवौ । होवा (द्विधा) । उहुवौ । हो २, । वा २, ३, ४, । ऊ । उ ५, होवा । २, ३, ४, ५, ॥ २ ॥ इयौ होवा २, (त्रिधा) पुरुष एवेदं सा २, ३, र्वम् । यद्भूतं यच्च भावा २, ३, याम् । पादोऽस्य सर्वाभूता २, ३, नी । त्रिपादस्यामृतं दा २, ३, यि वी । इयौ होवा २, । (द्विधा) । इयौ । हो २, । वा २,३,४, । उ ५, हो वा । ई २,३,४, डा । इयौ होवा २, । (द्विधा) । इयौ । हो २, । वा २, ३, ४, । उ ५, हो वा । ज्यो २, ३, ४, तीः । इयौ होवा २, । (द्विधा) । इयौ । हो २, । वा २, ३, ४, । उ ५, हो वा । ई २, ३, ४, ५, ॥३॥ हाउ ३, । तावानस्य । महा २, ३, । यि मा ३, । हाउ ३, । ततो ज्यायांश्च पूरू २, ३, षा ३, : । हाउ ३, । उतामृत-

त्वस्येशा २, ३, ना ३, : । हाउ ३, । यदन्नेनातिरोहा १, २, तो ३, । हाउ ३, । वा ३, । ईट् । ईडा २, ३, ४, ५, ॥ ४ ॥ हाउ ३, । वा । ततो विराडजायत । हाउ ३, वा । विराजो अधिपूरुषः । हाउ ३, वा । सजातो अत्यरिच्यत । हाउ ३, । वा । पश्चाद्भूमिमथो पुरः । हाउ ३, वा ३, । ई २, ३, ४, ५ ॥ ५ ॥ अथ पुरुषव्रतमेकानुगानम् । हाउ ३, । आस्मीनस्मिन् । ( त्रिधा ) । न्टम्णायि न्टम्णम् । ( त्रिधा ) निधायिमाहि । ( त्रिधा ) । कया नश्चित्रा ३, आभू १, वा २, न् । ऊती सदा वृ ३, धा सा १, खा २, । कया शचिष्ठा ३, या वा १, र्ता २, ३, । हाउ ३, । आस्मीनस्मिन् । ( त्रिधा ) । न्टम्णायि न्टम्णम् । ( त्रिधा ) निधायिमाहि ( त्रिधा ) निधा २, ३, यि मा २, हा २, ३, ४, । उ ५, हो वा । सुवर्ज्योती २, ३, ४, ५, : । ( सामारण्ये ५प्र० १अ० १३, १४, १५, १५, १६, १७, १८ गा० ) गानाशक्तौ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं सर्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ त्रिपादूर्द्ध्व उदैत्-पुरुषः । पादोऽस्येहाभवत् पुनः । तथा विष्वङ् व्यक्रामदशना-नशने अभि ॥ २ ॥ पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् । पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥ तावानस्य महिमा ततो ज्यायांश्च पूरुषः । उतामृतत्वस्येशानो यदन्ने-नाति रोहति ॥ ४ ॥ ततो विराडजायत विराजो अधिपूरुषः । स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥ कया नश्चित्रेत्यादि पूर्ववत् ॥ ६ ॥ इति पुरुषव्रतयोः पठितस्य षडृचस्य त्रिधा जपः ।

ब्रह्मेन्द्रयमकालचित्रगुप्तानां सूक्ताभावाद्धोममन्त्राः ( १८१ पृ० १०पं० ) प्रागुक्ता आर्षादिस्मरणपूर्वकं जप्याः ।

अथ प्रत्यधिदेवतानां, तत्र विष्णुं विहायान्येषां सूक्ताभावात्

( १८३पृ० २६पं० )प्रागुक्ता मन्त्रा एवार्षादिस्मरणपूर्वकं जप्याः। विष्णोस्तु विष्णुसंहिताऽनुपदमुक्ताजप्येति विशेषः।

अथ विनायकादीनां तत्र विनायकस्य दशसामात्मक-विनायकसंहितारूपविनायकसूक्तस्य मध्ये अदर्दरुदित्यादिद्वयो-रुरुचय ऋषिस्त्रिष्टुप् छन्द, सुष्वाणास इत्यादिद्वयोः पृथ्वी ऋषिस्त्रिष्टुप् छन्द आ तू न इत्यादिचतुःसामवर्गे आद्ययो-र्गौरवीत ऋषिः, अन्त्ययो वयासवैश्व ऋषिः, चतुर्णां गायत्री छन्दः, मृज्यमाना इत्यादिकाष्टसामात्मकवर्गमध्ये आद्यषष्ठ-द्वयोराद्यस्य अच्णोरन्ध्र ऋषिः, षष्ठस्याग्नि ऋषि द्वयोर्बृहती छन्दः, सर्वेषां विनायको देवता तत्प्रीतये वि०। अदर्दरूत्। समस्रजो वि खानि। त्वमर्णा २, ३, ४, वान्। वद्बधानाँ अराम्णाः। महान्ता २, ३, ४, मी। न्द्र पर्वतं वियाद्दः। स्रजाद्रा २, ३, ४, राः। अवयद्दान। वा २, ३ न् हा ३, ४, ३, न्। उ २, ३, ४, ५, ईडा॥ १॥ अदर्दरुत् समस्रजाः। विखानि। त्वमर्णवान् वद्बधानाँ १। अरा २, ३, म्णाः। महान्तमिन्द्र पर्वतं विया २, ३, द्दाः। स्रजाद्धारा २, :। अवा २, यद्दान। वा २,। या २, ३, ४,। उ ५ हो वा। हा २, ३, ४, ५, न्॥ २॥ सूष्वाणासाः। इन्द्रस्तु। मसि त्वा। सा निष्यन्तश्चित्तु वि न्ट। मृण वा २, ३, ४, जाम्। आनः। भरा। ओ २, ३, ४, वा। सुवितं यस्य को। ना। तानात्माना। सहिया। मा ३, ४, ३,। तू ३, वो ५, ता ६,५,६, :॥ १॥ ओ ३, हो ३, होयि। सू २, ३, ४, ष्वा णा ३ साः। इन्द्रस्तु। मसि त्वा। ओ ३, हो ३, होयि। सा २, ३, ४, नी। ष्यन्ताः। चो ३, त्तुवि। न्टमृण वा जाम्। ओ ३, हो ३, होयि। आ २, ३, ४, नाः। भरा। सुविता ३, म्। यस्य कोना। ओ ३, हो ३ हायि। ता २, ३, ४, ना। त्मना। सहिया। मा ३, ४, ३,। तू ३ वो

५ ता ६, ५, ६, : ॥ २ ॥ ( सा० वे० ८प्र० २अर्द्ध० ३, ४, ५, ६, गा० ) गानाशक्तौ। अदर्दरुत् समसृजो वि खानि त्वमर्णवान् वद्बधानाँ अरम्णाः। महान्तमिन्द्र पर्वतं वि यद्वः सृजद्धारा अव यद्दानवान् हन्। सुष्वाणास इन्द्र स्तुमसि त्वा सनिष्यन्तश्चित्तु वि नृम्ण वाजम्। आ नो भर सुवितं यस्य को ना तनात्मना सह्याम त्वोताः। इत्येतयोस्त्रिधा जपः। आ तू न आ। न्द्र चुमा २, ३, न्ताम्। चायित्रं ग्राभा २, ३, ँ। हायि। संगृ २, भाया। महाहस्ती २, ३, ४,। हायि। दच्चा २, यि णायिना। मह्वा २, ३,। हा २, स्ता २, ३, ४,। उ ५ होवा। दच्चिणे ३, ना २, ३, ४, ५, ॥ १ ॥ आ तू न इन्द्र चुमान्ताम्। चित्रा २ ं ग्रा २, ३, ४, भाम्। संग्टभा २, ३, ४, या। मा ३ हा ३। हा २ स्ता २, ३, ४,। उ ५ होवा। दच्चिणे ना २, ३, ४, ५ ॥ २ ॥ आ तू न इ। न्द्र चुमा ६, न्ताम्। चित्रं ग्राभं संग्टभा २, षा। चित्रं ग्राभं सम्। गृ। उ५ ३, होयि। भा २,३,४, षा। ए। हायि। महाहस्ती दच्चा २, ३,। होयि। उ५ हो। वाहो २, ३, ४, वा। णा ५, यि नो ६ हायि ॥ ३ ॥ आ तू न इन्द्र चुमान्ताम्। चित्रं ग्राभं संग्टभाया। चित्रं ग्राभं सम्। गृ २, ३,। ई ३, ४, हा। भा २, ३, ४, या। ए। हायि। महाहस्ती दच्चा २, ३, होयि। उ५हो। वाहो २, ३, ४, वा। णा ५, यि नो ६, हायि ॥ ४ ॥ ( सा० वे० ५प्र० १अर्द्ध० १६, १७, १८, १९ गा० ) गानाशक्तौ आ तू न इन्द्र चुमन्तं चित्रं ग्राभं संग्टभाय। महाहस्ती दच्चिणेन इत्यस्य चतुर्द्धा जपः। मृज्यमानाः। सुहस्तिया ३,। समू ३, द्रायि, वा। चमिन्वसा ३, यि। रायी ३, ं पायिशाङ्गं बहुला ३, म्। पूरू २, स्पृ २, ३, ४, हाम्। पवमा। ना। उ५, ३, हो। भियो २, ३, ४, वारषा ५, सो ६, हाई ॥ १ ॥ मृज्यमाना ५,

सुहस्तिया। समू २ द्रायि वा २,। च मा २, यि न्वासी २,। रयिं पिशङ्गं बहुलं पुरुस्पृहां। उ ५, ३, हो। पवमा २, ३, ना ३,। भियो २, ३, ४, वारषा ५, सो ६, हायि॥ २॥ (सा० वे० १५प्र० १अ०, ६, ११गा०) गानाशक्तौ सृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि। रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमाना भ्यर्षसि इत्यस्य द्विधा जपः।

दुर्गावाय्वाकाशाश्विनानां सूक्ताभावात् (१८५पृ०, १०पं०) प्रागुक्ता मन्त्रा एवार्षादिस्मरणपूर्वकं जप्याः।

अथ दिक्पालानां तत्रेन्द्राग्नियमनिर्ऋतिवरुणवायूनां सूक्ताभावात् (१८५ पृ० २५ पं०) प्रागुक्ता मन्त्रा एवार्षादिस्मरणपूर्वकं जप्याः।

सोमस्य तु प्रकाव्यमित्यादिद्वादशर्चं सूक्तं (१८८ पृ० २३ पं०) प्राग्वत् जप्यम्।

ईशस्य आ वो राजानमित्यादि रुद्रसंहिता (१८९ पृ० २३ पं०) प्रागुक्ता जप्या।

ब्रह्मानन्तयोः सूक्ताभावात् (१८७ पृ० १ पं०) प्रागुक्तौ मन्त्रावार्षादिस्मरणपूर्वकं जप्यौ।

अथ वस्वादीनाम्। तत्र वसूनां सूक्ताभावात् (१८७पृ० ७पं०) प्राग्वत् मन्त्रो जप्यः।

रुद्राणां (१८९ पृ०, १८ पं०) प्राग्वत् रुद्रसंहिता जप्या।

आदित्यानां सूक्ताभावात् (१८७पृ० १८पं०) प्रागुक्त मन्त्र एवार्षादिस्मरणपूर्वकं जप्यः।

मरुतां सूक्ताभावात् (१८७पृ० २४पं०) प्राग्वत् मन्त्रो जप्यः।

ब्रह्मणः, सूक्ताभावात् (११४पृ० २५पं०) प्राग्वन्मन्त्रो जप्यः।

अच्युतस्य (१९४ पृ०—१९७ पृ०) प्राग्वत् विष्णुसंहिता जप्या।

ईशस्य, (१८८ पृ० १८ पृ०) प्राग्वत् रुद्रसंहिता जप्या।

अर्कस्य, सूक्ताभावात् (१८८पृ०, ११पं०) प्राग्वन्मन्त्रो जप्यः।

वनस्पतेः, सूक्ताभावात् (१८८पृ०, १४पं०) प्राग्वन्मन्त्रो जप्यः।

अत्रैव समये द्वारपालैः स्वशाखोक्तवक्ष्यमाणशान्त्याध्याया-दिकं पाठ्यम्।

एवं जापकैर्द्वारपालैश्च जप्यपाठ्यसूक्तादिषु जप्तेषु होतो-त्तराङ्गं कर्म कुर्य्यात्। तत्र प्रथमं (१८१पृ० ३पं०) पूर्ववत् महाव्याहृतिहोमं कुर्य्यात्। ततः प्रादेशमितां समिधं तूष्णी-मग्नौ क्षिप्त्वा प्रायश्चित्तहोमं कुर्य्यात्। यथा। देशकालौ संकीर्त्त्य कृतेऽस्मिन् कर्मणि यत्किञ्चिदङ्गवैगुण्यं जातं तद्दोष-प्रशमनाय महाव्याहृतिहोमं शाट्यायनहोमं वा करिष्ये इति संकल्प्य विधुनामानमग्निमावाह्याभ्यर्च्च्य (१८१पृ० ३पं०) पूर्व-वत् महाव्याहृतिहोमरूपं प्रायश्चित्तहोमं कुर्य्यादिति बहवः। तत्र प्रायश्चित्तहोमे वि० इत्येव विनियोगे विशेषः। कौथुमी-यास्तु शाट्यायनहोममपि कुर्य्युरिति भवदेवभट्टः। तद्यथा पुनरपि महाव्याहृतिहोमं विधाय तूष्णीं समिधमग्नौ हुत्वा प्रजापतिर्ऋषि अग्निर्देवता प्रायश्चित्तहोमे वि० इति स्मृत्वा। ओं पाहि नोऽग्ने एनसे स्वाहा। प्रजापतिर्ऋषि विश्वे देवा देवेभ्यो प्रायश्चित्तहोमे वि०। ॐ पाहि नो विश्ववेदसे स्वाहा। प्रजापतिर्ऋषि विभावसुर्देवता प्रायश्चित्तहोमे वि०। ओं यज्ञं पाहि विभावसो स्वाहा। प्रजापतिर्ऋषिः शतक्रतुर्देवता प्राय-श्चित्तहोमे वि०। ओं सर्व्वं पाहि शतक्रतो स्वाहा। प्रजापति-र्ऋषिः अनुष्टुप् छन्दो अग्निर्देवता प्रायश्चित्तहोमे वि०। ओं पाहि नोऽग्न एकया पाह्युत द्वितीयया। पाहि गीर्भि-

स्तिसृभिरूर्ज्जां पते पाहि चतसृभिर्वसो (सा०१प्र०१अ०, ४८० २म०) स्वाहा। प्रजापतिर्ऋषिर्गायत्री छन्दो अग्निर्देवता प्रायश्चित्तहोमे वि०। पुनरूर्ज्जा निवर्त्तस्व पुनरग्न इषायुषा। पुनर्नः पाह्यं हसः (सा०उ० ६प्र० २अ० ८क० २म०) स्वाहा। प्रजापतिर्ऋषिर्गायत्री छन्दो अग्निर्देवता प्रायश्चित्तहोमे वि०। ओं सहोर्ज्जं निवर्त्तस्वाग्ने पिनुस्व धारया। विश्वप्स्न्या विश्वतः परि स्वाहा। प्रजापतिर्ऋषि अनुष्टुप् छन्दो अग्निर्देवता प्रायश्चित्तहोमे वि०। ओं अज्ञातं यदनाज्ञातं यज्ञस्य क्रियते मिथः। अग्ने तदस्य कल्पय त्वं वेत्थ यथा-यथम् (सा० षड्विंश ब्रा० १प्र० २अ०) स्वाहा। प्रजापतिर्ऋषिः पङ्क्तिश्छन्दः प्रजापतिर्देवता प्रायश्चित्तहोमे वि०। ॐ प्रजापते न त्वदेतान्यन्यो विश्वाजातानि परिता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां स्वाहा। पूर्ववत् महाव्याहृतिहोमः समित्प्रक्षेपश्च। ततो नवभ्यो ग्रहेभ्य एकैकाहुतीः प्रागुक्तेन मन्त्रेण दद्यात्। ततो जलाञ्जलिं गृहीत्वा प्रजापतिर्ऋषिः सविता देवता अग्निपर्य्युक्षणे वि०। ओं देवसवितः प्रसुवयज्ञं प्रसुव यज्ञपतिं भगाय। दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु। अनेनोदकाञ्जलिना दक्षिणावर्त्तेनाग्निं वेष्टयेत्। प्रजापतिर्ऋषि अदितिर्देवता जलाञ्जलिसेके वि०। ओं अदितेऽन्वमंस्थाः अनेनाग्नेर्दक्षिणस्यां पश्चिमान्तात् पूर्वान्तं यावज्जलाञ्जलिना सिञ्चेत्। प्रजापतिर्ऋषिः अनुमतिर्देवता जलाञ्जलिसेके वि०। ओं अनुमतेऽन्वमंस्थाः अनेनाग्नेः पश्चिमायां दक्षिणान्तादुत्तरान्तं यावत्तथा सिञ्चेत्। प्रजापतिर्ऋषि सरस्वती देवता जलाञ्जलिसेके वि०। ओं सरस्वत्यन्वमंस्थाः अनेनाग्नेरुत्तरस्यां पश्चिमान्तात् पूर्वान्तं

यावत्तथा सिञ्चेत्। ततः कतिपयास्तरणकुशानुत्तानहस्तद्वयेनादाय प्रजापतिर्ऋषिर्वायो देवता दर्भतृणाभ्यञ्जने वि०। ओं अक्तं रिहाणां व्यन्तु वयः। इति त्रिधा जप्तेन यजुषा अग्रमूलमध्यभागान् क्रमेण घृतेनाभ्यञ्जयात्। अथ तानद्भिरभ्युक्ष्य प्रजापतिर्ऋषि अनुष्टुप् छन्द रुद्ररूपोऽग्निर्देवता दर्भजुटिकाहोमे वि०। ओं षः पशूनामधिपती रुद्रस्तन्तिचरो वृषा। पशूनस्माकं मा हिंसीरेतदस्तु हुतं तव स्वाहा अनेनाग्नौ क्षिपेत्। ततोऽग्न्यायतनस्य समन्तात् दशसु दिक्षु दिक्पालेभ्यो माषभक्तबलिं दद्यात्। यथा ऋष्यादिस्मरणपूर्वकं प्रागुक्तदिक्पालादिहोममन्त्रानुक्त्वा ओं इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एष माषभक्तिबलिर्नम इति दत्त्वा प्रार्थयेत। भो इन्द्र दिशं रक्ष बलिं भुङ्क्ष्व मम यजमानस्य वा सकुटुम्बस्यायुःकर्त्ता क्षेमकर्त्ता शुभकर्त्ता शान्तिकर्त्ता पुष्टिदस्तुष्टिदो भवेति पूर्वाभिमुखः पुष्पाक्षतजलानि क्षिपेत्। एवमाग्नेय्यादिष्वपि। ततः साधिदेवतप्रत्यधिदैवतग्रहेभ्यो बलिं दद्यात्। तत्र प्रागुक्तहोममन्त्रमुच्चार्य्य एष गुड़ौदनादिबलिः साङ्गायेत्याद्यनन्तरं सेश्वराग्निरूपाधिदैवतप्रत्यधिदैवतसूर्य्यायेत्यधिकं प्रयोज्यम्। ततः प्रार्थनादि पूर्ववत्। स्वस्वमण्डलसमीपे पुष्पाक्षतादिप्रक्षेपः। एवं विनायकादीनामपि बलिं दत्त्वा प्रार्थयेत। पुष्पादिप्रक्षेपस्तु प्रागुक्त स्थापनस्थानसमीपे इति विशेषः। बलिहरणान्ते छन्दोगपरिशिष्टे वरप्रार्थनमप्यभिहितं यथा आरोग्यमायुरैश्वर्य्यं धीर्धृतिः सन्ततिर्यशः। ओजो वर्चः पशुर्वीर्य्यं ब्रह्म ब्राह्मण्यमेव च। सौभाग्यं कर्मसिद्धिश्च ज्ञातिश्रैष्ठ्यं सकर्त्तृता। सर्वमेतत् सर्वसाक्षिन् द्रविणोदो रिरीहि नः इति।

ततः परदिने स्वस्तिवाचनानन्तरं मृड़नामानमग्निमा-

वाद्याभ्यर्च्य समुत्थाय गन्धमाल्यवस्त्रताम्बूलफलहिरण्यसहितां पूर्णाहुतिं दद्यात् यथा। प्रजापतिर्ऋषि विराट् छन्द इन्द्रो देवता पूर्णहोमे वि०। ओं पूर्णहोमं यशसे जुहोमि योऽस्मै जुहोति वरमस्मै ददाति वरं वृणे यशसा भामि लोके (छा० ब्रा० २प्र०) स्वाहा। इत्यनेनाच्छिन्नधारया पूर्णाहुतिं दद्यात्। ततो ब्रह्मणे पूर्णपात्ररूपं ब्रह्मदक्षिणां दत्त्वा प्रदक्षिणमग्निं परिक्रम्य ब्रह्माणं विसृज्य पुनः स्वासनमागत्याग्निं प्रदक्षिणीकृत्य पात्रस्थजलशेषं निरस्य पुनर्जलेनापूर्य्य भूमौ प्रतिष्ठाय वृहद्वामदेव्यं साम गायेत्। वामदेव ऋषिर्विराट् गायत्री छन्द इन्द्रोदेवता शान्तिकर्मणि जपे० वि०। हाउ (त्रिधा)। वृहद्वामम् (त्रिधा)। वृहत् पार्थिवम् (त्रिधा) वृहदन्तरिक्षम् (त्रिधा)। वृहद्दिवम्। ३। वृहद्वामम्। ३। कया नश्चित्रा ३, आभू १, वा २, न्। ऊती सदा वृ ३, धाः सा १ खा २,। कया शचि ष्ठा ३, या वार्त्ता २, ३,। हाउ। ३। वृहद्वामम्। ।३। वृहदन्तरिक्षम्। ३। वृहद्दिवम्। ३। वृहद्वामम्। (द्विधा)। वृहद्वामम्। ३। होवा हाउ। वा। ए। वृहद्वामम्। ए। वृहद्गो वामम्। ए। वामेभ्यो वामम्। ए। वामं (त्रिधा)॥ १॥ वृहद्वामम्। ३। वृहद्वामम्। कया नश्चायि। त्र आ २, भू २, ३, ४, वान्। ऊतायि सदा। वार्द्धः सा २, ३, ४, खा। कया शचायिष्ठया २,। वा २, ३, ४, र्त्ता। वृहद्वामम् (द्विधा)। वृहत्। वामाँ ३। उवा। ए। वृहद्वामम्। (त्रिधा)॥ २॥ [सामारण्ये १प्र० १अ० २६, २७ गा०] एवं गानाशक्तौ कया नश्चित्र आभूवदूती सदावृधः सखा। कया शचिष्ठया वृता। कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः। दृढा चिदारुजे वसु। अभी षू णः सखीना मविता जरितॄणाम्। शतं भवास्यूतये। इत्येता ऋचस्त्रिधावर्त्त्य शान्तिं कुर्य्यात्। तथा स्वस्ति न

इन्द्र इत्यादिकमपि [ ७पृ० २४पं० ] प्रागुक्तं पठेत्। ततः एतत् कर्माच्छिद्रमस्त्वित्यनेनाच्छिद्रावधारणं कुर्य्यात्। इति सामगानां होमपद्धतिः।

अथाथर्वणिकानामग्निस्थापनादिविधिः। तत्रादौ वर्हिर्लवनाय शस्त्रादानमन्त्रः। ओं अव्यचसश्च व्यचसश्च विलं वि ष्यामि मायया। ताभ्यामुद्धृत्य वेदमथ कर्माणि कुर्महे। ( अथ० १९का० ७अनु० ६८क० १म० ) इत्यनेन मन्त्रेण दात्रं गृहीत्वा ओं ओषधीर्घ्नंतु पर्वन्निति वर्हिरुपरि पर्वस्थालुनीयात्। ततो वर्हिरिध्मदारूणि संनह्य ओं ग्रीष्मस्ते भूमे वर्षाणि शरद्धेमन्तः शिशिरो वसन्तः। ऋतवस्ते विहिता हायनीरहोरात्रे पृथिवि नो दुहाताम् (अथ० १२का० १अनु० ३६ म०) इत्यनेन भूमिमुपस्थाय प्रादेशमात्रां शमीसमिधं विमाय ओं वि मिमीष्व पयस्वतीं घृताचीं देवानां धेनुरनपस्फुगेषा। इन्द्रः सोमं पिबतु क्षेमो अस्त्वग्निः स प्रस्तौतु वि मृधो नुदस्व ( अथ० १३का० १ अनु० २७ म० ) इत्यनेनाभिमन्त्रयेत्। ततस्तया शमीसमिधा वक्ष्यमाणरीत्या परिमाय वेदिं कल्पयेत्। यथा कुण्डात् स्थण्डिलाद्वा प्राच्यां दक्षिणोत्तरयोश्च प्रतिदिशं प्रादेशमितां पश्चिमायाञ्च सार्द्धप्रादेशद्वयमितां भूमिमादाय दीर्घचतुरस्रां वेदिं कल्पयेत् सा च पूर्वपश्चिमयोः प्रादेशपञ्चमितदीर्घा दक्षिणोत्तरयोश्च वितस्तित्रयमितविस्तारा। तस्याश्च वहिर्महावेदिं कल्पयेत्। सा च प्राक्पश्चिमयोः समित्षट्कायता दक्षिणोत्तरयोश्च समिच्चतुष्कविस्तारा। तत्र महावेदिपश्चिमरेखामध्यात् पूर्वतः समित्त्रयमितां, प्राचीरेखामध्यात् पश्चिमतः समिन्मात्रां, दक्षिणरेखामध्यात् उत्तरस्याम्, उत्तररेखामध्यतो दक्षिणस्याञ्च, तथैव समिन्मात्रां, भूमिं त्यक्त्वा कुण्डादिमध्ये समिद्द्वयमितदीर्घविस्तारां समचतुरस्रामुत्तरवेदिमग्निस्थापनाय कल्पयेत्।

ततो महावेद्या ईशानकोणादारभ्य तूष्णीं सर्वतो वालुकया रेखां कुर्य्यात् । ततः ओं बृहस्पते परिगृह्णाण वेदिं सुगा वो देवाः सदना अकर्म यः । अस्यां बर्हिः प्रथता साध्वन्तर्बर्हिस्ता नः पृथिवी देव्या वास्तु । इति वेदिं परिगृह्य त्रीन् वारान् वेदिरेखापरितोऽनुमन्त्रणं कुर्य्यात् । ततो ग्रीष्मस्ते इत्यादिप्रागुक्तं पठित्वा ओं यत्ते भूमि विखनामि क्षिप्रं तदपि रोहतु । मा ते मर्म विमृग्वरि मा ते हृदयमर्पिपम् । ( अथ० १२प्र० १अनु० ३५ म० ) इत्यनेन खनित्वा ओं यत्त ऊनं तत्त आ पूरयाति प्रजापतिः प्रथमजा ऋतस्य । उपस्थास्ते अनमीवा अयक्ष्मा अस्मभ्यं सन्तु पृथिवि प्रसूताः ( अथ० १२ प्र० १अ० ६१॥, ६२ म० ) इत्यनेन खनितपूरणाय संप्रार्थ्य ओं त्वमस्या वपनी जनानामदितिः कामदुघा पप्रथाना । ( अथ० १२ प्र० १अ० ६०॥, म० ) इत्यनेन वालुकाभिस्ताः पूरयित्वा पुनः पूर्वोक्त प्रकारेणाग्निस्थापनार्थमुत्तरवेदिं गृहीत्वा बृहस्पते परिगृह्णाणेत्यादिकं पूर्वोक्तं वालुकानिधानान्तं सर्वं विधाय ओं असं बाधं बध्यतो मग्नवानां यस्या उद्वतः प्रवतः समं बहु । नानावीर्य्या ओषधीर्या विभर्त्ति पृथिवी नः प्रथतां बाध्यतां नः । ( अथ० १२ का १अनु० २म० ) इत्यनेन वालुकां समन्ताद्विस्तार्य्य ओं यस्याश्चतस्रः प्रदिशः पृथिव्या यस्यामन्नं कृष्टयः संबभूवुः । या विभर्त्ति बहुधा प्राणदेजत्तत् सा नो भूमिर्गोष्वप्यन्ये दधातु ( अथ० १२का० १अनु० ४म० ) इत्यनेन विस्तृताभिर्वालुकाभिर्वेदिं समन्तात् चतुरस्रां कृत्वा ओं देवस्य त्वा सवितुः प्रसवेऽश्विनोर्वाहुभ्यां पूष्णो हस्ताभ्यां प्रसूतः प्रशिषा परिगृह्णामीत्यनेन हिरण्याद्युल्लेखनसाधनद्रव्यमादाय ओं इन्द्रः सीतां निगृह्णातु तां पूषा अभिरक्षतु । सा नः पयस्वती दुहामुत्तरामुत्तरां । समम् (अथ० ३का० १७क० ४म०) इत्यनेन प्रागग्रां

प्रादेशमितां रेखां कृत्वा तस्यां व्रीहियवावारोप्य ओं वर्षेण भूमिः पृथिवी वृतावृता सा नो दधातु भद्रया प्रिये धामनिधामनि (अथ० १२का० ४अनु०५१॥म०) इत्यर्द्धर्चेन जलैः संप्रोक्ष्य ओं यस्यामन्नं व्रीहियवौ यस्या इमाः पञ्च कृष्टयः। भूम्यै पर्जन्यपत्न्यै नमोऽस्तु वर्षमेदसे (अथ० १२का० १अनु० ४२म०) इत्यनेन भूमिं नत्वा यथोक्तवह्निं यथोक्तपात्रेणादाय ओं क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्ञो गच्छतु रिप्रवाहः (अथ० १२का० २अनु० ७॥म०) इत्यर्द्धर्चेन क्रव्यादंशं परित्यज्य ओं त्वामग्ने भृगवो नयन्तामङ्गिरसः सदनं श्रेय एहि। विश्वकर्मा पुर एतु प्रजानन् भद्रं पन्थामनु ते दिशा नः॥१॥ त्वामग्ने० श्रियं पन्थामनु ते दिशा नः॥२॥ त्वामग्ने० स्वस्ति पन्थामनु ते दिशा नः। इति त्रिभिर्वह्निं प्रणीय ओं भद्रो भव श्रेयो भव स्वस्थो भवेति पात्रस्थ व्रीहिं प्रक्षिप्य। ओं विश्वम्भरा वसुधानी प्रतिष्ठा हिरण्यवक्षा जगतो निवेशनी। वैश्वानरं बिभ्रती भूमिरग्निमिन्द्र ऋषभा द्रविणे नो दधातु। (अथ० १२का० १अनु० ६म०) इत्यनेनोत्तरवेद्यां वह्निं प्रतिष्ठाप्य (९९पृ० ६पं०) प्रागुक्तं ध्यात्वा शतमङ्गलनामासीति नाम कृत्वा संपूज्य। ओं ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम। मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम (अथ० ५का० ३क० १म०) इत्यनेन तिस्रः समिधो हुत्वा तूष्णीं पवित्रे कृत्वा ताभ्यामिध्मस्य त्रिःप्रोक्षणं कुर्य्यात्। तत्र ओं विष्णोर्मनसा पूते स्थ इति प्रथमं प्रोक्षणम्, ओं विष्णोर्मनसा पूतमसीति द्वितीयम्, देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण शतधारेण सुप्वोत्पुनामीति तृतीयम्, ततस्तूष्णीं चतुर्थम्। ततोऽग्नये त्वा जुष्टं प्रोक्षामीतीध्मं समादाय ओं अग्निर्भूम्यामोषधीष्वग्निमापो बिभ्रत्यग्निरश्मसु। अग्निरन्तः पुरुषेषु गोषु अश्वेषु अग्नयः। अग्निर्दिव आतनोत्यग्ने-

दैवस्योर्वन्तरिक्षम्। अग्निं मर्त्तास इन्धते हव्यवाहं घृतप्रियम्। अग्निवासाः पृथिव्यसितज्ञूस्त्विषीमन्तं संशितं मा कृणोतु। भूम्यां देवेभ्यो ददति यज्ञं हव्यमरंकृतम्। भूम्यां मनुष्या जीवन्ति स्वधयान्नेन मर्त्याः। सा नो भूमिः प्राणमायुर्दधातु जरदष्टिं मा पृथिवी कृणोतु। (अथ० १२ का० १अनु० १९, २०, २१, २२म०) एतैश्चतुर्भिः, ओं एतमिध्मं समाहितं जुषाणोऽग्ने प्रतिहर्य्यहोमैः। तस्मिन् विदेम सुमतिं स्वस्ति प्रजाचक्षुः पशून् समिद्धे जातवेदसि ब्रह्मणा अस्मे धारयन्तमग्ने युनज्मि त्वा ब्रह्मणा दैव्येन दीदिह्यस्मभ्यं द्रविणेह भद्रं प्रेमं वोचो हविर्दां देवतासु इति ब्राह्मणेन च इध्मं जुहुयात्। ततः ओं त्वं भूमित्येष्योजसा त्वं वेद्यां सीदसि चारुरध्वरे। त्वां पवित्रमृषयो भरन्तस्त्वं पुनीहि दुरितान्यस्मत्। (अथ० १९का० ४अनु० ३३क० ३म०) अनेन बर्हिः प्रोक्ष्य ऋषीणां प्रस्तरोऽसि नमोऽस्तु देवाय प्रस्तराय इत्यनेन ब्रह्मासनं निधाय अनेन (तुलादानादिना) कर्मणा यजमानो यजते तत्र भूपते भुवनपते भुवांपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे इति कर्त्ता वरणमन्त्रं जपेत्। ततो ब्रह्मा ओं भूपतिरहं भुवनपतिरहं भुवां पतिरहं महतो भूतस्य पतिस्तदहं मनसे प्रब्रवीमि मनो वाचे वाग्गायत्र्यै गायत्री उष्णिहे उष्णिक् अनुष्टुभेऽनुष्टुप् बृहत्यै बृहती पङ्क्त्यै पङ्क्तिस्त्रिष्टुभे त्रिष्टुप् जगत्यै जगती प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यः ओं भूर्भुवः स्वर्जनरोमिति जपेत्। ततो ब्रह्मा स्वासनमीक्षेत ओं अहो दैविषिभ्यो दत्तस्तिष्ठान्यस्य सदने सीदामि योऽस्मात् पाकतर इति। अथ आसनाद्दक्षिणस्यां दिशि ओं निरस्तः परावसुः सह पाप्मना निरस्तः सोऽस्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इत्यनेन तृणं निरस्येत्। तत आसनमालभ्य ओं इदमहमर्वा-

स्वसोः सदने सीदाम्येतस्य सदने सीदामीत्यस्य सदने सीदामीत्यस्य सदने सीदामि पूर्त्तस्य सदने सीदामि मामृषदेव वर्हिः स्वासंस्थत्वाध्यासा देवमूर्ण्वम्नदमनभिशोकमिति जपेत्। ततः ओं विमृग्वरीं पृथिवीमावदामि क्षमां भूमिं ब्रह्मणा वावृधानाम्। ऊर्जं पुष्टं विभ्रतीमन्नभागं घृतं त्वाभि निषीदेम भूमे ( अथ० १२का० १अनु० २९म० ) इत्यनेनासने उपविशेत्। ततो ब्रह्मा ओं बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते बृहस्पते यज्ञं गोपायेति ब्रह्मजपं कुर्य्यात्। ततः, ओं उद्दत उतिवतः शकेयं पातं द्यावापृथिव्यौ। इति द्यावापृथिव्यौ समीक्षेत। ततः कर्त्ता देवस्य त्वा सवितुरित्यादि परिगृह्णामीत्यन्तं ( २०६पृ० २२पं० ) प्रागुक्तमन्त्रं पठेत्। ब्रह्मा तु परिस्तृणीहि परिधेहि वेदिमाजानि मीषीरनुपाशयानाम्। होतृषदनं हरितं हिरण्मयं निष्कामयते यजमानस्य लोक इति जपेत्। ततः कर्त्ता देवस्य त्वा प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रसूतः प्रशिषा परिस्तृणामीत्यनेन आग्नेयमारभ्य त्रिभिस्त्रिभिर्दर्भैरुदगग्रै प्रागास्तृतदर्भाच्छादितोत्तरदर्भमूलैरुदक्संस्थैस्त्रिः परिस्तृणीयात्। एवं नैर्ऋतमारभ्य प्रागग्रैः पूर्वास्तृतदर्भाधःक्रमेणाग्नेयपर्य्यन्तम्, तथैव नैर्ऋतादारभ्य वायव्यपर्य्यन्तं, वायव्यादारभ्यैशानपर्य्यन्तं, प्रागग्रैस्तथैव परिस्तृणीयात्। अत्राधःक्रमेणास्तरणे आग्नेयपरस्थितस्य दक्षिणास्तृतदर्भाग्रस्य ईशानस्थितोत्तरास्तृतदर्भाग्रस्य चोत्तराधरभावानियम इति बोध्यम्। हविषा त्वा जुष्टं प्रोक्षामीत्यनेनास्तीर्णकुशप्रोक्षणम्। अथ कर्त्तासने दर्भासनमास्तीर्य्य अहो दैविषव्यो दत्त इत्यादिवीक्षणान्तं सर्वं ब्रह्मवत् कुर्य्यात्। अत्रैव समये चरुहोमसत्त्वे ( १०३पृ० १पं ) प्रागुक्तक्रमेण चरुं श्रपयेत्। अथ उदकपात्रं गृहीत्वा यथाग्ने ब्रह्मणस्पतिः सत्यधर्मो

अदीधरत्। देवस्य त्वा सवितुः प्रसव इत्यादिना (२०६पृ० २२पं०) उदपात्रं पुरो निधाय। ओं इहैतं देवीरमतं वसाना हिरण्यवर्णा अनवद्यरूपाः। आपः समुद्रो वरुणश्च राजा संपातभागान् हविषो जुषन्ताम्। इन्द्रप्रशिष्टा वरुणप्रसूता आपः समुद्राद्दिवमुद्वहन्तु। इन्द्रप्रसूता वरुणप्रशिष्टा दिवस् पृथिव्याः श्रियमुद्वहन्तु इति सपवित्रे उदकपात्रे उदकं क्षिपेत्। ततो विलीनं पूतमाज्यं गृहीत्वाऽधिश्रित्य पर्य्यग्नि कृतदगुद्वास्य पश्चादग्नेरुपसाद्य उदगग्राभ्यां पवित्राभ्यामुत्पुनीयात्। इत्याज्यसंस्कारः। एवं चरुसंस्कारोऽपि बोध्यः। ततो दर्भैः स्रुवं निर्माज्मीति मन्त्रेण स्रुवं संमृज्य ओं अनिष्टदारक्षो निष्टप्ता अरातयः प्रत्युष्टं रक्षः प्रत्युष्टा अरातय इत्यनेन स्रुवं प्रतप्य विष्णोर्हस्तोऽसि दक्षिणा पूर्वा दत्ता बृहस्पते। तत्त्वाहं स्रुवमाददे देवानां हव्यवाहनम्। अयं स्रुवो निदधाति होमान् शताक्षरच्छन्दसा जागतेन। सर्वा यज्ञस्य समनक्ति विष्टा वार्हस्पत्येनाष्टिः शर्मणा दैव्येनेति स्रुवमभिमन्त्र्य ओं भूः शंभूत्यै त्वा गृह्णे भूतय इति संस्कृतमाज्यस्थालीस्थितमाज्यं स्ववामभागेऽग्नेः पश्चिमतः स्थापितायामाज्यधानीपात्र्यां स्रुवेण प्रथमग्रहं गृह्णीयात्। ओं भुवः शंभूत्यै त्वा गृह्णे पुष्टय इति द्वितीयम् ओं स्वः शं त्वा गृह्णे सहस्रपोषायेति तृतीयम्, ओं जनः शं त्वा गृह्णेऽपरिमितपोषायेति चतुर्थम्, गृह्णीयात्। ततो वक्ष्यमाणहोमपरिमितं गृह्णीयात्। तत आज्यधान्या एव घृतं स्रुवेण गृहीत्वा सर्वत्र जुहुयात्। यथा अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अभिशस्ति पा उ। नमस्कारेण नमसा ते जुहोमि मा देवानां मिथुषा कर्मभागम्। स्वाहा। हृदा पूतं मनसा जातवेदो विश्वानि देव वयुनानि विद्वान्। सप्तास्यानि तव जातवेदस्तेभ्यो जुहोमि स जुषस्व

हस्थम्। (अथ० ४का० ३८क० ८,१ ) स्वाहा। पुरस्ताद्युक्तो वह जातवेदोऽग्ने विद्धि क्रियमाणं यथेदम्। त्वं भिषग् भेषजस्यासि कर्त्ता त्वया गामश्वं पुरुषं सनेम। (अथ० ५का० २८क० १म०), स्वाहा। यज्ञस्य चक्षुः प्रभृतिर्मुखञ्च वाचा श्रोत्रेण मनसा जुहोमि। इमं यज्ञं विततं विश्वकर्मणा देवा यन्तु सुमनस्यमानाः। ( अथ० २का० ३५क० ५म० ) स्वाहा। इत्येतैः पुरस्ताद्धोमान् हुत्वा। ओं वृष्णो हृहस्पते स्वर्विदे शुक्ले ह्वयामि त्विषीमते। मनः स्थिरान् बलवतः कृणोतु ज्योग्नो जीवातवे ददात्यग्नये स्वाहा। ओं त्वं सोममभ्येत्योजसा त्वं दिव्यो नृचक्षा अस्मभ्यं पथो असुस्व्यः। अभि नो गोत्रं विदुष इव नेशिच्छानो वाचमुशतीं जिगाय सोमाय स्वाहा। इत्याज्यभागौ हुत्वा। अभ्यातानान् जुहुयात् यथा ओं सविता प्रसवानामधिपतिः स मावतु। अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां प्रतिष्ठायामस्यां चित्यामस्यामाकूत्यामस्यामाशिष्यस्यां देवहूत्यां स्वाहा॥ १॥ अग्निर्वनस्पतीनामधिपतिः स मावतु। अस्मिन् ब्रह्मणीत्याद्यनुषङ्गः॥ २॥ द्यावापृथिवी दात्रीणामधिपत्नी ते मावताम्। अस्मिन् ब्रह्म०॥ ३॥ वरुणोऽपामधिपतिः स मावतु। अस्मिन् ब्रह्म०॥ ४॥ मित्रावरुणौ वृष्ट्या अधिपती तौ मावताम्। अस्मिन् ब्रह्म०॥ ५॥ मरुतः पर्वतानामधिपतयस्ते मावन्तु। अस्मिन् ब्रह्म०॥ ६॥ सोमो वीरुधामधिपतिः स मावतु। अस्मिन् ब्रह्म०॥ ७॥ वायुरन्तरिक्षस्याधिपतिः स मावतु। अस्मिन् ब्रह्म०॥ ८॥ सूर्य्यश्चक्षुषामधिपतिः स मावतु। अस्मिन् ब्रह्म०॥ ९॥ चन्द्रमा नक्षत्राणामधिपतिः स मावतु। अस्मिन् ब्रह्म०॥ १०॥ इन्द्रो दिवोऽधिपतिः स मावतु। अस्मिन् ब्रह्म०॥ ११॥ मरुतां पिता पशूनामधिपतिः स मावतु। अस्मिन् ब्रह्म०॥ १२॥

मृत्युः प्रजानामधिपतिः स मावतु । अस्मिन् ब्रह्म० ॥ १३ ॥ यमः पितॄणामधिपतिः स मावतु । अस्मिन् ब्रह्म० ॥ १४ ॥ पितरः परे ते मावन्तु । अस्मिन् ब्रह्म० ॥ १५ ॥ तता अवरे ते मावन्तु । अस्मिन् ब्रह्म० ॥ १६ ॥ ततामहास्ते मावन्तु । अस्मिन् ब्रह्म० ॥ १७ ॥ (अथ० ५का० २४क० २१ अवधि १७ मन्त्राः ) इत्यभ्युतानाख्याः सप्तदशाहुतीर्हुत्वा प्रणवादि-स्वाहान्तैर्वक्ष्यमाणमन्त्रैर्ग्रहादिभ्य एकैकास्रवाहुतीर्हुत्वा संकल्प्य अग्निनाम कृत्वावाह्याभ्यर्च्य प्रागुक्तसंख्यया प्रधानहोमं कुर्यात् ।

अथ रव्यादीनामाहुतिमन्त्राः । तत्र रवेः, विषासहि-मित्यस्याथर्वा ऋषिः जगती छन्दः सूर्यो देवता तत्प्रीतये कपिलाग्नावर्कादिसमिद्धोमे वि० । ओं विषासहिं सहमानं सासहानं सहीयांसम् । सहमानं सहोजितं स्वजितं गोजितं सन्धनाजितम् । ईड्यं नाम ह्व इन्द्रमायुष्मान् भूयासम् (अथ० १७का० १अनु० १म० ) ।

सोमस्य, शकधूममित्यस्याथर्वा ऋषिः अनुष्टुप् छन्दः सोमो देवता तत्प्रीतये पिङ्गलाग्नौ पलाशसमिद्धोमे वि० । शकधूमं नक्षत्राणि यद्राजानमकुर्वत । भद्राहमस्मै प्रायच्छन्निदं राष्ट्रमसादिति (अथ० ६का० १२८अ० १म० ) ।

भौमस्य, त्वया मन्यवित्यस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दः भौमो देवता तत्प्रीतये धूमकेत्वग्नौ खदिरसमिद्धोमे वि० । त्वया मन्यो सरथमारुजन्तो हर्षमाणा हृषितासो मरुत्वन् । तिग्मेषव आयुधा संशिशाना उप प्रयन्तु नरो अग्निरूपाः (अथ० ४का० ३१क० १म० ) ।

बुधस्य, यद्राजान इत्यस्य विष्णुर्ऋषिः पङ्क्ति छन्दो बुधो देवता तत्प्रीतये जाठराग्नावपामार्गसमिद्धोमे वि० । यद्रा-

जानो विभजन्त इष्टापूर्त्तस्य षोड़शं यमस्यामी सभासदः। अविस्तस्मात् प्र मुञ्चति दत्तः शितिपात् स्वधा (अथ० ३का० २९क० १म०)।

बृहस्पतेः, बृहस्पतिरित्यस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दो बृहस्पतिर्देवता तत्प्रीतये शिखिनामाग्नावश्वत्थसमिद्धोमे वि०। बृहस्पतिर्नः परिपातु पश्चादुतोत्तरस्मादधरादघायोः। इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरीयः कृणोतु। (अथ० ७का० ५१क० १म०)।

शुक्रस्य, हिरण्यवर्णा इत्यस्यापाघ ऋषिः त्रिष्टप् छन्दः शुक्रो देवता तत्प्रीतये हाठकाग्नावौड़म्बरसमिद्धोमे वि०। हिरण्यवर्णाः शुचयः पावका यासु जातः सविता यास्वग्निः। या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु (अथ० १का० ३३क० १म०)।

शनेः, सहस्रबाहुरित्यस्य नारायण ऋषिः अनुष्टुप् छन्दः शनिर्देवता तत्प्रीतये महातेजोऽग्नौ शमीसमिद्धोमे वि०। सहस्रबाहु पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम्। (अथ० १९का० ६क० १म०)।

राहोः, दिव्यं चित्रमित्यस्य कौशिक ऋषिः त्रिष्टुप् छन्दो राहुर्देवता तत्प्रीतये हुताशनाग्नौ दूर्वासमिद्धोमे वि०। दिव्यं चित्रमृतुधा कल्पयन्तमृतनामुग्रं भ्रमयन्नुदेति। तमादित्यः प्रतरन्नेतु सर्वत आप इमान् लोकाननुसञ्चरन्ति।

केतूनाम्, यस्त इत्यस्याथर्वा ऋषिः त्रिष्टुप् छन्दः केतवो देवतास्तत्प्रीतये रोहिताग्नौ कुशसमिद्धोमे वि०। यस्ते पृथु स्तनयित्नुर्य ऋष्वो दैवः केतुर्विश्वमाभूषतीदम्। मा नो बधीर्विद्युता देव सस्यं मोत वधी रश्मिभिः सूर्य्यस्य (अथ० ७का० ११क० १म०)।

अथाधिदेवानां तत्र रुद्रस्य, मा न इत्यस्य ब्रह्मा ऋषिः अनुष्टुप् छन्दो रुद्रो देवता तत्प्रीतये शतमङ्गलनामाग्नौ पलाशादिसमिद्धोमे वि०। मा नो विदन् विव्याधिनो मो अभिव्याधिनो विदन्। आराच्छरव्या अस्मद्विषुचीरिन्द्र पातय। (अथ० १का० १९क० १म०)।

उमायाः, आपो हि ष्ठेत्यस्य सिन्धुद्वीप ऋषिर्गायत्री छन्द उमा देवता तत्प्रीतये० वि०। आपो हि ष्ठेत्यादि प्राग्वत् (अथ० १का० ५क० १म०)

स्कन्दस्य, अग्निरिवेत्यस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दः स्कन्दो देवता तत्प्रीतये० वि०। अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हुत एधि। हत्वाय शत्रून् विभजस्व वेद ओजो मिमानो वि मृधो नुदस्व (अथ० ४का० ३१क० २म०)।

नारायणस्य, प्र तद्विष्णुरित्यस्याथर्वा ऋषिर्गायत्री छन्दो नारायणो देवता तत्प्रीतये० वि०। प्र तद्विष्णुः स्तवते वीर्य्याणि मृगो न भीमः कुचरो गिरिष्ठाः। परावत आजगम्यात् परस्याः। (अथ० ७का० २६क० २म०)

ब्रह्मणः, ब्रह्म जज्ञानमित्यस्याथर्वा ऋषिः त्रिष्टुप् छन्दः ब्रह्मा देवता तत्प्रीतये० वि०। ब्रह्मजज्ञानमित्यादि (११३पृ० ५पं०) प्राग्वत् (अथ० ४का० १क० १म०)

शक्रस्य, इन्द्रेममित्यस्य ब्रह्मा ऋषिः अनुष्टुप् छन्दः शक्रो देवता तत्प्रीतये० वि०। इन्द्रेमं प्रतरं कृधि सजातानामसद्वशी। रायस्पोषेण संसृज जीवातवे जरसे नय (अथ० ६का० ५क० २म०)

यमस्य, यः प्रथम इत्यस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दो यमो देवता तत्प्रीतये० वि०। यः प्रथमः प्रवतमाससाद बहुभ्यः

पन्थामनुपस्पशानः। तोऽस्येशे द्विपदो यश्चतुष्पदस्तस्मै यमाय नमो अस्तु मृत्यवे (अथ० ६का० २८क० ३म०)

कालस्य, रोहित इत्यस्याथर्वा ऋषिः अनुष्टुप् छन्दः कालो देवता तत्प्रीतये० वि०। रोहितः कालो अभवद्रोहितोऽग्रे प्रजापतिः। रोहितो यज्ञानां मुखं रोहितः स्वराभरत्। (अथ० १३का० २अनु० ३९ म०)

चित्रगुप्तस्य, यदज्ञातमित्यस्य कौशिक ऋषिः अनुष्टुप् छन्दः चित्रगुप्तो देवता तत्प्रीतये० वि०। यदज्ञातं यदा ज्ञातं मर्त्यस्य कर्मणो मिथः। अग्ने त्वं तस्मात् पाहि वेद यथायथमग्नये स्वाहा।

अथ प्रत्यधिदेवतानां तत्राग्नेः, समास्त्वेत्यस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दः अग्निर्देवता तत्प्रीतये० वि०। समास्त्वाग्न ऋतवो वर्द्धयन्तु संवत्सरा ऋषयो यानि सत्या। संदिव्येन दीदिहि रोचनेन विश्वा आभाहि प्रदिशश्चतस्रः (अथ० २का० ६क० १म०)

अपाम्, शन्न इत्यस्य ब्रह्मा ऋषिर्गायत्री छन्दः आपो देवतास्तत्प्रीतये० वि०। शन्नो देवीरभीष्टय आपो भवन्तु पीतये। शंयोरभि स्रवन्तु नः (अथ० १का० ६क० १म०)

क्षितेः, भूमेरित्यस्य ब्रह्मा ऋषिः अनुष्टुप् छन्दः क्षितिर्देवता तत्प्रीतये० वि०। भूमे मातर्निधेहि मा भद्रया सुप्रतिष्ठितम्। संविदाना दिवा कवे श्रियां मा धेहि भूत्याम्। (अथ० १२का० १अनु० ६३म०)।

विष्णोः, इदं विष्णुरित्यस्याथर्वा ऋषिर्गायत्री छन्दः विष्णुर्देवता तत्प्रीतये० वि०। इदं विष्णुरित्यादि (१२५पृ० १७पं०) प्राग्वत् (अथ० ७का० २६क० ४म०)

इन्द्रस्य, इन्द्र जुषस्वेत्यस्याथर्वा ऋषिरनुष्टुप् छन्दः इन्द्रो

देवता तत्प्रीतये० वि०। इन्द्र जुषस्व प्र वहा याहि शूर हरिभ्याम्। पिबा सुतस्य मतेरिहमधोश्चकानश्चारुर्मदाय। (अथ० २का० ५क० १म०)

शच्याः, प्रेतमित्यस्याथर्वा ऋषिरनुष्टुप् छन्दः शची देवता तत्प्रीतये० वि०। प्रेतं पादौ प्रस्फुरतं वहतं पृणतो गृहान्। इन्द्राण्येतु प्रथमाजीतामुषिता पुरः। (अथ० १का० २७क० ४म०)।

प्रजापतेः, नक्तमित्यस्याथर्वा ऋषिरनुष्टुप् छन्दः प्रजापतिर्देवता तत्प्रीतये० वि०। नक्तं जातास्योषधे रामे कृष्णे असिक्नि च। इदं रजनि रजय किलासं पलितं च यत् (अथ० १का० २३क० १म०)

सर्पाणाम्, शेरभकेत्यस्याथर्वा ऋषिः पङ्क्तिश्छन्दः सर्पा देवतास्तत्प्रीतये० वि०। शेरभक शेरभ पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनः। यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त (अथ० २का० २४क० १म०)

ब्रह्मणः, ये दिशामित्यस्याथर्वा ऋषिस्त्रिष्टुप् छन्दः ब्रह्मा देवता तत्प्रीतये०-वि०। ये दिशामन्तर्देशेभ्यो जुह्वति जातवेदः सर्वाभ्यो दिग्भ्योऽभिदासन्त्यस्मान्। ब्रह्मर्त्वा ते पराञ्चो व्यथन्तां प्रत्यगेनान् प्रतिसरेण हन्मि (अथ० ४का० ४०क० ८म०)।

अथ लोकपालानां तत्र विनायकस्य, निर्लक्ष्म्यमित्यस्य द्रविणोदा ऋषिस्त्रिष्टुप् छन्दो विनायको देवता तत्प्रीतये० वि०। निर्लक्ष्म्यं ललाम्यं निररातिं सुवामसि। अथ या भद्रा तानि नः प्रजाया अरातिं नयामसि (अथ० १का० १८क० १म०)।

दुर्गायाः, पृतनाजितमित्यस्याथर्वा ऋषिस्त्रिष्टुप् छन्दो दुर्गा

देवता तत्प्रीतये० वि०। पृतनाजितं सहमानमग्निमुक्थै-
र्हवामहे परमात् सधस्थात्। स नः पर्षदति दुर्गाणि विश्वा
क्षामद्देवोऽति दुरितात्यग्निः ( अथ० ७का० ६३क० )।

वायोः, अन्तरिक्षे इत्यस्य ब्रह्मा ऋषिः अनुष्टुप् छन्दः वायु-
र्देवता तत्प्रीतये० वि०। अन्तरिक्षे वायवे समनमन्त्स
आर्ध्नोत्। यथान्तरिक्षे वायवे समनमन्नेवा मह्यं संनमः संन-
मन्तु ( अथ० ४का० ३९क० ३म० )।

आकाशस्य,आयत इत्यस्याथर्वा ऋषिः त्रिष्टुप् छन्दः आका-
शो देवता तत्प्रीतये० वि०। आयतः पचतो विद्धि सुन्वतः
पन्थां स्वर्गमधिरोहयैनम्। येन रोहात् परमापद्य यद्वय उत्तमं
नाकं परमं व्योम ( अथ० ११का० १अनु० ३०म० )

आश्विनयोः,संचेदित्यस्याङ्गिरा ऋषिः अनुष्टुप् छन्दः आश्वि-
नौ देवते तत्प्रीतये० वि०। संचेन्नयाथो अश्विना कामिना
सं च वक्षथः। संवा भगासो अग्मत संचित्तानि समु व्रता
( अथ० २का० ३०क० २म० )

अथ दिक्पालानां तत्रेन्द्रस्य, इममिन्द्रेत्यस्य ब्रह्मा ऋषिः
त्रिष्टुप् छन्दः इन्द्रो देवता तत्प्रीतये० वि०। इममिन्द्र वर्द्धय
क्षत्रियं म इमं विशामेकवृषं कृणु त्वम्। निरमित्रानक्ष्णुह्यस्य
सर्वांस्तान् रन्धयास्मा अहमुत्तरेषु। (अथ० ४का० २२क०
१म०)

अग्नेः, अग्नेर्मन्व इत्यस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दः अग्नि-
र्देवता तत्प्रीतये० वि०। अग्नेर्मन्वे प्रथमस्य प्रचेतसः पाञ्च-
जन्यस्य बहुधा यमिन्धते। विशोविशः प्रविशिवांसमीमहे स
नो मुञ्चत्वंहसः। ( अथ० ४का० २३क० १म० )

यमस्य, यमो मृत्युरित्यस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दः यमो
देवता तत्प्रीतये० वि०। यमो मृत्यु रघमारो निर्ऋथो बभ्रुः

शर्वोऽस्ता नीलशिखण्डः । देवजनाः सेनयोत्तस्थिवांसस्ते अस्माकं परिवृञ्जन्तु वीरान् । ( अथ० ६का० ९३क० १म० )

निऋतेः, अभि तमित्यस्याथर्वा ऋषिः अनुष्टुप् छन्दः निऋतिर्देवता तत्प्रीतये० वि० । अभितं निऋतिर्धत्तामश्वमिवाश्वाभिधान्या । मल्वो यो मह्यं क्रुध्यति स उ पाशान् न मुच्यते । ( अथ० ४का० ३६क० १०म० )

वरुणस्य, ये पश्चादित्यस्याथर्वा ऋषिः त्रिष्टुप् छन्दः वरुणो देवता तत्प्रीतये० वि० । ये पश्चाज्जुह्वति जातवेदः प्रतीच्या दिशोऽभिदासन्त्यस्मान् । वरुणमृत्वा ते पराञ्चो व्यथन्तां प्रत्यगेनान् प्रतिसरेण हन्मि ( अथ० ४का० ४० क० ३म० )

वायोः, वायोरित्यस्याथर्वा ऋषिः त्रिष्टुप् छन्दः वायुर्देवता तत्प्रीतये० वि० । वायोः सवितुर्विदथानि मन्महे यावात्मन्वद्विशथो यौ च रक्षथः । यौ विश्वस्य परिभू वभूवथुस्तौ नो मुञ्चतमंहसः । ( अथ० ४का० २५क० १म० )

सोमस्य, य उत्तरत इत्यस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दः सोमो देवता तत्प्रीतये० वि० । य उत्तरतो जुह्वति जातवेद उदीच्या दिशोऽभिदासन्त्यस्मान् । सोममृत्वा ते पराञ्चो व्यथन्तां प्रत्यगेनान् प्रतिसरेण हन्मि । ( अथ० ४का० ४०क० ४म० )

ईशानस्य, धाता दधात्वित्यस्याङ्गिरा ऋषिर्गायत्री छन्दः ईशानो देवता तत्प्रीतये० वि० । धाता दधातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन यच्छतु (अथ० ७का० १७क० १म०)

ब्रह्मणः, ब्रह्मापरमित्यस्याथर्वा ऋषिः त्रिष्टुप् छन्दः ब्रह्मा देवता तत्प्रीतये० वि० । ब्रह्मापरं युज्यतां ब्रह्म पूर्वं ब्रह्मान्ततो मध्यतो ब्रह्म सर्वतः । अनाव्याधां देवपुरां प्रपद्य शिवा स्योना पतिलोके विराज । ( अथ० १४का० १अनु० ६४म० )

अनन्तस्य, अनन्तमित्यस्याथर्वा ऋषिः पंक्तिश्छन्दः अनन्तो

देवता तत्प्रीतये० वि०। अनन्तं विततं पुरुत्रानन्तमन्तवच्चा समन्ते। ते नाकपालश्चरति विचिन्वन् विद्वान् भूतमुत भव्य-मस्य। (अथ० १० का० ८क० १२म०)

अथ वस्वादीनां तत्र वसूनाम्, यानावह इत्यस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दः वसवो देवतास्तत्प्रीतये० वि०। यानावह उशतो देव देवांस्तान् प्रेरय स्वे अग्ने सधस्थे। जक्षिवांसः पपिवांसो मधून्यस्मै धत्त वसवो वसूनि। (अथ० ७का० ९७क० ३म०) प्रत्येकदेवतात्वपक्षे (८९पृ० ११पं०) प्रागुक्तनाममन्त्रैः प्रणवादि-स्वाहान्तैर्होमः। संख्या च (११३पृ० १८पं०) प्राग्वत्।

रुद्राणाम्, मा न इत्यस्य ब्रह्मा ऋषिः अनुष्टुप् छन्दः रुद्रा देवतास्तत्प्रीतये० वि०। मा नो विदन्नित्यादि (२१४ पृ० ३पं०) प्राग्वत्। प्रत्येकदेवतात्वपक्षे प्रणवादि स्वाहान्तनाम-मन्त्रैर्होमः। तन्नामानि च (९२पृ० २६पं०) प्रागुक्तानि होम-संख्या च (११३पृ० २६पं०) प्राग्वत्।

आदित्यानाम्, आदित्येभ्य इत्यस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दः आदित्या देवतास्तत्प्रीतये० वि०। आदित्येभ्यो अङ्गिरोभ्यो मध्विदं घृतेन मिश्रं प्रतिवेदयामि। शुद्धहस्तौ ब्राह्मणस्यानि-हत्यैतं स्वर्गं सुकृतावपीतम्। (अथ० १२का० ३अनु० ४४म०) प्रत्येकदेवतात्वपक्षे (९५पृ० ७पं०) प्रागुक्तनाममन्त्रैः प्रणवादि स्वाहान्तैर्होमः। तत्संख्या च (११४पृ० १२पं०) प्राग्वत्।

मरुतानाम्, मरुतामित्यस्याथर्वा ऋषिः त्रिष्टुप् छन्दो मरुतो देवतास्तत्प्रीतये० वि०। मरुतां मन्वे अधि मे ब्रुवन्तु प्रेमं वाजं वाजसा ते अवन्तु। आशूनिव सुयमानह्व ऊतये ते नो मुञ्चन्त्वंहसः। (अथ० ४का० २७क० १म०) प्रत्येकदेव-तात्वपक्षे (९५पृ० २२पं०) प्रागुक्तनाममन्त्रेण प्रणवादि स्वाहा-न्तेन होमः। होमसंख्या च (११४पृ० २०पं०) प्राग्वत्।

ब्रह्मणः, इमा ब्रह्मेत्यस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दो ब्रह्मा देवता तत्प्रीतये० वि०। इमा ब्रह्म बृहद्दिवः कृणवदिन्द्राय शूषमग्नियः स्वर्षाः। महो गोत्रस्य क्षयति स्वराजा तुरश्चिद्विश्वमर्णवत्तपस्वान् ( अथ० ५का० २क० ८म० )

अच्युतस्य, तद्विष्णोरित्यस्य ब्रह्मा ऋषिर्गायत्री छन्दः अच्युतो देवता तत्प्रीतये० वि०। तद्विष्णोः परमं पदमित्यादि स्पष्टम् ( अथ० ७का० २६क० ७म० )

ईशस्य, रुद्रेत्यस्य ब्रह्मा ऋषिरनुष्टुप् छन्दः ईशो देवता तत्प्रीतये० वि०। रुद्रजलाषभेषज नीलशिखण्ड कर्मकृत्। प्राशं प्रतिप्राशो जह्यरसान् कृण्वोषधे। ( अथ० २का० २७क० ६म० )

अर्कस्य, वत्सो विराज इत्यस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दोऽर्को देवता तत्प्रीतये० वि०। वत्सो विराजो वृषभो मतीनामा रुरोह शुक्रपृष्ठोऽन्तरिक्षम्। घृतेनार्कमभ्यर्चन्ति वत्सं ब्रह्म सन्तं ब्रह्मणा वर्द्धयन्ति। ( अथ० १३का० १अनु० ३३म० )

वनस्पतेः, वनस्पते इत्यस्याथर्वा ऋषिस्त्रिष्टुप् छन्दो वनस्पतिर्देवता तत्प्रीतये० वि०। वनस्पते वीड्वङ्गो हि भूया अस्मत् सखा प्रतरणः सुवीरः। गोभिः संनद्धोऽसि वीलयस्वास्थाता ते जयतु जेत्वानि। ( अथ० ६का० १२५क० १म० ) एवं पूर्वोक्तसंख्यया पञ्चाशीति देवानामेकपञ्चाशद्देवानां वा होमं कुर्य्यात्।

अथैषां जप्यसूक्तानि उच्यन्ते। तत्र रवेः, विषासहिमित्यादिषडृचस्य सूर्य्यसूक्तस्याथर्वा ऋषिः जगती छन्दः सूर्य्यो देवता तत्प्रीतये जपे वि०। ओं विषासहिं सहमानं सासहानं सहीयांसम्। सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितम्। ईड्यं नाम ह्व इन्द्रमायुष्मान् भूयासम्॥ १॥ विषासहिमित्यादि। ह्व इन्द्रं प्रियो देवानां भूयासम्॥ २॥ विषासहिं०। ह्व इन्द्रं प्रियः

प्रजानां भूयासम् ॥ ३ ॥ विषासहिं०। त्व इन्द्र प्रियः पशूनां भूयासम् ॥ ४ ॥ विषासहिं०। त्व इन्द्र प्रियः समानानानां भूयासम् ॥ ५ ॥ उदिह्युदिहि सूर्य्य वर्चसा माभ्युदिहि। द्विषंश्च मह्यं रध्यतु मा चाहं द्विषते रधम्। तवेद्विष्णो बहुधा वीर्य्याणि। त्वं नः पृणीहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥ ६ ॥ (अथ० १७का० १अनु० १अवधि ६मन्त्राः)

सोमस्य, शकधूममित्यादिचतुर्ऋचस्य सोमसूक्तस्याथर्वा ऋषिः अनुष्टुप् छन्दः सोमो देवता तत्प्रीतये जपे वि०। ओं शकधूमं नक्षत्राणि यद्राजानमकुर्वत। भद्राहमस्मै प्रायच्छन्निदं राष्ट्रमसादिति ॥ १ ॥ भद्राहं नो मध्यं दिने भद्राहं सायमस्तु नः। भद्राहं नो अह्नां प्राता रात्री भद्राहमस्तु नः ॥ २ ॥ अहो रात्राभ्यां नक्षत्रेभ्यः सूर्य्याचन्द्रमसाभ्याम्। भद्राहमस्मभ्यं राजञ्छकधूमं त्वं कृधि ॥ ३ ॥ यो नो भद्राहमकरः सायं नक्तमथो दिवा। तस्मै ते नक्षत्रराज शकधूम सदा नमः ॥ ४ ॥ (अथ० ६का० १२८क० १अवधि ४मन्त्राः)।

भौमस्य, त्वया मन्यवित्यादिसप्तर्चस्य भौमसूक्तस्य ब्रह्मा ऋषि त्रिष्टुप् छन्दो भौमो देवता तत्प्रीतये जपे वि०। ॐ त्वया मन्यो सरथमारुजन्तो हर्षमाणा हृषितासो मरुत्वन्। तिग्मेषव आयुधा संशिशाना उपप्रयन्तु नरो अग्निरूपाः ॥ १ ॥ अग्निरिव मन्यो त्विषितः सहस्व सेनानीर्नः सहुरे हूत एधि। हत्वाय शत्रून् विभजस्व वेद ओजो मिमानो विमृधो नुदस्व ॥ २ ॥ सहस्व मन्यो अभिमातिमस्मे रुजन् मृणन् प्रमृणन् प्रेहि शत्रून्। उग्रं ते पाजो नन्वा रुरुध्रे वशी वशं नयासा एकज त्वम् ॥ ३ ॥ एको बहूनामसि मन्य ईडिता विशंविशं युद्धाय संशिशादि। अकृत्तरुक् त्वया युजावयं द्युमन्तं घोषं विजयाय कृण्मसि ॥ ४ ॥ विजेष कृदिन्द्र इवा-

नवत्रवोऽस्माकं मन्यो अधिपा भवेह। प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आवभूथ॥ ५॥ आभूत्या सहजा वज्र सायक सहो विभर्षि सहभूत उत्तरम्। क्रत्वा नो मन्यो सह मेद्येधि महाधनस्य पुरुहूत संसृजि॥ ६॥ संसृष्टं धनमुभयं समाकृतमस्मभ्यं धत्तां वरुणश्च मन्युः। भियो दधाना हृदयेषु शत्रवः पराजितासो अप निलयन्ताम्॥ ७॥ (अथ० ४का० ३१क० १अवधि ७मन्त्राः)।

बुधस्य, सोमस्यांश इत्यादिचतुर्ऋचस्य बुधसूक्तस्याथर्वा ऋषि आद्ययोः अनु० अन्त्ययोः त्रिष्टुप् छन्दो बुधो देवता बुधप्रीतये जपे वि०। ओं सोमस्यांशो युधां पतेऽनूनो नाम वा असि। अनूनं दर्श मा कृधि प्रजया च धनेन च॥ १॥ दर्शोऽसि दर्शतोऽसि समग्रोऽसि समन्ततः। समग्रः समन्तो भूयासं गोभिरश्वैः प्रजया पशुभिर्गृहैर्धनेन॥ २॥ योऽस्मान् द्वेष्टि यं वयं द्विष्मस्तस्य त्वं प्राणेनाप्यायस्व। आ वयं प्यायिषीमहि गोभिरश्वैः प्र०॥३॥ यं देवा अंशुमाप्यायन्ति यमक्षितमक्षिता भक्षयन्ति। तेनास्मानिन्द्रो वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः॥ ४॥ (अथ० ७का० ८१क० ३ अवधि ६ मन्त्राः)।

बृहस्पतेः, भद्रादधीत्याद्येकर्चस्य बृहस्पतिसूक्तस्य ब्रह्मा ऋषिस्त्रिष्टुप् छन्दो बृहस्पतिर्देवता तत्प्रीतये जपे वि०। ओं भद्रादधि श्रेयः प्रेहि बृहस्पतिः पुर एता ते अस्तु। अथेममस्या वर आ पृथिव्या आरे शत्रुं कृणुहि सर्ववीरम्। अथ० ७का० ८क० १म०)।

शुक्रस्य, शुक्रोऽसीत्येकर्चस्य शुक्रसूक्तस्याथर्वा ऋषिरनुष्टुप् छन्दः शुक्रो देवता तत्प्रीतये जपे वि०। ओं शुक्रोऽसि भ्राजोऽसि स्वरसि ज्योतिरसि। आप्नुहि श्रेयांसमति समं क्राम। (अथ० २का० ११क० ५म०)।

शनेः, प्राणायेत्यादितृचस्य शनिसूक्तस्य ब्रह्मा ऋषिरनुष्टुप् छन्दः शनिर्देवता तत्प्रीतये जपे वि०। ओं प्राणाय नमो यस्य सर्वमिदं वशे। यो भूतः सर्वस्येश्वरो यस्मिन्त् सर्वं प्रतिष्ठितम्॥ १॥ नमस्ते प्राण क्रन्दाय नमस्ते स्तनयित्नवे। नमस्ते प्राण विद्युते नमस्ते प्राण वर्षते॥ २॥ यत्प्राण स्तनयित्नुनाभिक्रन्दत्योषधीः। प्रवीयन्ते गर्भान् दधतेऽथो बह्वीर्विजायन्ते॥३॥ (अथ० ११का० ४क० १, २ ३ म०)

राहोः, सूक्ताभावात् (२१३पृ० १८पं०) प्राग्वन्मन्त्रजपः।

केतूनां, यस्ते इत्यादितृचस्य केतुसूक्तस्याथर्वा ऋषिराद्ययोस्त्रिष्टुप् अन्त्याया अनुष्टुप् छन्दः केतवो देवतास्तत्प्रीतये जपे वि०। ओं यस्ते पृथुस्तनयित्नुर्य ऋष्वो दैवः केतुर्विश्वमाभूषतीदम्। मा नो वधीर्विद्युता देव सस्यं मोत वधीरश्मिभिः सूर्यस्य॥ १॥ सभा च मा समितिश्चावतां प्रजापतेर्दुहितरौ संविदाने। येना संगच्छा उप मा स शिक्षाच्चारु वदानि पितरः संगतेषु॥ २॥ विद्म ते सभे नाम नरिष्टा नाम वा असि। ये ते के च सभासदस्ते मे सन्तु सवाचसः (अथ० ७का० १अनु० ११, १२, क० १, २म०)

अथाधिदेवानां तत्र रुद्रस्य, मा नो विदन्नित्यादिचतुर्ऋचस्य रुद्रसूक्तस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दः रुद्रो देवता तत्प्रीतये जपे वि०। ओं मा नो विदन् वि व्याधिनो मो अभिव्याधिनो विदन्। आराच्छरव्या अस्मद्विषूचीरिन्द्र पातय॥ १॥ विष्वञ्चो अस्मच्छरवः पतन्तु ये अस्ता ये चास्याः। दैवीर्मनुष्येषवो ममामित्रान् विविध्यत॥ २॥ यो नः स्वो यो अरणः सजात उत निष्ट्यो यो अस्माँ अभिदासति। रुद्रः शरव्ययैतान् ममामित्रान् विविध्यतु॥ ३॥ (अथ० १का० १९क० १, २, ३म०)

उमायाः, पृतनाजितमित्याद्येकर्चस्योमासूक्तस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्द उमा देवता तत्प्रीतये जपे वि० । ओं पृतनाजितं सहमानमग्निमुक्थैर्हवामहे परमात् सधस्थात् । स नः पर्षदति दुर्गाणि विश्वा चामद्देवो अति दुरित्यग्निः । ( अथ० ७का० ६अनु० ६३ क० )

स्कन्दस्य, सूक्ताभावात् ( २१४ पृ० १०पं० ) प्राग्वन्मन्त्रो जप्यः ।

नारायणस्य, यन्न इन्द्र इत्यादिपञ्चर्चस्य नारायणसूक्तस्याथर्वा ऋषिः त्रिष्टुप् छन्दः नारायणो देवता तत्प्रीतये जपे वि० । ओं यन्न इन्द्रो अखनद्यदग्निर्विश्वे देवा मरुतो यत् स्वर्काः । तदस्मभ्यं सविता सत्यधर्मा प्रजापतिरनुमतिर्नियच्छात् ॥ १ ॥ ययोरोजसा स्कभिता रजांसि यौ वीर्य्यैर्वीरतमा शविष्ठा । यौ पत्येते अप्रतीतौ सहोभिर्विष्णुमगन् वरुणं पूर्वहूतिः ॥२॥ यस्येदं प्रदिशि यद्विरोचते प्र चानति वि च चष्टे शचीभिः । पुरा देवस्य धर्मणा सहोभिर्विष्णुमगन् वरुणं पूर्वहूतिः ॥ ३ ॥ विष्णोर्नुकं प्र वोचं वीर्य्याणि यः पार्थिवानि विममे रजांसि । यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ ४ ॥ प्र तद्विष्णुः स्तवते वीर्य्याणि मृगो न भीमः कुचरो गिरिष्ठाः । परावत आजगम्यात् परस्याः ॥ ५ ॥ ( अथ० ७का० ३अनु० २४, २५, २६ क० )

ब्रह्मणः, ब्रह्मजज्ञानमित्यादिसप्तर्चस्य ब्रह्मसूक्तस्याथर्वा ऋषिः त्रिष्टुप् छन्दः ब्रह्मा देवता तत्प्रीतये जपे वि० । ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः । स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ १ ॥ इयं पित्र्या राष्ट्र्येत्वग्रे प्रथमाय जनुषे भुवनेष्ठाः । तस्मा एतं सुरुचं ह्वारमह्यं धर्म्मं श्रीणन्तु प्रथमाय धास्यवे ॥ २ ॥ प्र यो यज्ञे विद्वा-

नस्य बन्धुर्विश्वा देवानां जनिमा विवक्ति। ब्रह्म ब्रह्मण उज्जभार मध्यान्नीचैरुच्चैः स्वधा अभि प्रतस्थौ ॥ ३ ॥ स हि दिवः स पृथिव्या ऋतस्था मही क्षेमं रोदसी अस्कभायत्। महान्मही अस्कभायद्विजातो द्यां सद्म पार्थिवं च रजः ॥ ५ ॥ स बुध्न्यादाष्ट जनुषोऽभ्यग्रं बृहस्पतिर्देवता तस्य सम्राट्। अहर्यच्छुक्रं ज्योतिषो जनिष्टाथ द्युमन्तो विवसन्तु विप्राः ॥ ४ ॥ नूनं तदस्य काव्यो हिनोति महो देवस्य पूर्वस्य धाम। एष जज्ञे बहुभिः साकमित्था पूर्वे अर्द्धे विषिते ससन्नु ॥ ६ ॥ योऽथर्वाणं पितरं देवबन्धुं बृहस्पतिं नमसाव च गच्छात्। तं विश्वेषां जनिता यथासः कविर्देवो न दभायत् स्वधावान् ॥ ७ ॥ ( अथ० ४का० १अनु० १अवधि ७मन्त्राः )

शक्रस्य, इन्द्रो जयातीत्यादित्र्यृचस्य शक्रसूक्तस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दः शक्रो देवता तत्प्रीतये जपे वि०। ओं इन्द्रो जयाति न परा जयाता अधिराजो राजसु राजयाते। चर्कृत्य ईड्यो वन्द्यश्चोपसद्यो नमस्यो भवेह ॥ १ ॥ त्वमिन्द्राधिराजः श्रवस्युस्त्वं भूरभिभूतिर्जनानाम्। त्वं दैवीर्विश इमावि राजायुष्मत्क्षत्रमजरं ते अस्तु ॥ २ ॥ प्राच्या दिशस्त्वमिन्द्रासि राजोतोदीच्या दिशो वृत्रहञ्छत्रुहोऽसि। यत्र यन्ति स्रोत्यास्तज्जितं ते दक्षिणतो वृषभ एषि हव्यः ॥ ३ ॥ ( अथ० ६का० ९८क० १,२,३म० )

यमस्य, यमो मृत्युरित्यादित्र्यृचस्य यमसूक्तस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दः यमो देवता तत्प्रीतये जपे वि०। ओं यमो मृत्युरघमारो निर्ऋथो बभ्रुः शर्वोऽस्ता नीलशिखण्डः। देवजनाः सेनयोत्तस्थिवांसस्ते अस्माकं परिवृञ्जन्तु वीरान् ॥ १ ॥ मनसा होमैर्हरसा घृतेन शर्वायास्त्र उत राज्ञे भवाय। नमस्येभ्यो नम एभ्यः कृणोम्यन्यत्रास्मदघविषा नयन्तु ॥ २ ॥ त्रायध्वं नो

अघविषाभ्यौ बधादिश्वे देवा मरुतो विश्ववेदसः । अग्नीषोमा वरुणः पूतदक्षा वातापर्जन्ययोः सुमतौ स्याम ॥ ३ ॥ ( अथ० ६का० ८३क० १,२,३म० )

कालस्य, रोहित इत्यादिद्व्यृचस्य कालसूक्तस्याथर्वा ऋषिः अनुष्टुप् छन्द कालो देवता तत्प्रीतये जपे वि० । ओं रोहितः कालो अभवद्रोहितोऽग्रे प्रजापतिः । रोहितो यज्ञानां मुखं रोहितः स्वराभरत् ॥ १ ॥ रोहितो लोको अभवद्रोहितो अत्यतपद्दिवम् । रोहितो रश्मिभिर्भूमिं समुद्रमनुसञ्चरत् ॥ २ ॥ ( अथ० १३का० २अनु० ३९ ४०म० )

चित्रगुप्तस्य, अर्वाङित्यादिचतुर्ऋचस्य चित्रगुप्तसूक्तस्याथर्वा ऋषिः त्रिष्टुप् छन्दः चित्रगुप्तो देवता तत्प्रीतये जपे वि० । ओं अर्वाङ् परस्तात् प्रयतो व्यध्व आशुर्विपश्चित् पतयन् पतङ्गः । विष्णुर्विचित्तः शवसाधितिष्ठन् प्र केतुना सहते विश्वमेजत् ॥ १ ॥ चित्रश्चिकित्वान्महिषः सुपर्ण आरोचयन्रोदसी अन्तरिक्षम् । अहोरात्रे परि सूर्य्यं वसाने प्रास्य विश्वातिरतो वीर्य्याणि ॥ २ ॥ तिग्मो विभ्राजं तन्वं शिशानोऽरङ्गमासः प्रवतो रराणः । ज्योतिष्मान् पक्षी महिषो वयोधा विश्वा आस्थात् प्रदिशः कल्पमानः ॥ ३ ॥ चित्रं देवानां केतुरनीकं ज्योतिष्मान् प्रदिशः सूर्य्य उद्यन् । दिवाकरो ति द्युम्नैस्तमांसि विश्वातारीद्दुरितानि शुक्रः ॥ ४ ॥ (अथ० १३का० २अनु० ३१ अवधि ३४मन्त्राः)

अथ प्रत्यधिदेवतानां तत्राग्नेः, अग्नेरित्यादिकस्य तृचस्याग्निसूक्तस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दः अग्निर्देवता तत्प्रीतये जपे वि० । ओं अग्नेर्मन्वे प्रथमस्य प्रचेतसः पाञ्चजन्यस्य बहुधा यमिन्धते । विशोविशः प्रविशिवांसमीमहे स नो मुञ्चत्वंहसः ॥ १ ॥ यथा हव्यं वहसि जातवेदो यथा यज्ञं कल्पयसि प्रजानन् । एवा देवेभ्यः सुमतिं न आवह स

नो० ॥ २ ॥ यामन्यामन्नुपयुक्तं वहिष्ठं कर्मन् कर्मन्नाभगमग्नि-मीड़े। रक्षोहणं यज्ञवृधं घृताहुतं स नो० ॥ ३ ॥ (अथ० ४का० २३क० १, २, ३म० )

अपाम्, शन्न इत्यादिचतुर्ऋचस्याप्सूक्तस्य ब्रह्मा ऋषिः तिसृणां गायत्री छन्दो अन्त्यायाः सयजुष्का गायत्री छन्दो आपो देवतास्तत्प्रीतये जपे वि०। ओं शन्नो देवीरभीष्टय आपो भवन्तु पीतये। शंयोरभि स्रुवन्तु नः। अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा। अग्निं च विश्वशम्भुवम् ॥ २ ॥ आपः पृणीत भेषजं वरूथं तन्वे मम। ज्योक् च सूर्यं दृशे ॥ ३ ॥ शंनो आपो धन्वन्याः शमु सन्त्वनूप्याः। शं नः खनित्रिमा आपः शमु याः कुम्भ आभृताः शिवा नः सन्तु वार्षिकीः ॥ ४ ॥ (अथ० १का० ६क० १, २, ३, ४म० )।

क्षितेः, सत्यमित्याद्येकर्चस्य क्षितिसूक्तस्य ब्रह्मा ऋषि त्रिष्टुप् छन्दो क्षितिर्देवता तत्प्रीतये जपे वि०। ओं सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धावयन्ति। सा नो भूतस्य भव्यस्य पत्न्युरुं लोकं पृथिवी नः कृणोतु। (अथ० १२का० १क० १म० )।

विष्णोः, यन्न इन्द्रेत्यादिकपञ्चर्चं विष्णुसूक्तं (२२४पृ० १०पं० ) प्राग्वत्।

इन्द्रस्य, इन्द्रो जयातीत्यादीन्द्रसूक्तं (२२५पृ० १३पं) प्राग्वत्।

शच्याः, प्रेतं पादावित्येकर्चं शचीसूक्तं (२१६पृ० ५पं० ) प्राग्वत्।

प्रजापतेः, प्रजापते इत्यादिद्व्यृचस्य प्रजापतिसूक्तस्य ब्रह्मा ऋषि त्रिष्टुप् छन्दो प्रजापतिर्देवता तत्प्रीतये जपे वि०। ओं प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिभूर्जजान्। यत्-

कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ १ ॥ पौर्णमासी प्रथमा यज्ञियासीदह्नां रात्रीणामतिशर्वरेषु । ये त्वां यज्ञैर्यज्ञिये अर्द्धयन्त्यमी ते नाके सुकृतः प्रविष्टाः ( अथ० ७का० ८०क० ३, ४, म० ) ।

सर्पाणाम्, शेरभकेत्यादिकस्याष्टर्चस्य सर्पसूक्तस्याथर्वा ऋषि पङ्क्तिश्छन्दो सर्पा देवतास्तत्प्रीतये जपे वि० । शेरभक शेरभ पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनः । यस्य स्थ तमत्त यो वः प्राहैत्तमत्त स्वा मांसान्यत्त ॥ १ ॥ शेवृधक शेवृध पुनर्वो यन्तु० ॥ २ ॥ म्रोकानुम्रोक पुनर्वो यन्तु० ॥ ३ ॥ सर्पानुसर्प पुनर्वो यन्तु० ॥ ४ ॥ जूर्णि पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनीः । यस्य० ॥ ५ ॥ उपब्दे पुनर्वो यन्तु० ॥ ६ ॥ अर्जुनि पुनर्वो यन्तु० ॥ ७ ॥ भरूजि पुनर्वो यन्तु यातवः पुनर्हेतिः किमीदिनीः । यस्य स्थ० ॥ ८ ॥ ( अथ० २का० २४क० १अवधि ८ मन्त्राः ) ।

ब्रह्मणः, ब्रह्म जज्ञानमित्यादिकं सप्तर्चं ब्रह्मसूक्तं ( २२४पृ० २२पं० ) प्राग्वत् ।

अथ लोकपालानां तत्र विनायकस्य, निर्लक्ष्म्यमित्यादिचतुर्ऋचस्य विनायकसूक्तस्य द्रविणोदा ऋषि आद्यान्त्ययोरनुष्टुप् छन्दो मध्ययोस्त्रिष्टुप् छन्दो विनायको देवता तत्प्रीतये जपे वि० । निर्लक्ष्म्यं ललाम्यं निररातिं सुवामसि । अथ या भद्रा तानि नः प्रजाया अरातिं नयामसि ॥ १ ॥ निररणिं सविता साविषत्पदोनिर्हस्तयोर्वरुणो मित्रो अर्यमा । निरस्मभ्यमनुमती रराणा प्रेमां देवा असाविषुः सौभगाय ॥ २ ॥ यत्त आत्मनि तन्वां घोरमस्ति यद्वा केशेषु प्रतिचक्षणे वा । सर्वं तद्वाचापहन्मो वयं देवस्त्वा सविता सूदयतु ॥ ३ ॥ रिश्यपदीं वृषदतीं गोषेधां विधमामुत । विलीढ्यं ललाम्यं ता

अस्मन्नाशयामसि ॥ ४ ॥　( अथ० १का० १८क० १, २, ३, ४म० )।

दुर्गायाः, पृतनाजितमित्याद्येकर्चं दुर्गासूक्तं (२२४पृ० २पं० ) प्राग्वत्।

वायोः, वायोरित्यादिद्व्यृचस्य वायुसूक्तस्याथर्वा ऋषिः त्रिष्टुप् छन्दो वायुर्देवता तत्प्रीतये जपे वि०। ओं वायोः सवितुर्विदथानि मन्महे यावात्मन्वद्विशथो यौ च रक्षथः। यौ विश्वस्य परिभू बभूवथुस्तौ नो मुञ्चतमंहसः ॥१॥ ययोः संख्याता वरिमा पार्थिवानि याभ्यां रजो युपितमन्तरिक्षे। ययोः प्रायं नान्वानशे कश्चन तौ नो मुञ्चतमंहसः ॥ २ ॥ ( अथ० ४का० २५क० १, २म० )

आकाशस्य, पुरं य इत्यादिसार्द्धचतुरृचस्याकाशसूक्तस्य ब्रह्मा ऋषिः अनुष्टुप् छन्दः आकाशो देवता तत्प्रीतये जपे वि०। ॐ पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते ॥ ॥ ॥ यो वै तां ब्रह्मणो वेदामृतेनावृतां पुरम्। तस्मै ब्रह्म च ब्राह्माश्च चक्षुः प्राणं प्रजां ददुः ॥ १ ॥ ॥ न वै तं चक्षुर्जहाति न प्राणो जरसः पुरा। पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते ॥ २ ॥ ॥ अष्टाचक्रा नवद्वारा देवानां पूरयोध्या। तस्यां हिरण्मयः कोशः स्वर्गो ज्योतिषा वृतः ॥ ३ ॥ ॥ तस्मिन् हिरण्मये कोशे त्र्यरे त्रिप्रतिष्ठिते। तस्मिन् यद्यक्षमात्मन्वत्तद्वै ब्रह्म विदो विदुः ॥ ४ ॥ ॥ ( अथ० १० का० २ क० २७॥ अवधि ४॥ मन्त्राः )

आश्विनयोः, संचेदित्याद्येकर्चमाश्विनसूक्तं (२१७पृ० १३पं०) प्राग्वत्।

अथ दिक्पालानां तत्रेन्द्रस्य, इन्द्रो जयाति इत्यादितृचमिन्द्रसूक्तं ( २२५पृ० १३पं० ) प्राग्वत्।

अग्नेः, अग्नेर्मन्वे इत्यादित्र्यृचमग्निसूक्तं (२२६पृ० २३पं० प्राग्वत्।

यमस्य, यमो मृत्युरित्यादित्र्यृचं यमसूक्तं (२२५पृ० २२पं०) प्राग्वत्।

निर्ऋतेः, यस्यास्त इत्यादिकस्य त्र्यृचस्य निर्ऋतिसूक्तस्य ब्रह्मा ऋषिः मध्याया गायत्री शिष्टयोः त्रिष्टुप् छन्दः निर्ऋतिर्देवता तत्प्रीतये जपे वि०। ओं यस्यास्त आसनि घोरे जुहोम्येषां बद्धानामवसर्जनाय कम्। भूमिरिति त्वाभि प्रमन्वते जना निर्ऋतिरिति त्वाहं परि वेद सर्वतः॥ १॥ भूते हविष्मती भवेष ते भागो यो अस्मासु। मुञ्चेमानमूनेनसः स्वाहा॥ २॥ एवोष्वस्मन्निर्ऋतेऽनेहा त्वमयस्मयान् विचृता बन्धपाशान्। यमो मह्यं पुनरित्त्वां ददाति तस्मै यमाय नमो अस्तु मृत्यवे॥ ३॥ (अथ० ६का० ८४क० १, २, ३म०)

वरुणस्य, उदुत्तममित्याद्येकर्चस्य वरुणसूक्तस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दः वरुणो देवता तत्प्रीतये जपे वि०। ओं उदुत्तममित्यादि (११२पृ० १२पं०) प्राग्वत् (अथ० ७का० ८३क० ३म०)

वायोः, वायोः सवितुरित्यादिद्व्यृचं वायुसूक्तं (२२९पृ० ६पं०) प्राग्वत्।

सोमस्य, शकधूममित्यादिचतुर्ऋचं सोमसूक्तं (२२१पृ० ८पं०) प्राग्वत्।

ईशस्य, मा नो विदन्नित्यादिकं चतुर्ऋचमीशसूक्तं (२२३पृ० २०पं०) प्राग्वत्।

ब्रह्मणः, ब्रह्म जज्ञानमित्यादिकं सप्तर्चं ब्रह्मसूक्तं (२२९पृ० १२पं०) प्राग्वत्।

अनन्तस्य, शेरभकेत्याद्यष्टर्चमनन्तसूक्तं (२२८पृ० ६पं०) प्राग्वत्।

अथ वस्वादीनाम्, तत्र वसूनां, यानावह इत्याद्येकर्चं वसुसूक्तं (२१८पृ० ५पं०) प्राग्वत्।

रुद्राणाम्, सूक्ताभावात् होममन्त्र एव (२१४पृ० ३पं०) प्रागुक्तो जप्यः।

आदित्यानां, सूक्ताभावात् होममन्त्र एव (२१८पृ० १६पं०) प्रागुक्तो जप्यः।

मरुताम्, सूक्ताभावात् होममन्त्र एव (२१८ पृ० २२पं०) प्रागुक्तो जप्यः।

ब्रह्मणः, ब्रह्म जज्ञानमित्यादि सप्तर्चं ब्रह्मसूक्तं (२२४७पृ० २२प०) प्राग्वत्।

अच्युतस्य, यन्न इन्द्र इत्यादिपञ्चर्चमच्युतसूक्तं (२२४ पृ० १०पं०) प्राग्वत्।

ईशस्य, मा नो विदन्नित्यादित्र्यृचमीशसूक्तं (२२३पृ० २०पं०) प्राग्वत्।

अर्कस्य, विषासहिमित्यादिषड़ृचमर्कसूक्तं (२२०पृ० २३पं०) प्राग्वत्।

वनस्पतेः, सूक्ताभावात् होममन्त्र एव (२२०पृ० १७पं०) प्राग्वत् जप्यः।

अत्रैव समये द्वारपालैर्वक्ष्यमाणशान्त्याध्यायादिकं पठनीयम्।

एवं द्वारपालैर्जापकैश्च पाठ्यजप्यसूक्तादिषु अधीतेषु होता उत्तराङ्गं कर्म कुर्य्यात्। तत्र पूर्णाहुति प्राग्भावीनि सर्वाण्येव कर्माणि तस्मिन्नेव दिने कुर्य्यात् पूर्णहोमन्तु प्रकृते परदिने स्वस्तिवाचनानन्तरं कुर्य्यादिति विशेषः। तत्प्राग्भावीनि कर्माण्युच्यन्ते। तत्र प्रथमं (२१२पृ० ६पं०) पूर्ववदभ्यातानाख्याः सप्त दशाहुतीर्दद्यात्। ततः समृद्धोर्जुहुयात् यथा। ओं आकूत्यै स्वाहा। ओं कामाय त्वा स्वाहा। ओं समृधे त्वा स्वाहा।

ओं ऋचा स्तोमं संवर्द्धय गायत्रेण रथन्तरं बृहद्गायत्र वर्त्तनि स्वाहा । इति चतस्रो जुहुयात् । ततः सन्नति होमः । यथा । ओं पृथिव्यामग्नये समनमन्त्स आर्ध्नोत् । यथा पृथिव्यामग्नये समनमन्नेवा मह्यं संनमः संनमन्तु ॥ १ ॥ पृथिवी धेनुस्तस्या अग्निर्वत्सः । सा मेऽग्निना वत्सेनेषमूर्जं कामं दुहाम् । आयुष्प्रथमं प्रजां पोषं रयिं स्वाहा ॥ २ ॥ अन्तरिक्षे वायवे समनमन्त्स आर्ध्नोत् । यथान्तरिक्षे वायवे समनमन्नेवा मह्यं संनमः संनमन्तु ॥ ३ ॥ अन्तरिक्षं धेनुस्तस्यावायुर्वत्सः । सा मे वायुना वत्सेनेषमूर्जमित्यादि ॥४॥ दिव्यादित्याय समनमन्त्स आर्ध्नोत् । यथा दिव्यादित्याय समनमन्नेवा मह्यं संनमः संनमन्तु ॥ ५ ॥ द्यौर्धेनुस्तस्या आदित्यो वत्सः । सा न आदित्येन० ॥ ६ ॥ दिक्षु चन्द्राय समनमन्त्स आर्ध्नोत् । यथा दिक्षु चन्द्राय समनमन्नेवा मह्यं संनमः संनमन्तु ॥ ७ ॥ दिशो धेनवस्तासां चन्द्रो वत्सः । ता मे चन्द्रेण वत्सेनेषमूर्जमित्यादि ॥ ८ ॥ (अथ० ४का० ३९. क० १ अवधि ८मन्त्राः ) अथोपस्तोर्य्यहोमः । यथा ओं प्रजापते न त्वदेतान्यन्यो विश्वारूपाणि परिभूर्जजान । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां स्वाहा । ततः स्विष्टकृद्धोमः सर्वेषां चरूणामुत्तरतोऽवदानेन स्रुवेणाभिघार्य्य ओं आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोढुम् । अग्निर्विद्वान्त्स यजात् स इद्धोता सोऽध्वरान्त्स ऋतून् कल्पयति ( अथ० १९का० ५९क० ३म० ) ओं अग्नये स्विष्टकृते स्वाहा । इत्युत्तरार्द्धे । पूर्वार्द्धे त्वसंसृष्टं हुत्वा प्रायश्चित्तहोमं कुर्य्यात् । यथा ओं स्वाहेष्टेभ्यः स्वाहा । ओं वषडनिष्टेभ्यः स्वाहा । ओं भेषजपुष्ट्यै स्वाहा । ओं निष्कृतिदुरिष्ट्यै स्वाहा । ओं दैवीभ्यस्तनूभ्यः स्वाहा । ओं अयाश्चाग्नेऽस्यनभिशस्तीश्च स त्वमित्त्वमया असि । अयसा मनसा धृतोऽयांश्च

हव्यमोहिषे अया नो धेहि स्वाहा। ओं भूः स्वाहा। ओं भुवः स्वाहा। ओं स्वः स्वाहा। इति प्रायश्चित्तहोमः। अथ स्कन्न-होमः। ओं यन्मे स्कन्नं मनसो जातवेदो यद्वा स्कन्दद्धविषो यत्र यत्र। उत्प्रुषो विप्रुषः संजुहोमि सत्याः सन्तु यजमानस्य कामाः स्वाहा। ओं पुनर्मैत्विन्द्रियं पुनरात्मा द्रविणं ब्राह्मणञ्च। पुनरग्नयो धिष्ण्या यथास्थाम कल्पयन्तामिहैव स्वाहा (अथ० ७का० ६७क० १म०) ततोऽस्मृतिहोमः। ओं यदस्मृति चकृम किं चिदग्न उपारिम चरणे जातवेदः। ततः पाहि त्वं नः प्रचेतः शुभे सखिभ्यो अमृतत्वमस्तु नः। (अथ० ७का० १०६क० १म०)। अथ संस्थितिहोमः। ओं यदद्य त्वा प्रयति यज्ञे अस्मिन् होतश्चिकित्वन्न वृणीमहीह। ध्रुवमयो ध्रुवमुता शविष्ठ प्रविद्वान् यज्ञमुप याहि सोमम्॥ १॥ समिन्द्र नो मनसा नेष गोभिः संसूरिभिर्हरिवन्त्स स्वस्त्या। सं ब्रह्मणा देवहितं यदस्ति संदेवानां सुमतौ यज्ञियानाम्॥२॥ ओं याना-वह उशतो देवदेवांस्तान् प्रेरय स्वे अग्ने सधस्थे। जक्षिवांसः पपिवांसो मधून्यस्मै धत्त वसवो वसूनि स्वाहा॥ ३॥ ओं सुगा वो देवाः सदना अकर्म य आजग्म सवने मा जुषाणाः। वह-मानाः भरमाणाः स्वा वसूनि वसुं घर्मं दिवमारोहतानु॥ ४॥ ओं यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा॥ ५॥ ओं एष ते यज्ञो यज्ञपते सह सूक्तवाकः सुवीर्य्यः स्वाहा॥ ६॥ ओं वषड्ढुतेभ्यः वषड्हुतेभ्यः। देवा गातु विदो गातुं वित्त्वा गातुमित॥ ७॥ (अथ० ७का० ९७क० १ अवधि ७मन्त्राः) अथ मानसहोमः। ओं मनस-स्पत इमं नो दिवि देवेषु यज्ञं स्वाहा॥ १॥ ओं दिवि स्वाहा॥ २॥ ओं पृथिव्यै स्वाहा॥ ३॥ ओं अन्तरिक्षाय स्वाहा॥ ४॥ ओं वाते धां स्वाहा॥ ५॥ (अथ० ७का०

८७क० ८म०) तत आज्यस्थालीघृतमुत्तमं चरुञ्च गृहीत्वा आज्यधान्यां स्थापयित्वा स्रुवेण गृहीत्वा तूष्णीमेकाहुतिं जुहुयादिति मानसहोमः। तत आस्तरणवर्हिस्त्रिगुणीकृत्य आज्यधानीघृतेन अभ्यज्य ओं पृथिव्यै त्वेति मूलमभ्यञ्ज्यात्। ओं अन्तरिक्षाय त्वेति मध्यम्। ओं दिवे त्वेत्यन्तम् एवं त्रिधा कृत्वा। ओं संवर्हिरक्तं हविषा घृतेन समिन्द्रेण वसुना संमरुद्भिः। संदेवैर्विश्वदेवेभिरक्तमिन्द्रं गच्छतु हविः स्वाहा (अथ० ७का० ९८क०) इति वर्हिर्हुत्वा। ओं संस्रवभागाः स्थ हविषा वृ० हः प्रस्तरे वर्हिषस्सदस्य वा। इमं यज्ञमभिविश्वे गृणन्त स्वाहा। ओं देवानामसृता मादयन्तां स्वाहा। इति संस्रवं जुहुयात्। ततो दिक्पालेभ्यो वलिः। (१४६पृ, २३ पं०) (प्राग्वत्) ततो द्वितीयेऽहनि पुण्याहवाचनाद्यनन्तरं पूर्णाहुतिं दद्यात्। यथा यदि कृष्णपक्षे होमस्तदा ओं यत्ते देवा अकृण्वन् भागधेयममावास्ये संवसन्तो महित्वा। तेना नो यज्ञं पिपृहि विश्ववारे रयिं नो धेहि सुभगे सुवीरम्। (अथ० ७का० ७९क० १म०) शुक्लपक्षे चेत्तदा ओं पूर्णा पश्चादुत पूर्णा पुरस्तान्मध्यतः पौर्णमासी जिगाय। तस्यां देवैः संवसन्तो महित्वा नाकस्य पृष्ठे समिषा मदेम। (अथ० ७का० ८०क० १म०)। ततः स्रुक्स्रुवौ घृतपूर्णौ कृत्वा ओं समास्त्वाग्न ऋतवो वर्द्धयन्तु संवत्सरा ऋतवो यानि सत्या। संदिव्येन दीदिहि रोचनेन विश्वा आभाहि प्रदिशश्चतस्रः। अभ्यर्चत सुष्टुतिं गव्यराजिमस्मासु भद्रा द्रविणानि धत्त। शुद्धहस्तौ ब्राह्मणस्य निहत्यैतत् सर्गसुतावापीतं स्वाहा इति मन्त्रेण पूर्णाहुतिं दत्त्वा। ओं देवोऽसि घृताभिसृतः सपत्नक्षयणो दिवि सीद। अन्तरिक्षे सीद पृथिव्यां सीदोत्तरोऽहं भूयासमधरे मत्समना इति स्रुवं क्रमेण दिवि अन्तरिक्षे पृथिव्याञ्च कृत्वा

स्रुवप्रागद्दण्डमग्नेरुत्तरतः कृत्वा ओं विमुञ्चामि ब्रह्मणा जातवेदसमग्निं होतारमजरं रथस्पृतम्। स देवानां जनिमा न विद्वान् यथाभागं वहतु हव्यमग्निरग्नये स्वाहा। इति समिधं जुहुयात्। ततः ओं एधोऽस्येधिषीय स्वाहा समिदसि समेधिषीय स्वाहा तेजो मयि धेहि स्वाहेति मुखं मार्जयेत्। ततो विष्णुक्रमान् क्रमेत्। स ओं विष्णोः क्रमोऽसि सपत्नहा पृथिवीसंशितोऽग्नितेजाः। पृथिवीमनु विक्रमेऽहं पृथिव्यास्तं निर्भजामो योऽस्मान् द्वेष्टि यं वयं द्विष्मः स मा जीवीत्तं प्राणो जहातु॥ १॥ ॐ विष्णोः क्रमोऽसि सपत्नहान्तरिक्षसंशितो वायुतेजाः। अन्तरिक्षमनु विक्रमेऽहमन्तरिक्षात्तं निर्भजामो ०॥ २॥ ओं विष्णोः क्रमोऽसि सपत्नहा द्योसंशितः सूर्य्यतेजाः। दिवमनु विक्रमेऽहं दिवस्तं निर्भजामो योऽस्मान् ०॥ ३॥ ( अथ० १०का० ५क० २५, २६, २७म० ) इति त्रिभिर्मन्त्रैस्त्रीन् विष्णुक्रमान् क्रान्त्वा वहिर्निष्क्रम्य। ओं सूर्य्यस्यावृतमन्वावर्त्ते दक्षिणामन्वावृतम्। सा मे द्रविणं यच्छतु सा मे ब्राह्मणवर्चसम्। इति प्रदक्षिणं कृत्वा ओं अगन्म स्वः स्वरगन्म संसृस्य ज्योतिषागन्म वस्यो भूयासं वसुमान् यज्ञो वसुवेशीषीय वसुमान् भूयासं वसु मयि धेहीति मन्त्रेणादित्यं निरीक्षेत। अथोदपात्रमुत्थापयेत् यथा। ओं इन्द्रेण वचसा वयं मित्रस्य वरुणस्य च। ब्रह्मणा स्थापितं पात्रं पुनरुत्थापयामसीति। इत्युत्थाप्य तदुदकेन आपो हिष्ठेति प्रागुक्तमन्त्रेण यजमानं मार्जयेत्। ततो यजमानः स्रुवमुदपात्रस्थमुदकं च ओं इन्द्रेण वचसेत्यनुपदपठितेन सपवित्रं चालयित्वा ओं समुद्रं त्वा प्रहिणोमि स्वां योनिमपि गच्छत। आविष्टा सर्वहायसो मोचनः किञ्च नामभृत्। इन्द्रे जनासो विदथ महद्ब्रह्म वदिष्यति। न तत् पृथिव्यां नो दिवि येन प्राणन्ति

वोरुध इति द्वाभ्यां तदुदकं यजमानाञ्जलौ निक्षिप्य तत्रैव यजमानो वीरपुरुषोऽहमिति मुखं विमार्ष्टि। ततो होता ओं जलानि व्रतपतये स्वाहेति ;तत्र समिधमाधाय ओं सत्यं त्वर्त्तेन परिषिञ्चामि जातवेदा इत्यग्निं परिषिच्याज्यस्थाली-मुत्थाप्य ब्रह्मकर्म प्रतिष्ठार्थं संकल्पपूर्वकं पूर्णपात्रं दक्षिणां दद्यात्। ततो मङ्गलस्वस्त्ययनादि कुर्य्यात्। इत्यथर्वणिकाना-मग्निस्थापनादिविधिः।

इदानीं सर्वमहादानान्नाचलादिदानेषु ऋग्वेद्यादिक्रमेण द्वारपालपाठ्यानि सूक्तादीनि अभिधीयन्ते तत्रादौ ऋग्वेदि-पाठ्यानि "श्रीसूक्तं पावमानञ्च सोमसूक्तं सुमङ्गलम्। शान्त्य-ध्यायश्चेन्द्रसूक्तं रक्षोघ्नं चेति वह्वृचौ" इत्युक्तान्येव वेदि-तव्यानि। अत्र पूर्वं द्वारं समाश्रित्य पठेतामित्याकर्षः। तत्रादौ श्रीसूक्तं यथा। हिरण्यवर्णामित्यादिपञ्चदशार्चस्य श्रीसूक्तस्यानन्दकर्दमचिक्लीता ऋषि पञ्चमीषष्ठ्योस्त्रिष्टुप् छन्द शिष्टानामनुष्टुप् छन्दः श्रीर्देवता तत्प्रीतये जपे विं०। ओं हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह॥ १॥ ताम्म आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्या हिरण्यं विन्देयं गामश्वं पुरुषा-नहम्॥ २॥ अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम्। श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम्॥ ३॥ कांसोस्मितां हिरण्य-प्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्। पद्मे स्थितां पद्म-वर्णां तामिहोपह्वये श्रियम्॥ ४॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्। तां पद्मनेमिं शरणं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणोमि॥ ५॥ आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ विल्वः। तस्य फलानि तपसा नुदन्तु माया अन्तरायाश्च बाह्या अलक्ष्मीः॥ ६॥

उपैतु मां देवसखः कीर्त्तिश्च मणिना सह। प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्त्तिं वृद्धिं ददातु मे ॥ ७ ॥ क्षुत्पिपासामलां ज्येष्ठां अलक्ष्मीर्नाशयाम्यहम्। अभूतिमसमृद्धिञ्च सर्वां निर्णुद मे गृहात् ॥ ८ ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥ मनसः काममाकूतिं वाचः सत्यमशीमहि। पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १० ॥ कर्दमेन प्रजा भूता मयि सम्भव कर्दम। श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ ११ ॥ आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे। विच देवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥ आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम्। सूर्य्यां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥ १३ ॥ आर्द्रां पुष्करिणीं यष्टिं सुवर्णां हेममालिनीम्। चन्द्रां हिरण्मयीं लक्ष्मीं जात० ॥ १४ ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् ॥ १५ ॥ (ऋ० लक्ष्मीसूक्तम्)

अथ पावमानसूक्तम्। तच्च स्वादिष्ठयेति सूक्तमारभ्य हिन्वन्तीति सूक्तपर्य्यन्तम्। षट्षष्टिसूक्तात्मकस्य पावमानस्य मध्ये स्वादिष्ठयेति दशर्चस्य मधुच्छन्दा विश्वामित्रः, पवस्व देववीरित्यादिदशर्चस्य मेधातिथिः काण्वः, एष देव इत्यादिदशर्चस्य, शुनःशेफः, सना चेति दशर्चस्य, हिरण्यस्तूपः, समिद्ध इत्याद्येकादशर्चस्य काश्यपोऽसितो देवलो वा, मन्द्रयेत्यादिनवर्चस्यासितो देवलो वा, असृग्रमित्यादिनवर्चस्य देवलो वा काश्यपो वा, एते सोम इत्यादिनवर्चस्य, परिप्रिया इत्यादिनवर्चस्य, प्रस्वानास इत्यादिनवर्चस्य, उपास्मै इत्यादिनवर्चस्य, सोमा असृग्रमित्यादिनवर्चस्य, सोमः पुनान इत्यादिनवर्चस्य प्रनिम्नेनेवेत्याद्यष्टर्चस्य परिसुवान इत्यादि सप्तर्चस्य परि-

प्रासिष्यदित्याद्यष्टर्चस्य, एष धियेत्याद्यष्टर्चस्य, प्रते सोतार इत्याद्यष्टर्चस्य, यत् सोमेत्यादिसप्तर्चस्य, प्रकविरित्यादिसप्तर्चस्य, एते धावन्तीत्यादि सप्तर्चस्य, एते सोमास इत्यादिसप्तर्चस्य, सोमा असृग्रमित्यादिसप्तर्चस्य, प्रसोमास इत्यादि सप्तर्चस्य चैषां सूक्तानामसितो देवलो वा, पवस्व दक्षेत्यादिषड्टचस्य, दृढ़च्युत आगस्त्यः, तमस्मृचन्तेत्यादिषड्टचस्य, दार्ढ्यच्युतेध्मावहः, एष कविरित्यादिषड्टचस्य, नृमेधः, एष वाजीत्यादि षड्टचस्य प्रियमेधः, प्रास्य धारा इत्यादि षड्टचस्य नृमेधः, प्रधारा इत्यादि षड्टचस्य बिन्दुः, प्रसोमास इत्यादि षड्टचस्य गौतमः प्रसोमासो मदेत्यादि षड्टचस्य श्यावाश्वः, प्रसोमासो विपश्चित इत्यादि षड्टचस्य त्रितः, प्रसुघान इत्यादि षड्टचस्य, त्रितः, आ नः पवस्वेत्यादि षड्टचस्य प्रभूवसुः असर्जीत्यादि षड्टचस्य, ससुत इत्यादि षड्टचस्य, च रहूगणः, एष उस्वेत्यादि षड्टचस्य आशु-रर्षेत्यादि षड्टचस्य च बृहन्मतिः, पुनान इत्यादि षड्टचस्य, प्रये गाव इत्यादि षड्टचस्य, जनयन्नित्यादि षड्टचस्य च मेधातिथिः, योऽत्य इत्यादि षड्टचस्य, प्रण इन्द इत्यादि षड्टचस्यायास्यः, स पवस्वेत्यादिषड्टचस्य, असृग्रदेवेत्यादि षड्टचस्य अया सोमे इत्यादिपञ्चर्चस्य च भार्गवः कविः, तं त्वेत्यादिपञ्चर्चस्य पवस्व वृष्टिमित्यादिपञ्चर्चस्य च कविः, उत्ते शुष्मास इत्यादिपञ्चर्चस्य उतथ्य आङ्गिरसः अध्वर्यो इत्यादिपञ्चर्चस्य परिद्युक्ष इत्यादि-पञ्चर्चस्य चोतथ्यः उत्त इत्यादि चतुर्ऋचस्य, अस्य प्रत्न-मित्यादिचतुर्ऋचस्य, यवंयवमित्यादिचतुर्ऋचस्य चावत्सारः, परिसोम इत्यादिचतुर्ऋचस्यावत्सारः काश्यपः, प्र ते धारा इत्यादिचतुर्ऋचस्य तरत्समन्दीत्यादिचतुर्ऋचस्य पवस्वेत्यादि-चतुर्ऋचस्य प्रगायत्रेत्यादि चतुर्ऋचस्य चावत्सारः, अयावी-त्यादित्रिंशदृचस्य अमहीयुः, एते असृग्रमित्यादित्रिंशदृचस्य,

भार्गवो जामदग्निः, आ पवस्वेत्यादित्रिंशट्टचस्य निध्रुविः काश्यपः, वृषा सोमेत्यादित्रिंशट्टचस्य कश्यपः, हिन्वन्तीत्यादित्रिंशट्टचस्य भृगुर्वारुणिर्जमदग्निर्वा ऋषिः समिद्ध इत्याद्यष्टर्चसूक्ते अन्त्यत्रतसृणामनुष्टुप्, प्रगायतेत्यादिचतुर्ऋचे तृतीया उष्णिक्, तद्भिन्नसर्वसूक्तस्थितानां सर्वासां गायत्री छन्दः सर्वसूक्तस्थानां सर्वासां पवमानगुणविशिष्टः सोमो देवता तत्प्रीतये जपे वि० ।

ओं स्वादिष्ठया मदिष्ठया पवस्व सोमधारया। इन्द्राय पातवे सुतः ॥ १ ॥ रक्षोहा विश्वचर्षणिरभि योनिमयो हतम्। द्रुणा सधस्थमासदत् ॥ २ ॥ वरिवो धातमो भव मंहिष्ठो वृत्रहन्तमः। पर्षिराधो मघोनाम् ॥ ३ ॥ अभ्यर्ष महानां देवानां वीतिमन्धसा। अभिवाजमुतश्रवः ॥ ४ ॥ त्वामच्छा चरामसि तदिदर्थं दिवेदिवे। इन्दो त्वे आशसः ॥ ५ ॥ पुनाति ते परिस्रुतं सोमं सूर्य्यस्य दुहिता। वारेण शश्वता तना ॥ ६ ॥ तमीमण्वीः समय आ गृभ्णन्ति योषणो दश। स्वसारः पार्य्ये दिवि ॥ ७ ॥ तमीं हिन्वन्त्यग्रुवो धमन्ति बाकुरं दृतिम्। त्रिधा तु वारणं मधु ॥ ८ ॥ अभी ममघ्न्या उत श्रीणन्ति धेनवः शिशुम्। सोममिन्द्राय पातवे ॥ ९ ॥ अस्येदिन्द्रो मदेष्वा विश्वा वृत्राणि जिघ्नते। शूरो मघा च मंहते ॥ १० ॥ १सू०

पवस्व देव वीरति पवित्रं सोम रंह्या। इन्द्रमिन्दो वृषाविश ॥ १ ॥ आवच्यस्व महिप्सरो वृषेन्दो द्युम्नवत्तमः। आयोनिम्धर्णसिः सदः ॥ २ ॥ अधुक्षत प्रियं मधुधारा सुतस्या वेधसः। अपो वसिष्ठ सुक्रतुः ॥ ३ ॥ महान्तं त्वामहीरन्वापो अर्षन्ति सिन्धवः। यद्गोभिर्वासयिष्यसे ॥ ४ ॥ समुद्रो अप्सु मामृजे विष्टंभो धरुणो दिवः। सोमः पवित्रे अस्मयुः ॥ ५ ॥ अचिक्रदद्वृषा हरिर्महान् मित्रो न दर्शतः। संसूर्य्येण रोचते ॥६॥ गिरस्त इन्द्रओजसामर्म्मृज्यन्ते अपस्युवः। याभिर्मदाय

शुम्भसि ॥ ७ ॥ तं त्वामदाग्र घृष्वय उत्नोकक्रतुमीमहे। तव प्रशस्तयो महीः ॥८॥ अस्मभ्यमिन्दविन्द्रयुर्मध्वः पवस्व धारया। पर्जन्यो वृष्टिमाँ इव ॥ ९ ॥ गोषा इन्दो नृषा अस्यश्वसा वाजसा उत। आत्मा यज्ञस्य पूर्व्यः ॥ १० ॥ २सू०

एष देवो अमर्त्यः पर्णवीरिव दीयति। अभि द्रोणान्यासदम् ॥ १ ॥ एष देवो विगाकृतोऽतिह्वरांसि धावति। पवमानो अदाभ्यः ॥ २ ॥ एष देवो विपन्युभिः पवमान ऋतायुभिः। हरिर्वाजाय मृज्यते ॥ ३ ॥ एष विश्वानि वार्य्या शूरो यन्निव सत्वभिः। पवमानः सिषासति ॥ ४ ॥ एष देवो रथर्षति पवमानो दशस्यति। आविष्कृणोति वग्वनुम् ॥ ५ ॥ एष विप्रैरभिष्टुतो यो देवो विगाहते। दधद्रत्नानि दाशुषे ॥ ६ ॥ एष दिवं विधावति तिरो रजांसि धारया। पवमानः कनिक्रदत् ॥ ७ ॥ एष दिवं व्यासरत्तिरो रजांस्यतः। पवमानः स्वध्वरः ॥ ८ ॥ एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः। हरिः पवित्रे अर्षति ॥ ९ ॥ एष उस्य पुरुव्रतो जज्ञानो जनयन्निषः। धारया पवते सुतः ॥ १० ॥ ३सू०

सना च सोमजेषिच पवमान महिश्रवः। अथा नो वस्यसस्कृधि ॥ १ ॥ सना ज्योतिः सना स्वर्विश्वा च सोम सौभगा। अथा० ॥ २ ॥ सना दक्षमुत क्रतुमपसोममृधो जहि। अथा० ॥ ३ ॥ पवोतारः पुनीतन सोममिन्द्राय पातवे। अथा० ॥ ४ ॥ त्वं सूर्य्ये न आभज तव क्रत्वा तवोतिभिः। अथा० ॥ ५ ॥ तव क्रत्वा तवोतिभिर्ज्योक् पश्येम सूर्य्यम्। अथा० ॥ ६ ॥ अभ्यर्ष स्वायुध सोम द्विवर्हसं रयिम्। अथा० ॥ ७ ॥ अभ्यर्य्यानयच्युतो रयिं समत्सु सासहिः। अथा० ॥८॥ त्वां यज्ञैरवीवृधन् पवमान विधर्मणि। अथा० ॥ ९ ॥ रयिं नश्चित्रमश्विनमिन्दो विश्वायुमाभर। अथा० ॥ १० ॥ ४सू०

समिद्धो विश्वतस्पतिः पवमानो विराजति। प्रीणन् वृषा कनिक्रदत्॥ १॥ तनूनपात् पवमानः शृङ्गे शिशानो अर्षति। अन्तरिक्षेण रारजत्॥ २॥ ईलेऽन्यः पवमानो रयिर्विराजति द्युमान्। मधोर्धाराभिरोजसा॥ ३॥ बर्हिः प्राचीनमोजसा पवमानः स्तृणन् हरिः। देवेषु देव ईयते॥ ४॥ उदातैर्जिहते बृहद्द्वारो देवीर्हिरण्ययीः। पवमानेन सुष्टुताः॥ ५॥ सुशिल्पे बृहती मही पवमानो वृषण्यति। नक्तोषा सा न दर्शते॥ ६॥ उभा देवा नृचक्षसा होतारा दैव्याहुवे। पवमान इन्द्रो वृषा॥ ७॥ भारती पवमानस्य सरस्वतीडा मही। इमं नो यज्ञमागमन्तिस्रो देवीः सुपेशसः॥ ८॥ त्वष्टारमग्रजां गोपां पुरो यावानमाहुवे। इन्दुरिन्द्रो वृषा हरिः पवमानः प्रजापतिः॥ ९॥ वनस्पतिं पवमानमध्वा समङ्क्ति धारया। सहस्रवत्सं हरितं भ्राजमानं हिरण्ययम्॥ १०॥ विश्वे देवाः स्वाहाकृतिं पवमानस्यागत। वायुर्बृहस्पतिः सूर्य्योऽग्निरिन्द्रः सजोषसः॥ ११॥ ५सू०

मन्द्रया सोमधारया वृषा पवस्व देवयुः। अव्यो वारेष्वस्मयुः॥ १॥ अभि त्यं मद्यं मदमिन्दविन्द्र इति क्षर। अभिवाजिनो अर्वतः॥ २॥ अभि त्यं पूर्व्यं मदं सुवानो अर्ष पवित्र आ। अभिवाजमुतश्रवः॥ ३॥ अनुद्रप्सास इन्दव आपो न प्रवतासरन्। पुनाना इन्द्रमाशत॥ ४॥ यमत्यमिव वाजिनं मृजन्ति योषणो दश। वने क्रीड़न्तमत्यविम्॥ ५॥ तं गोभिर्वृषणं रसं मदाय देव वीतये। सुतं भराय संसृज॥ ६॥ देवो देवाय धारयेन्द्राय पवते सुतः। पयो यदस्य पीपयत्॥७॥ आत्मा यज्ञस्य रंह्या सुष्वाणः पवते सुतः। प्रत्नं निपाति काव्यम्॥ ८॥ एवापुनान इन्द्रयुर्मदं मदिष्ठ वीतये। गुहाचिद्दधिषे गिरः॥ ९॥ ६सू०

असृग्रमिन्दवः पथा धर्मन्नृतस्य सुश्रियः। विदाना अस्य योजनम् ॥ १ ॥ प्रधारा मध्वो अग्रियो महीरपो विगाहते। हविर्हविष्षु वन्द्यः ॥ २ ॥ प्रयुजो वाचो अग्नियो वृषाय चक्रदद्वने। सद्माभिसत्यो अध्वरः ॥ ३ ॥ परिषत्काव्या कविर्नृम्णावसानो अर्षति। स्वर्वाजी सिषासति ॥ ४ ॥ पवमानो अभिस्पृधो विशो राजेव सीदति। यदीमृण्वन्ति वेधसः ॥ ५ ॥ अव्यो वारे परिप्रियो हरिर्वनेषु सीदति। रेभो वनुष्यते मती ॥ ६ ॥ सवायुमिन्द्रमश्विना साकं मदेन गच्छति। रणायो अस्य धर्मभिः ॥ ७ ॥ आमित्रावरुणा भगं मध्वः पवन्तः ऊर्मयः। विदाना अस्य शक्मभिः ॥ ८ ॥ अस्मभ्यं रोदसी रयिं मध्वो वाजस्य सातये। अवो वसूनि सञ्जितम् ॥ ९ ॥ ७सू०

एते सोमा अभिप्रियमिन्द्रस्य काममक्षरन्। वर्द्धन्तो अस्य वीर्य्यम् ॥ १ ॥ पुनानासश्चमूषदो गच्छन्तो वायुमश्विना। तेनोधां तु सुवीर्य्यम् ॥ २ ॥ इन्द्रस्य सोमराधसे पुनानो हार्दि चोदय। ऋतस्य योनिमासदम् ॥ ३ ॥ मृजन्ति त्वादश क्षिपो हिन्वन्ति सप्तधीतयः। अनुविप्रा अमादिषुः ॥ ४ ॥ देवेभ्यस्त्वामदायकं सृजानमतिमेष्यः। संगोभिर्वासयमसि ॥ ५ ॥ पुनानः कलशेष्वावस्त्राण्यरुषो हरिः। परि गव्यान्यव्यात ॥ ६ ॥ मघोन आपवस्व नो जहि विश्वा अपद्विषः। इन्दो सखायमाविश ॥ ७ ॥ वृष्टिं दिवः परिस्रवद्युम्नं पृथिव्या अधि। सहो नः सोमपृत् सुधाः ॥ ८ ॥ नृचक्षसं त्वा वयमिन्द्र पीतं स्वर्विदम्। भक्षीमहि प्रजामिषम् ॥ ९ ॥ ८ सू०

परिप्रिया दिवः कविर्वयांसि नप्त्योर्हितः। सुवानो याति कविक्रतुः ॥ १ ॥ प्रप्रक्षयाय पन्यसे जनाय जुष्टो अद्रुहे। वीत्यर्ष च निष्ठया ॥ २ ॥ ससूनुर्मातरा शुचिर्जातो जाते अरोचयत्। महान्मही ऋतावृधा ॥ ३ ॥ स सप्तधीतिभिर्हितो

ऽद्यो अजिन्वदद्रुहः। या एकमक्षि वावृधुः ॥ ४ ॥ ता अभि-
सन्तमस्तृतं महे युवानमादधुः। इन्दुमिन्द्र तव व्रते ॥ ५ ॥
अभिवह्निरमर्त्यः सप्त पश्यति वा वहिः। क्रिविर्देवीरतर्प-
यत् ॥ ६ ॥ अवा कल्पेषु नः पुमस्तमांसि सोमयोध्या। तानि
पुनान जङ्घनः ॥ ७ ॥ नूनव्यसेन वीयसे सूक्ताय साधयापथः।
प्रत्नवद्रोचया रुचः ॥ ८ ॥ पवमान महिश्रवो गामश्वं रासि
वीरवत्। सना मेधांसना स्वः ॥ ९ ॥ ९सू०

प्रस्वानासो रथा इवार्वन्तो न श्रवस्यवः। सोमासो राये
अक्रमुः ॥ १ ॥ हिन्वानासो रथा इव दधन्विरे गभस्त्योः।
भरासः कारिणामिव ॥ २॥ राजानो न प्रशस्तिभिः सोमासो
गोभिरञ्जते। यज्ञो न सप्तधातृभिः ॥ ३ ॥ परिसुवानास इन्दवो
मदाय बर्हणा गिरा। सुता अर्षन्ति धारया ॥ ४ ॥ आपानासो
विवस्वतो जनन्त उषसो भगम्। सूरा अण्वन्ति तन्वते ॥ ५ ॥
अपद्वारामतीनां प्रत्ना ऋण्वन्ति कारवः। वृष्णो हरस
आयवः ॥ ६ ॥ समीचीनास आसते होतारः सप्त जामयः।
पदमेकस्य पिप्रतः ॥ ७ ॥ नाभानाभिं न आददे चक्षुश्चित्
सूर्ये सचा। कवेरपत्यमादुहे ॥ ८ ॥ अभिप्रिया दिवस्पद-
मध्वर्युभिर्गुहाहितम्। सूरः पश्यति चक्षसा ॥ ९ ॥ १०सू०

उपास्मै गायता नरः पवमानायेन्दवे। अभिदेवां इय-
क्षते ॥ १ ॥ अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः। देवं
देवाय देवयुः ॥ २ ॥ स नः पवस्व शंगवे शञ्जनाय शमर्वते।
शं राजन्नोषधीभ्यः ॥ ३ ॥ बभ्रवे नु स्वतवसेऽरुणाय दिविस्पृशे।
सोमाय गाथमर्चत ॥ ४ ॥ हस्तच्युतेभिरद्रिभिः सुतं सोमं पुनी-
तन। मधावा धावता मधु ॥ ५ ॥ नमसेदुप सीदत दध्नेदभि-
श्रीणीतन। इन्दुमिन्द्रे दधातन ॥ ६ ॥ अमित्रहा विचर्षणिः
पवस्व सोम शंगवे। देवेभ्यो अनुकामकृत् ॥ ७ ॥ इन्द्राय सोम-

पातवे मदाय परिषिच्यसे। मनश्चिन्मनसस्पतिः॥ ८॥ पव-
मान सुवीर्य्यं रयिं सोम रिरीहि नः। इन्दविन्द्रेण नो
युजा॥ ९॥ ११सू०

सोमा असृग्रमिन्दवः सुता ऋतस्य सादने। इन्द्राय मधु-
मत्तमाः॥ १॥ अभिविप्रा अनूषत गावो वत्सं न मातरः।
इन्द्रं सोमस्य पीतये॥ २॥ मदच्युत् क्षेति सादने सिन्धोरूर्मा
विपश्चित्। सोमो गौरी अधिश्रितः॥ ३॥ दिवो नाभा विच-
क्षणोऽव्यो वारे महीयते। सोमो यः सुक्रतुः कविः॥ ४॥ यः
सोमः कलशेष्वास अन्तः पवित्र आहितः। तमिन्दुः परि-
षस्वजे॥ ५॥ प्रवाचमिन्दुरिष्यति समुद्रस्याधिविष्टपि। जिन्वन्
कोशं मधुश्चुतम्॥ ६॥ नित्यस्तोत्रो वनस्पतिर्धेनामन्तः सब-
र्दुघः। हिन्वानो मानुषा युगा॥ ७॥ अभिप्रिया दिवस्पदा
सोमो हिन्वानो अर्षति। विप्रस्य धारया कविः॥ ८॥
आपवमान धारय रयिं सहस्रवर्चसम्। अस्मे इन्द्रो स्वाभु-
वम्॥ ९॥ १२सू०

सोमः पुनानो अर्षति सहस्रधारो अत्यविः। वायोरिन्द्रस्य
निष्कृतम्॥ १॥ पवमानमवस्यवो विप्रमभि प्रगायत। सुष्वाणं
देववीतये॥ २॥ पवन्ते वाजसातये सोमाः सहस्रपाजसः।
गृणाना देववीतये॥ ३॥ उत नो वाजसातये पवस्व बृहती-
रिषः। द्युमदिन्दो सुवीर्य्यम्॥ ४॥ ते नः सहस्रिणं रयिं पवन्ता-
मासुवीर्य्यम्। सुवाना देवास इन्दवः॥ ५॥ अत्याहि यानान-
हेतृभिरसृग्रं वाजसातये। विवारमव्यमाशवः॥ ६॥ वाश्रा
अर्षन्तीन्दवोऽभिवत्सं न धेनवः। दधन्विरे गभस्त्योः॥ ७॥
जुष्ट इन्द्राय मत्सरः पवमान कनिक्रदत्। विश्वा अपद्विषो
जहि॥ ८॥ अपघ्नन्तो अराव्णः पवमानाः स्वर्दृशः। योना-
वृतस्य सीदत॥ ९॥ १३सू०

परिप्रासिष्यदत् कविः सिन्धोरूर्मावधिश्रितः। कारं बिभ्रत् पुरुस्पृहम्॥ १॥ गिरा यदीं सबन्धवः पञ्च व्राता अपस्यवः। परिष्कृण्वन्ति धर्णसिम्॥ २॥ आदस्य शुष्मिणो रसे विश्वे देवा अमत्सत। यदी गोभिर्वसायते॥ ३॥ निरिणानो विधावति जहच्छर्य्याणि तान्वा। अत्रासं जिघ्नते युजा॥ ४॥ नप्तीभिर्यो विवस्वतः शुभ्रो न मामृजे युवा। गाः कृण्वानो न निर्णिजम्॥ ५॥ अति श्रिती तिरश्चता गव्याजिगात्यण्व्या। वग्नुमियर्त्ति यं विदे॥ ६॥ अभि क्षिपः समग्मत मर्जयन्तीरिषस्पतिम्। पृष्ठा गृभ्णत वाजिनः॥ ७॥ परिदिव्यानि मर्मृशद्विश्वानि सोमपार्थिवा। वसूनि याह्यस्मयुः॥ ८॥ १४सू०

एष धिया यात्यण्व्या शूरो रथेभिराशुभिः। गच्छन्निन्द्रस्य निष्कृतम्॥ १॥ एष पुरूधि यायते बृहते देवतातये। यत्रामृतास आसते॥ २॥ एष हितो विनीयतेऽन्तः शुभ्रा वता पथा। यदी तुञ्जन्ति भूर्णयः॥ ३॥ एष शृङ्गाणि दोधुवच्छिशीते यूथ्यो वृषा। नृम्णा दधान ओजसा॥ ४॥ एष रुक्मिभिरीयते वाजी शुभ्रेभिरंशुभिः। पतिः सिन्धूनां भवन्॥ ५॥ एष वसूनि पिब्दना परुषा ययिवाँ अति। अवशादेषु गच्छति॥ ६॥ एतं मृजन्ति मर्ज्यमुपद्रोणेष्वायवः। प्रचक्राणं महीरिषः॥ ७॥ एतमुत्यं दश क्षिपो मृजन्ति सप्त धीतयः। स्वायुधं मदिन्तमम्॥ ८॥ १५सू०

प्र ते सोतार ओण्यो रसं मदाय घृष्वये। सर्गो न तक्त्येतशः॥ १॥ क्रत्वा दक्षस्य रथ्यमपो वसानमन्धसा। गोषामण्वेषु सश्चिम॥ २॥ अनप्तमप्सु दुष्टरं सोमं पवित्र आसृज। पुनीहीन्द्राय पातवे॥ ३॥ प्रपुनानस्य चेतसा सोमः पवित्रे अर्षति। क्रत्वा सधस्थमासदत्॥ ४॥ प्रत्वा नमोभिरिन्दव इन्द्र सोमा असृक्षत। महे भराय कारिणः॥ ५॥ पुनानो रूपे अव्यये

विश्वा अर्यन्नभिश्रियः । शूरो न गोषु तिष्ठति ॥ ६ ॥ दिवो न सानुपिप्युषी धारा सुतस्य वेधसः । वृथा पवित्रे अर्षति ॥ ७ ॥ त्वं सोम विपश्चितं तना पुनान आयुषु । अव्यो वारं विधावसि ॥ ८ ॥ १६सू०

प्रनिम्नेनेव सिन्धवो घ्नन्तो वृत्राणि भूर्णयः । सोमा असृग्रमाशवः ॥ १ ॥ अभिसुवानास इन्दवो वृष्टयः पृथिवीमिव । इन्द्रं सोमासो अक्षरन् ॥ २ ॥ अत्यूर्मिर्मत्सरो मदः सोमः पवित्रे अर्षति । विघ्नन्रक्षांसि देवयुः ॥ ३ ॥ आकलशेषु धावति पवित्रे परिषिच्यते । उक्थैर्यज्ञेषु वर्द्धते ॥ ४ ॥ अति त्री सोम रोचना रोहन्न भ्राजसे दिवम् । इष्णन्त्सूर्यं न चोदयः ॥ ५ ॥ अभिविप्रा अनूषत मूर्द्धन्यज्ञस्य कारवः । दधानाश्चक्षसि प्रियम् ॥ ६ ॥ तमुत्वा वाजिनं नरोधीभिर्विप्रा अवस्यवः । मृजन्ति देवतातये ॥ ७ ॥ मधोर्धारा मनुक्षरं तीव्रः सधस्थमासदः । चारुर्ऋताय पीतये ॥ ८ ॥ १७सू०

परिसुवानो गिरिष्ठाः पवित्रे सोमो अक्षाः । मदेषु सर्वधा असि ॥ १ ॥ त्वं विप्रस्त्वं कविर्मधु प्रजातमन्धसः । मदेषु सर्वधा असि ॥ २ ॥ तव विश्वे सजोषसो देवासः पीतिमाशत । मदेषु सर्वधा असि ॥ ३ ॥ आयो विश्वानि वार्या वसूनि हस्तयोर्दधे । मदेषु सर्वधा असि ॥ ४ ॥ य इमे रोदसी मही संमातरेव दोहते । मदेषु सर्वधा असि ॥ ५ ॥ परि यो रोदसी उभे सद्यो वाजेभिरर्षति । मदेषु सर्वधा असि ॥ ६ ॥ स शुष्मी कलशेष्वापुनानो अचिक्रदत् । मदेषु सर्वधा असि ॥८॥ १८सू०

यत् सोम चित्रमुक्थ्यं दिव्यं पार्थिवं वसु । तन्नः पुनान आभर ॥ १ ॥ युवं हि स्थः स्वर्पती इन्द्रश्च सोमगोपती । ईशाना पिप्यतं धियः ॥ २ ॥ वृषा पुनान आयुषु स्तनयन्नधि बर्हिषि । हरिः सन् योनिमासदत् ॥ ३ ॥ अवावशन्त धीतयो वृषभस्या-

धिरेतसि। सूनोर्वत्सस्य मातरः॥ ४॥ कुविद्वृषण्यन्तीभ्यः पुनानो गर्भमादधत्। याः शुक्रं दुहते पयः॥ ५॥ उपशिक्षाय तस्थुषो भियः समाधेहि शत्रुषु। पवमान विदा रयिम्॥ ६॥ नि शत्रोः सोम वृष्ण्यं नि शुष्मं नि वयस्तिर। दूरे वा सतो अन्ति वा॥ ७॥ १९ सू०

प्रकविर्देववीतयेऽव्यो वारेभिरर्षति। साह्वान्विश्वा अभिस्पृधः॥ १॥ सहिषा वा जरितृभ्य आवाजं गोमन्तमिन्वति। पवमानः सहस्रिणम्॥ २॥ परिविश्वानि चेतसा मृशसे पवसे मती। स नः सोमश्रवो विदः॥ ३॥ अभ्यर्ष बृहद्यशो मघवद्भ्यो ध्रुवं रयिम्। इषं स्तोतृभ्य आभर॥ ४॥ त्वं राजेव सुव्रतो गिरः सोमा विवेशिथ। पुनानो वह्ने अद्भुत॥ ५॥ स वह्निरप्सु दुष्टरो मृज्यमानो गभस्त्योः। सोमश्चमूषु सीदति॥ ६॥ क्रीळुर्मखो नमंहयु पवित्रं सोम गच्छसि। दधत् स्तोत्रे सुवीर्यम्॥ ७॥ २० सू०

एते धावन्तीन्दवः सोमा इन्द्राय घृष्वयः। मत्सरासः स्वर्विदः॥ १॥ प्रवृण्वन्तो अभियुजः सुष्वये वरिवोविदः। स्वयं स्तोत्रे वयस्कृतः॥ २॥ वृथा क्रीळन्त इन्दवः सधस्थमभ्येकमित्। सिन्धोरूर्मा व्यक्षरन्॥ ३॥ एते विश्वा निवार्या पवमानास आशत। हिता न सप्तयो रथे॥ ४॥ अस्मिन् पिशङ्गमिन्दवो दधाता वेनमादिशे। यो अस्मभ्यमरावा॥ ५॥ ऋभुर्नरथ्यं नवं दधाता केतमादिशे। शुक्राः पवध्वमर्णसा॥ ६॥ एत उत्ये अवीवशन् काष्ठां वाजिनो अक्रत। सतः प्रासाविषुर्मतिम्॥ ७॥ २१ सू०

एते सोमास आशवो रथा इव प्रवाजिनः। सर्गाः सृष्टा अहेषत॥ १॥ एते वाता इवोरवः पर्जन्यस्येव वृष्टयः। अग्नेरिव भ्रमा वृथा॥ २॥ एते पूता विपश्चितः सोमासो दध्या-

शिरः । विपाव्यानशुर्धियः ॥ ३ ॥ एते सृष्टा अमर्त्याः सस्ववांसो न शश्रमुः । इयक्षन्तः पथो रजः ॥ ४ ॥ एते पृष्टानि रोदसो विप्रयन्तो व्यानशः । उतेदमुत्तमं रजः ॥ ५ ॥ तन्तुं तन्वानमुत्तममनुप्रवत आशत । उतेदमुत्तमाय्यम् ॥ ६ ॥ त्वं सोमपणिभ्य आवसुगव्यानि धारयः । ततं तन्तुमचिक्रदः ॥ ७ ॥ २२ सू०

सोमा असृग्रमाशवो मधोर्मदस्य धारया । अभिविश्वानि काव्या ॥ १ ॥ अनुप्रत्नास आयवः पदं नवीयो अक्रमुः । रुचे जनन्त सूर्य्यम् ॥ २ ॥ आपवमान नो भराय्र्यो अदा शुषो गयम् । कृधि प्रजावतीरिषः ॥ ३ ॥ अभिसोमास आयवः पवन्ते मद्यं मदम् । अभिकोशं मधुश्रुतम् ॥ ४ ॥ सोमो अर्षति धर्णसिर्दधान इन्द्रियं रसम् । सुवीरे अभिशस्ति पाः ॥ ५ ॥ इन्द्राय सोम पवसे देवेभ्यः सधमाद्यः । इन्दो वाजं सिषाससि ॥ ६ ॥ अस्य पीत्वा मदानामिन्द्रो वृत्राण्यप्रति । जघान जघनच्च नु ॥ ७ ॥ २३ सू०

प्रसोमासो अधन्विषुः पवमानास इन्दवः । श्रीणाना अप्सु मृञ्जत ॥ १ ॥ अभिगावो अधन्विषुरापो न प्रवतायतीः । पुनाना इन्द्रमाशत ॥ २ ॥ प्रपवमान धन्वसि सोमेन्द्राय पातवे । नृभिर्यतो विनीयसे ॥ ३ ॥ त्वं सोम नृमादनः पवस्व चर्षणी सहे । सस्निर्यो अनुमाद्यः ॥ ४ ॥ इन्दो यदद्रिभिः सुतः पवित्रं परिधावसि । अरमिन्द्रस्य धाम्ने ॥ ५ ॥ पवस्व वृत्रहन्तमोक्थेभिरनुमाद्यः । शुचिः पावको अद्भुतः ॥ ६ ॥ शुचिः पावक उच्यते सोमः सुतस्य मध्वः । देवावीरघशंसहा ॥ ७ ॥ २४ सू०

पवस्व दक्षसाधनो देवेभ्यः पीतये हरे । मरुद्भ्यो वायवे मदः ॥ १ ॥ पवमान धिया हितोऽभियोनिं कनिक्रदत् । धर्मणा वायुमाविश ॥ २ ॥ सन्देवैः शोभते वृषा कवियोनावधिप्रियः । वृत्रहा देववीतमः ॥ ३ ॥ विश्वारूपाण्याविशन् पुनानो याति

हर्यतः। यत्रा मृतास आसते ॥४॥ अरुषो जनयन् गिरः सोमः पवत आयुषक्। इन्द्रं गच्छन् कविक्रतुः ॥ ५ ॥ आपवस्व मदिन्तम पवित्रं धारया कवे अर्कस्य योनिमासदन् ॥ ६ ॥

२५ सू०

तमम्टक्षन्त वाजिनमुपस्थे अदितेरधि। विप्रासो अण्व्या धिया ॥ १ ॥ तं गावो अभ्यनूषत सहस्रधारमक्षितम्। इन्दुं धर्त्तारमादिवः ॥ २ ॥ तं वेधां मेधयाऽह्यन पवमानमधिद्यवि। धर्णसिं भुरिधायसम् ॥ ३ ॥ तमह्यन् भुरिजोर्द्धिया संवसानं विवस्वतः। पतिं वाचो अदाभ्यम् ॥ ४ ॥ तं सानावधिजामयो हरिं हिन्वन्त्यद्रिभिः। हर्यतं भूरिचक्षसम् ॥ ५ ॥ तं त्वा हिन्वन्ति वेधसः पवमान गिरावृधम्। इन्दविन्द्राय मत्सरम् ॥ ६ ॥

२६ सू०

एष कविरभिष्टुतः पवित्रे अधि तोशते। पुनानो घ्नन्नप-स्रिधः ॥ १ ॥ एष इन्द्राय वायवे स्वर्जित् परिषिच्यते। पवित्रे दक्षसाधनः ॥ २ ॥ एष नृभिर्विनीयते दिवो मूर्द्धा वृषा सुतः। सोमो वनेषु विश्ववित् ॥ ३ ॥ एष गव्युरचिक्रदत् पवमानो हिरण्ययुः। इन्दुः सत्राजिदस्तृतः ॥ ४ ॥ एष सूर्य्येण हासते पवमानो अधिद्यवि। पवित्रे मत्सरो मदः ॥ ५ ॥ एष शुष्म्य-सिष्यददन्तरिक्षे वृषा हरिः। पुनान इन्दुरिन्द्रमा ॥ ६ ॥

२७ सू०

एष वाजी हितो नृभिर्विश्वविन्मनसस्पतिः। अव्योवारं विधावति ॥ १ ॥ एष पवित्रे अक्षरत् सोमो देवेभ्यः सुतः। विश्वाधामान्याविशत् ॥ २ ॥ एष देवः शुभायते धियो नाव-मर्त्त्यः। वृत्रहा देववीतमः ॥ ३ ॥ एष वृषा कनिक्रदद्दशभि-र्जामिभिर्यतः। अभिद्रोणानि धावति ॥ ४ ॥ एष सूर्य्यमरोचयत् पवमानो विचर्षणिः। विश्वाधामानि विश्ववित् ॥ ५ ॥ एष

शुष्मराद्यध्यः सोमः पुनानो अर्षति। देवावीरघशंसहा॥ ६॥
२८ सू०

प्रास्य धारा अक्षरन् वृष्णः सुतस्यौजसा। देवाँ अनुप्रभूषतः॥ १॥ सप्तिं मृजन्ति वेधसो गृणन्तःकारवो गिरा। ज्योतिर्जज्ञानमुक्थ्यम्॥ २॥ सुषहा सोम तानि ते पुनानाय प्रभूवसो। वर्द्धा समुद्रमुक्थ्यम्॥ ३॥ विश्वा वसूनि संजयन् पवस्व सोम धारया। इनुद्वेषांसि सध्र्यक्॥ ४॥ रक्षासुनो अररुषः स्वनात् समस्य कस्यचित्। निदो यत्र मुमुच्महे॥ ५॥ एन्दो पार्थिवं रयिं दिव्यं पवस्व धारया। द्युमन्तं शुष्ममाभर॥ ६॥ २९ सू०

प्रधारा अस्य शुष्मिणो वृथा पवित्रे अक्षरन्। पुनानो वाचमिष्यति॥ १॥ इन्दुर्हियानः सोतृभिर्मृज्यमानः कनिक्रदत्। इयर्त्ति वग्नुमिन्द्रियम्॥ २॥ आनः शुष्मं नृषाह्यं वीरवन्तं पुरुस्पृहम्। पवस्व सोम धारया॥ ३॥ प्रसोमो अतिधारया पवमानो असिष्यदत्। अभिद्रोणान्यासदम्॥ ४॥ अप्सु त्वा मधुमत्तमं हरिं हिन्वन्त्यद्रिभिः। इन्दविन्द्राय पीतये॥ ५॥ सुनोता मधुमत्तमं सोममिन्द्राय वज्रिणे। चारुं शर्द्धाय मत्सरम्॥ ६॥ ३० सू०

प्रसोमासः स्वाध्यः पवमानासो अक्रमुः। रयिं कृण्वन्ति चेतनम्॥ १॥ दिवस्पृथिव्या अधिभवेन्दो द्युम्नवर्द्धनः। भवा वाजानां पतिः॥ २॥ तुभ्यं वाता अभिप्रियस्तुभ्यमर्षन्ति सिन्धवः। सोम वर्द्धन्ति ते महः॥ ३॥ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य सङ्गथे॥ ४॥ तुभ्यं गावो घृतं पयो बभ्रो दुदुह्रे अक्षितम्। वर्षिष्ठे अधिसानवि॥ ५॥ स्वायुधस्य ते सतो भुवनस्य पते वयम्। इन्दो सखित्वमुश्मसि॥ ६॥ ३१ सूक्तम्

प्रसोमासो मदच्युतः श्रवसे नो मघोनः। सुता विदथे अक्रमुः ॥ १ ॥ आदीन्त्रितस्य योषणो हरिं हिन्वन्त्यद्रिभिः। इन्दुमिन्द्राय पीतये ॥ २ ॥ आदीं हंसो यथा गणं विश्वस्यावीवशन्मतिम्। अत्यो न गोभिरज्यते ॥ ३ ॥ उभे सोमावचाकशन् मृगे न तक्तो अर्षसि। सीदन्नृतस्य योनिमा ॥ ४ ॥ अभिगावो अनूषत योषा जारमिव प्रियम्। अगन्नाजिं यथाहितम् ॥ ५ ॥ अस्मे धेहि द्युमद्यशो मघवद्भ्यश्च मह्यं च। सनिं मेधामुतश्रवः ॥ ६ ॥ ३२ सूक्तम्।

प्रसोमासो विपश्चितोपानयन्त्यूर्मयः। वनानि महिषा इव ॥ १ ॥ अभिद्रोणानि बभ्रवः शुक्रा ऋतस्य धारया। वाजं गोमन्तमक्षरन् ॥ २ ॥ सुता इन्द्राय वायवे वरुणाय मरुद्भ्यः। सोमा अर्षन्ति विष्णवे ॥ ३ ॥ तिस्रो वाच उदीरते गावो मिमन्ति धेनवः। हरिरेति कनिक्रदत् ॥ ४ ॥ अभिब्रह्मीरनूषत यह्वीरृतस्य मातरः। मर्मृज्यन्ते दिवः शिशुम् ॥ ५ ॥ रायः समुद्रांश्चतुरोऽस्मभ्यं सोम विश्वतः। आपवस्व सहस्रिणः ॥ ६ ॥ ३३ सूक्तम्

प्रसुवानो धारया तनेन्दुर्हिन्वानो अर्षति। रुजद्दृढाव्योजसा ॥ १ ॥ सुत इन्द्राय वायवे वरुणाय मरुद्भ्यः। सोमो अर्षति विष्णवे ॥२॥ वृषाणं वृषभिर्यतं सुन्वन्ति सोममद्रिभिः। दुहन्ति शक्मना पयः ॥ ३॥ भुवत्त्रितस्य मर्ज्यो भुवदिन्द्राय मत्सरः। संरूपैरज्यते हरिः ॥ ४ ॥ अभीमृतस्य विष्टपं दुहते पृश्निमातरः। चारु प्रियतमं हविः ॥ ५ ॥ समेनमह्रुता इमा गिरो अर्षन्ति सस्रुतः। धेनूर्वाश्रो अवीवशत् ॥ ६ ॥ ३४ सूक्तम्।

आ नः पवस्व धारया पवमान रयिं पृथुम्। यया ज्योतिर्विदासि नः ॥ १ ॥ इन्दो समुद्रमीङ्खय पवस्व विश्वमेजय।

रायो धर्त्ता न ओजसा ॥ २ ॥ त्वया वीरेण वीरवोऽभिष्याम पृतन्यतः क्षराणो अभिवार्य्यम् ॥ ३ ॥ प्रवाजमिन्दुरिष्यति सिषासन्वाजसा ऋषिः । व्रता विदान आयुधा ॥ ४ ॥ तन्नो-भिर्वाचमीङ्खयं पुनानं वासयामसि। सोमं जनस्य गोपतिम् ॥५॥ विश्वो यस्य व्रते जनो दाधार धर्मणस्पतेः । पुनानस्य प्रभू-वसोः ॥ ६ ॥ २५ सूक्तम् ।

असर्जि रथ्यो यथा पवित्रे चम्वोः सुतः । कार्ष्मन् वाजीन्य-क्रमीत् ॥१॥ स वह्निः सोम जागृविः पवस्व देववीरति । अभि-कोशं मधुश्चुतम् ॥ २ ॥ स नो ज्योतींषि पूर्व्य पवमान विरोचय। क्रत्वे दक्षाय नो हिनु ॥ ३ ॥ शुम्भमान ऋतायुभिर्मृज्यमानो गभस्त्योः । पवते वारे अव्यये ॥ ४ ॥ स विश्वादाशुषे वसु सोमो दिव्यानि पार्थिवा । पवतामान्तरिक्ष्या ॥ ५ ॥ आदिवस्पृष्ट-मश्वयुर्गव्ययुः सोम रोहसि । वीरयुः शवसस्पते ॥६॥ २६ सूक्तम् ।

ससुतः पीतये वृषा सोमः पवित्रे अर्षति । विघ्नन्रक्षांसि देवयुः ॥ १ ॥ स पवित्रे विचक्षणे हरिरर्षति धर्णसिः । अभि-योनिं कनिक्रदत् ॥२॥ स वाजी रोचना दिवः पवमानो विधा-वति । रक्षोहा वारमव्ययम् ॥ ३ ॥ सत्रितस्याधिसानवि पव-मानो अरोचयत् । जामिभिः सूर्य्यं सह ॥ ४ ॥ स वृत्रहा वृषा सुतो वरिवो विददाभ्यः । सोमो वाजमिवासरत् ॥ ५ ॥ स देवः कविनेषितोऽभिद्रोणानि धावति । इन्दुरिन्द्राय मंहन ॥ ६ ॥ २७सू०

एष उस्य वृषा रथोऽव्योवारेभिरर्षति । गच्छन् वाजं सह-स्रिणम् ॥ १ ॥ एतं त्रितस्य योषणो हरिं हिन्वन्त्यद्रिभिः । इन्दुमिन्द्राय पीतये ॥ २ ॥ एतं त्यं हरितो दशमर्मृज्यन्ते अप-स्युवः । याभिर्मदाय शुम्भते ॥ ३ ॥ एषस्य मानुषीष्वाश्येनो नविक्ष सीदति । गच्छन् जारो न योषितम् ॥ ४ ॥ एषस्य

मद्यो रसो वचष्टे दिवः शिशुः। य इन्दुर्वारमाविशत् ॥ ५ ॥ एषस्य पीतये सुतो हरिरर्षति धर्णसिः। क्रन्दन् योनिमभिप्रियाम् ॥ ६ ॥ ३८सूक्तम्।

आशुरर्षं बृहन्मते परिप्रियेण धाम्ना। यत्र देवा इति ब्रुवन् ॥ १ ॥ परिष्कृण्वन्ननिष्कृतं जनाय यातयन्निषः। वृष्टिं दिवः परिस्रव ॥ २ ॥ सुत एति पवित्र आ त्विषिं दधान ओजसा। विचक्षाणो विरोचयन् ॥ ३ ॥ अयं स यो दिवस्परि रघुयामापवित्र आ। सिन्धो रूर्मा व्यक्षरत् ॥ ४ ॥ आविवासन् परावतोऽथो अर्वावतः सुतः। इन्द्राय सिच्यते मधु ॥ ५ ॥ समीचीना अनूषत हरिं हिन्वन्त्यद्रिभिः। योनावृतस्य सीदत ॥ ६ ॥ ३९सूक्तम्।

पुनानो अक्रमीदभिविश्वामृधो विचार्षणिः। शुम्भन्ति विप्रं धीतिभिः ॥ १ ॥ आयोनिमरुणोरुहद्गमदिन्द्र वृषा सुतः। ध्रुवे सदसि सीदति ॥ २ ॥ नूनो रयिं महामिन्दोऽस्मभ्यं सोम विश्वतः। आपवस्व सहस्रिणम् ॥ ३ ॥ विश्वा सोम पवमान द्युम्नानीन्दवाभर। विदाः सहस्रिणीरिषः ॥ ४ ॥ स नः पुनान आभर रयिं स्तोत्रे सुवीर्य्यम्। जरितुर्वर्द्धया गिरः ॥ ५ ॥ पुनान इन्दवाभर सोम द्विबर्हसं रयिम्। वृषन्निन्दो न उक्थ्यम् ॥ ६ ॥ ४०सूक्तम्।

प्रये गावो न भूर्णयस्त्वेषा अयासो अक्रमुः। घ्नन्तः कृष्णामपत्वचम् ॥१॥ सुवितस्य मनामहेऽतिसेतुं दुराव्यम्। साह्वांसो दस्युमव्रतम्॥२॥ शृण्वे वृष्टेरिव स्वनः पवमानस्य शुष्मिणः। चरन्ति विद्युतो दिवि॥३॥ आपवस्व महीमिषं गोमदिन्दो हिरण्यवत्। अश्वावद्वाजवत् सुतः ॥ ४ ॥ स पवस्व विचर्षण आमही रोदसी पृण। उषाः सूर्यो न रश्मिभिः ॥ ५ ॥ परि णः शर्मयन्त्या धारया सोम विश्वतः। सदा रसेव विष्टपम् ॥ ६ ॥ ४१सूक्तम्।

जनयन् रोचना दिवो जनयन्नप्सु सूर्य्यम्। वसानो गा
अपो हरिः॥ १॥ एष प्रत्नेन मन्मना देवो देवेभ्यस्परि। धारया
पव॰ सुतः॥ २॥ वावृधानाय तूर्य्यये पवन्ते वाजसातये।
सोमाः सहस्रपाजसः॥ ३॥ दुहानः प्रत्नमित्पयः पवित्रे परि-
षिच्यते। क्रन्दन् देवाँ अजीजनत्॥ ४॥ अभिविश्वानि वार्य्या-
भिदेवाँ ऋतावृधः। सोमः पुनानो अर्षति॥ ५॥ गोमन्नः सोम
वीरवदश्वावद्वाजवत्सुतः। पवस्व बृहतीरिषः॥ ६॥ ४२सू॰

यो अत्य इव मृज्यते गोभिर्मदाय हर्यतः। तङ्गीर्भिर्वासया-
मसि॥ १॥ तं नो विश्वा अवस्युवो गिरः शुम्भन्ति पूर्वथा।
इन्दुमिन्द्राय पीतये॥ २॥ पुनानो याति हर्यतः सोमो गीर्भिः
परिष्कृतः। विप्रस्य मेध्यातिथेः॥ ३॥ पवमान विदा रयि-
मस्मभ्यं सोम सुश्रियम्। इन्दो सहस्रवर्चसम्॥ ४॥ इन्दुरत्यो
न वाजसृक् कनिक्रन्ति पवित्र आ। यदक्षराति देवयुः॥ ५॥
पवस्व वाजसातये विप्रस्य गृणतो वृधे। सोम रास्व सुवीर्य्यम्
॥ ६॥ ४३सूक्तम्।

प्र ण इन्दो महेतन ऊर्मिं न विभ्रदर्षसि। अभिदेवाँ
अयास्यः॥ १॥ मतीजुष्टो धिया हितः सोमो हिन्वे परावति।
विप्रस्य धारया कविः॥ २॥ अयं देवेषु जागृविः सुत एति
पवित्र आ। सोमो याति विचर्षणिः॥ ३॥ स नः पवस्व वाज-
युश्चक्राणश्चारु मध्वरम्। वर्हिष्माँ आविवासति। स नो भगाय
वायवे विप्रवीरः सदावृधः। सोमो देवेष्वायमत्॥ ५॥ स नो
अद्य वसुत्तये क्रतुविद्गातुवित्तमः। वाजं जेषि श्रवो बृहत्
॥ ६॥ ४४सूक्तम्।

स पवस्व मदायकं नृचक्षा देववीतये। इन्दविन्द्राय
पीतये॥ १॥ स नो अर्षाभिदूत्यं त्वमिन्द्राय तोशसे। देवान्
सखिभ्य आवर॥ २॥ उत त्वामरुणं वयं गोभिरञ्ज्मो मदा-

यकम्। विनो राये दुरो वृधि ॥ ३ ॥ अत्यू पवित्रमक्रमीद्वाजी
धुरं न यामनि। इन्दुर्देवेषु यत्यते ॥ ४ ॥ समी सखायो अस्व-
रन् वने क्रीड़न्तमत्यविम्। इन्दुं नावा अनूषत ॥ ५ ॥ तया
पवस्व धारया यया पीतो विचक्षसे। इन्दो स्तोत्रे सुवीर्य्यम्
॥ ६ ॥ ४५सूक्तम्।

असृग्रं. देववीतयेऽत्यासः कृत्व्या इव। क्षरन्तः पर्वता-
वृधः ॥ १ ॥ परिष्कृतास इन्दवो योषेव पित्र्यावती। वायुं
सोमा असृक्षत ॥ २ ॥ एते सोमास इन्दवः प्रयस्वन्तश्चमू सुताः।
इन्द्रं वर्द्धन्ति कर्मभिः ॥ ३ ॥ आधावता सुहस्त्यः शुक्रा गृभ्णीत
मन्थिना। गोभिः श्रीणीत मत्सरम् ॥ ४ ॥ स पवस्व धनञ्जय
प्रयन्ताराधसो महः। अस्मभ्यं सोम गातुवित् ॥ ५ ॥ एतं
मृजन्ति मर्ज्यं पवमानं दश क्षिपः। इन्द्राय मत्सरं मदम्
॥ ६ ॥ ४६सूक्तम्।

अया सोमः सुकृत्यया महश्चिदभ्यवर्द्धत। मन्दान उद्वृषा-
यते ॥ १ ॥ कृता नादस्य कर्व्वाचेतन्ते दस्युतर्हणा। ऋणाव-
धृष्णुश्चयते ॥ २ ॥ आत् सोम इन्द्रियो रसो वज्रः सहस्रसा
भुवत्। उक्थं यदस्य जायते ॥ ३ ॥ स्वयं कविर्विधर्त्तरि विप्राय
रत्नमिच्छति। यदी मर्मृज्यते धियः ॥ ४ ॥ सिषासतू रयीणां
वाजेष्वर्वतामिव। भरेषू जिग्युषामसि ॥ ५ ॥ ४७सूक्तम्।

तं त्वा नृम्णानि बिभ्रतं सधस्थेषु महो दिवः। चारुं
सुकृत्यये महे ॥ १ ॥ संयुक्त धृष्णुमुक्थ्यं महामहिव्रतं मदम्।
शतं पुरो रुरुक्षणिम् ॥ २ ॥ अतस्त्वा रयिमभि राजानं सुक्रतो
दिवः। सुपर्णो अव्यथिर्भरत् ॥ ३ ॥ विश्वस्मा इत्स्वर्दृशे॰साधा-
रणं रजस्तुरम्। गोपामृतस्य विर्भरत् ॥ ४ ॥ अया हिन्वान
इन्द्रियं ज्यायो महित्वमानशे। अभिष्टिकृद्विचर्षणिः ॥५॥ ४८सू॰

प्रवस्व वृष्टिमासुनो यामूर्मिं दिवस्परि। अयक्ष्मा वृहती-

रिषः ॥ १ ॥ तया पवस्व धारया यया गाव इहागमन् । जन्यास
उप नो गृहम् ॥ २ ॥ घृतं पवस्व धारया यज्ञेषु देववीतमः ।
अस्मभ्यं वृष्टिमापव ॥ ३ ॥ स न ऊर्जेऽव्याव्ययं पवित्रं धाव
धारया । देवासः शृणवन्हिकम् ॥४॥ पवमानो असिष्यदद्रक्षांस्यप-
जङ्घनत् । प्रत्नवद्रोचयन् रुचः ॥ ५ ॥ ४९सू०

उत्ते शुष्मास ईरते सिन्धोरूर्मेरिव स्वनः । वाणस्य चोदया
पविम् ॥ १ ॥ प्रसवे त उदीरते तिस्रो वाचो मखस्युवः ।
यदव्य एषि सानवि ॥ २ ॥ अव्यो वारे परिप्रियं हरिं हिन्व-
न्त्यद्रिभिः । पवमानं मधुश्चुतम् ॥ ३ ॥ आपवस्व मदिन्तम
पवित्रं धारया कवे । अर्कस्य योनिमासदम् ॥ ४ ॥ स पवस्व
मदिन्तम गोभिरञ्जानो अक्तुभिः । इन्दविन्द्राय पातये ॥ ५ ॥
५० सूक्तम् ।

अध्वर्यो अद्रिभिः सुतं सोमं पवित्र आसृज । पुनीहीन्द्राय
पातवे ॥ १ ॥ दिवः पीयूषमुत्तमं सोममिन्द्राय वज्रिणे ।
सुनोता मधुमत्तमम् ॥ २ ॥ तव त्य इन्दो अन्धसो देवा मधो-
र्व्यश्नते । पवमानस्य मरुतः ॥ ३ ॥ त्वं हि सोम वर्द्धयन्त्
सुतो मदाय भूर्णये । वृषन् सोतारमूतये ॥ ४ ॥ अभ्यवर्ष
विचक्षण पवित्रं धारया सुतः । अभिवाजमुतश्रवः ॥ ५ ॥ ५१
सूक्तम् ।

परिद्युक्षः सनद्रयिर्भरद्वाजं नो अन्धसा । सुवानो अर्ष
पवित्र आ ॥ १ ॥ तव प्रत्नेभिरध्वभिरव्यो वारे परिप्रियः ।
सहस्रधारोयत्तना ॥ २ ॥ चरुर्न यस्तमीङ्खयेन्दो न दानमीङ्खय ।
बधैर्बधस्नवीङ्खय ॥ ३ ॥ निशुष्ममिन्दवेषां पुरुहूत जनानाम् ।
यो अस्माँ आदिदेशति ॥ ४ ॥ शतं न इन्द ऊतिभिः सहस्रं वा
शुचीनाम् । पवस्व मंहयद्रयिः ॥ ५ ॥ ५२ सूक्तम् ।

उत्ते शुष्मासोऽस्थूरक्षो भिन्दन्तो अद्रिवः । नुदस्व याः परि-

स्पृधः ॥ १ ॥ अया निजघ्निरोजसा रथसङ्गे धने हिते। स्तवा अबिभ्युषा हृदा ॥ २ ॥ अस्य व्रतानि नाधृषे पवमानस्य दूढ्या। रुजयस्त्वा पृतन्यति ॥ ३ ॥ तं हिन्वन्ति मदच्युतं हरिं नदीषु वाजिनम्। इन्दुमिन्द्राय मत्सरम् ॥ ४ ॥ ५३ सूक्तम्।

अस्य प्रत्नामनुद्युतं शुक्रं दुदुह्रे अह्रयः। पयः सहस्रसामृषिम् ॥ १ ॥ अयं सूर्य्य इवोपदृगयं सरांसि धावति। सप्त प्रवत आदिवम् ॥ २ ॥ अयं विश्वानि तिष्ठति पुनानो भुवनोपरि। सोमो देवो न सूर्य्यम् ॥ ३ ॥ परि णो देववीतये वाजाँ अर्षसि गो मतः पुनान इन्दविन्द्रयुः ॥ ४ ॥ ५४ सूक्तम्।

यवंयवं नो अन्धसा पुष्टंपुष्टं परिस्रव। सोम विश्वा च सौभगा ॥ १ ॥ इन्दो यथा तव स्तवो यथा ते जातमन्धसः। निबर्हिषि प्रिये सदः ॥ २ ॥ उत नो गोविदश्ववित् पवस्व सोममन्धसा। मक्षूतमेभिरहभिः ॥ ३ ॥ यो जिनाति न जीयते हन्ति शत्रुमभीत्या। स पवस्व सहस्रजित् ॥ ४ ॥ ५५ सूक्तम्।

परिसोम ऋतं बृहदाशुः पवित्रे अर्षति। विघ्नन्रक्षांसि देवयुः ॥ १ ॥ यत् सोमो वाजमर्षति शतं धारा अपस्युवः। इन्द्रस्य सख्यमाविशन् ॥ २ ॥ अभि त्वा योषणो दश जारं न कन्यानूषत। मृज्यसे सोम सातये ॥ ३ ॥ त्वमिन्द्राय विष्णवे स्वादुरिन्दो परिस्रव। नॄन् स्तोतॄन् पाह्यंहसः ॥ ४ ॥ ५६ सूक्तम्।

प्र ते धारा असश्चतो दिवो नयन्ति वृष्टयः। अच्छावाजं सहस्रिणम् ॥ १ ॥ अभिप्रियाणि काव्या विश्वा चक्षाणो अर्षति। हरिस्तुञ्जान आयुधा ॥ २ ॥ स मर्मृजान आयुभिरिभो राजेव सुव्रतः। श्येनो नवं सुषीदति ॥ ३ ॥ स नो विश्वा दिवोवसूतो पृथिव्या अधि। पुनान इन्दवाभर ॥ ४ ॥ ५७ सूक्तम्।

तरत्समन्दीधावति धारासुतस्योधसः । तरत्समन्दीधावति ॥ १ ॥ उस्रा वेद वसूनां मर्त्तस्य देव्यवसः । तरत्समन्दीधावति ॥ २ ॥ ध्वस्रयोः पुरुषं त्योरासहस्राणि दद्महे । तरत्समन्दीधावति ॥ ३ ॥ आययोस्त्रिंशतन्तना सहस्राणि च दद्महे । तरत्समन्दीधावति ॥ ४ ॥ ५८ सूक्तम् इदं आद्यान्नदोषघ्नमपि ।

पवस्व गोजिदश्वजिद्विश्वजित् सोम रण्यजित् । प्रजावद्रत्नमाभर ॥ १ ॥ पवस्वाद्भ्यो अदाभ्यः पवस्वौषधीभ्यः । पवस्व धिषणाभ्यः ॥ २ ॥ त्वं सोम पवमानो विश्वानिदुरिता तर । कविः सीदति वर्हिषि ॥ ३ ॥ पवमाना स्वर्विदो जायमानो भवो महान् । इन्दो विश्वाँ अभीदसि ॥ ४ ॥ ५९ सूक्तम्

प्रगायत्रेण गायत पवमानं विचर्षणिम् । इन्दुं सहस्रचक्षसे ॥ १ ॥ तं त्वा सहस्रचक्षसमथो सहस्रभर्णसम् । अतिवारमपाविषुः ॥ २ ॥ अतिवारान् पवमानो असिष्यदत् कलशाँ अभिधावति । इन्द्रस्य हार्दाविशन् ॥ ३ ॥ इन्द्रस्य सोम राधसे शं पवस्व विचर्षणे । प्रजावद्रेत आभर ॥४॥ ६० सूक्तम् ।

अया वीती परिस्रव यस्त इन्दो मदेष्वा । अवाहन्नवतीर्नव ॥ १ ॥ पुरःसद्य इत्था धिये दिवोदासाय शंवरम् । अधत्यं तुर्वशं यदुम् ॥२॥ परि णो अश्वमश्वविद्गोमदिन्दो हिरण्यवत् । क्षरा सहस्रिणीरिषः ॥ ३ ॥ पवमानस्य ते वयं पवित्रमभ्युन्दन्तः । सखित्वमावृणीमहे ॥ ४ ॥ ये ते पवित्रमूर्मयोऽभिक्षरन्ति धारया । तेभिर्नः सोममृडय ॥ ५ ॥ स नः पुनान आभर रयिं वीरवतीमिषम् । ईशानः सोम विश्वतः ॥ ६ ॥ एतमुत्यं दश क्षिपो मृजन्ति सिन्धुमातरम् । समादित्येभिरख्यत ॥ ७ ॥ समिन्द्रेणोत वायुना सुत एति पवित्र आ । संसूर्यस्य रश्मिभिः ॥ ८ ॥ स नो भगाय वायवे पूष्णे पवस्व

मधमान्। चारुमित्रे वरुणे च ॥ ९ ॥ उच्चा ते जातमन्धसो दिविषद्भूम्याददे। उग्रं शर्म महिश्रवः ॥ १० ॥ एना विश्वान्यर्य्य आद्युम्नानि मानुषाणाम्। सिषासन्तो वनामहे ॥ ११ ॥ स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः। वरिवोवित्परिस्रव ॥ १२ ॥ उपोषु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम्। इन्दुं देवा अयासिषुः ॥ १३ ॥ तमिद्वर्द्धन्तु नो गिरो वत्सं संशिश्वरीरिव। य इन्द्रस्य हृदंसनिः ॥ १४ ॥ अर्षाणः सोम शंगवे धुक्षस्व पिप्युषीमिषम्। वर्द्धा समुद्रमुक्थ्याम ॥ १५ ॥ पवमानो अजीजनद्दिवश्चित्रं नतं न्यतुम्। ज्योतिर्वैश्वानरं बृहत् ॥ १६ ॥ पवमानस्य ते रसो मदो राजन्न दुच्छुनः। विवारमव्यमर्षति ॥ १७ ॥ पवमान रसस्तव दक्षो विराजति द्युमान्। ज्योतिर्विश्वं स्वर्दृशे ॥ १८ ॥ यस्ते मदो वरेण्यस्तेनापवस्वान्धसा। देवावीरघशंसहा ॥ १९ ॥ जघ्निर्वृत्रममित्रियं सस्निर्वाजं दिवेदिवे। गोषा उ अश्वसा असि ॥ २० ॥ संमिश्लो अरुषो भव सूपस्थाभिर्न धेनुभिः। सीदन् श्येनो न योनिमा ॥ २१ ॥ स पवस्व य आविथेन्द्रं वृत्राय हन्तवे। वव्रिवांसं महीरपः ॥ २२ ॥ सुवीरासो वयं धना जयेम सोममीढ्वः। पुनानो वर्द्धनो गिरः ॥ २३ ॥ त्वोतासस्तवावसास्याम वन्वन्त आमुरः। सोम व्रतेषु जागृहि ॥ २४ ॥ अपघ्नन् पवते मृधोप सोमो अराव्णः। गच्छन्निन्द्रस्य निष्कृतम् ॥ २५ ॥ मही नो राय आभर पवमान जही मृधः। रास्वेन्दो वीरवद्यशः ॥ २६ ॥ न त्वाशतं चन ह्रुतो राधो दित्सन्तमा मिनन्। यत्पुनानो मखस्यसे ॥ २७ ॥ पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने। विश्वा अपद्विषो जहि ॥ २८ ॥ अस्य ते सख्ये वयं तवेन्दो द्युम्न उत्तमे। सासह्याम पृतन्यतः ॥ २९ ॥ सा ते भीमान्यायुधा तिग्मानि सन्ति धूर्वणे। रक्षा समस्य नो निदः ॥३०॥ ६१ सू०

एते असृग्रमिन्दवस्तिरः पवित्रमाशवः। विश्वान्यभि सौभगा ॥ १ ॥ विघ्नन्तो दुरिता पुरु सुगा तोकाय वाजिनः। तना कृण्वन्तो अर्वते ॥ २ ॥ कृण्वन्तो वरिवो गवेऽभ्यर्षन्ति सुष्टुतिम्। इड़ामस्मभ्यं संयतम् ॥ ३ ॥ आसाव्यंशुर्मदायाप्सु दक्षो गिरिष्ठाः। श्येनो न योनिमासदत् ॥ ४ ॥ शुभ्रमन्धो देववातमप्सु धूतो नृभि सुतः। स्वदन्ति गावः पयोभिः ॥ ५ ॥ आदीमश्वं न हेतारोऽशूशुभं न मृताय। मध्वो रसं सधमादे ॥ ६ ॥ यास्ते धारा मधुश्चतोऽसृग्रमिन्द ऊतय। ताभिः पवित्रमासदः ॥ ७ ॥ सो अर्षेन्द्राय पीतये तिरोरोमाण्यव्यया। सीदन् योनावनेष्वा ॥ ८ ॥ त्वमिन्दो परिस्रव स्वादिष्ठो अङ्गिरोभ्यः। वरिवो विद्घृतं पयः ॥ ९ ॥ अयं विचर्षणिर्हितः पवमानः स चेतति। हिन्वान आप्यं बृहत् ॥ १० ॥ एष वृषा वृषव्रतः पवमानो अशस्तिहा। करद्वसूनि दाशुषे ॥ ११ ॥ आपवस्व सहस्रिणं रयिं गोमन्तमश्विनम्। पुरुश्चन्द्रं पुरुस्पृहा ॥ १२ ॥ एषस्य परिषिच्यते मर्मृज्यमान आयुभिः। उरुगायः कविक्रतुः ॥ १३ ॥ सहस्रोतिःशतामघो विमानो रजसः कविः। इन्द्राय पवते मदः ॥ १४ ॥ गिरा जात इह स्तुत इन्दुरिन्द्राय धीयते। विर्योना वसताविव ॥ १५ ॥ पवमानः सुतो नृभिः सोमो वाजमिवासरत्। चमूषु शक्मनासदम्। तं त्रिपृष्ठे त्रिबन्धुरे रथे युञ्जन्ति यातवे। ऋषीणां सप्तधीतिभिः ॥ १७ ॥ तं सोतारो धनस्पृतमाशुं वाजाय यातवे। हरिं हिनोत वाजिनम् ॥ १८ ॥ आविशन् कलशं सुतो विश्वा अर्षन्नभिश्रियः। शूरो न गोषु तिष्ठति ॥ १९ ॥ आ त इन्दो मदायकं पयो दुहन्त्यायवः। देवो देवेभ्यो मधु ॥ २० ॥ आ नः सोमं पवित्र आसृजता मधुमत्तम। देवेभ्यो देवश्रुत्तमम् ॥ २१ ॥ एते सोमा असृक्षत गृणानाः श्रवसे महे। मदिन्तमस्य

धारया ॥ २२ ॥ अभिगव्यानि वीतये नृम्णा पुनानो अर्षसि ।
सनद्वाजः परिस्रव ॥ २३ ॥ उत नो गोमतीरिषो विश्वा अर्ष
परिष्टुभः । गृणानो जमदग्निना ॥ २४ ॥ पवस्व वाचो अग्नियः
सोम चित्राभिरूतिभिः । अभिविश्वानि काव्या ॥ २५ ॥ त्वं
समुद्रिया अपोऽग्नियो वाच ईरयन् । पवस्व विश्वमेजय ॥ २६ ॥
तुभ्येमा भुवना कवे महिम्ने सोम तस्थिरे । तुभ्यमार्षन्ति
सिन्धवः ॥ २७ ॥ प्र ते दिवो न वृष्टयो धारा यन्त्यसश्चितः ।
अभिशुक्रामुपस्तिरम् ॥ २८ ॥ इन्द्रायेन्दुं पुनीत नोऽग्रं दक्षाय
साधनम् । ईशानं वीतिराधसम् ॥ २९ ॥ पवमान ऋतः कविः
सोमः पवित्रमासदत् । दधत् स्तोत्रे सुवीर्य्यम् ॥ ३० ॥ ६२सू०

आपवस्व सहस्रिणं रयिं सोम सुवीर्य्यम् । अस्मे श्रवांसि
धारय ॥ १ ॥ इयमूर्जञ्चयिन् वस इन्द्राय मत्सरि तमः । चमू-
ष्वानिषीदसि । २॥ सुत इन्द्राय विष्णवे सोमः कलशे अक्षरत् ।
मधुमाँ अस्तु वायवे ॥ ३ ॥ एते अस्वग्रमाशवोऽतिह्वरांसि
बभ्रवः । सोमा ऋतस्य धारया ॥ ४ ॥ इन्द्र वर्द्धते असुरः
कृण्वन्तो विश्वमार्य्यम् । अपघ्नन्तो अराम्णः ॥ ५ ॥ सुता अनु-
स्वमारजोऽभ्यर्षन्ति बभ्रवः । इन्द्रं गच्छत इन्दवः ॥ ६ ॥ अया
पवस्व धारया यया सूर्य्यमरोचयः । हिन्वानो मानुषीरपः ॥ ७॥
अयुक्त सूर एत शं पवमानो मनावधि । अन्तरिक्षेण यातवे ॥८॥
उत त्या हरितो दश सूरो अयुक्त यातवे । इन्दुरिन्द्र इति
ब्रुवन् ॥ ९ ॥ परीतो वायवे सुतं गिर इन्द्राय मत्सरम् । अव्यो
वारेषु सिञ्चत ॥ १० ॥ पवमान विदा रयिमस्मभ्यं सोम दुर्ड-
रम् । यो दूणाशो वनुष्यता ॥ ११ ॥ अभ्यर्ष सहस्रिणं रयिं
गोमन्तमश्विनम् । अभिवाजमुतश्रवः ॥ १२ ॥ सोमो देवो न
सूर्य्योऽद्रिभिः पवते सुतः । दधानः कलशे रसम् ॥ १३ ॥ एते
धामान्यार्या शुक्रा ऋतस्य धारया । वाजं गोमन्तमक्षरन् ॥१४॥

सुता इन्द्राय वज्रिणे सोमासो दध्या शिरः । पवित्रमत्यक्ष-
रन् ॥ १५ ॥ प्र सोम मधुमत्तमो राये अर्ष पवित्र आ । मदो
यो देववीतमः ॥ १६ ॥ तमीमृजन्त्यायवो हरिं नदीषु वाजि-
नम् । इन्दुमिन्द्राय मत्सरम् ॥ १७ ॥ आपवस्व हिरण्यवदश्वा-
वत् सोम वीरवत् । वाजं गोमन्तमाभर ॥ १८ ॥ परिवाजेन
वाजयुमव्यो वारेषु सिञ्चत । इन्द्राय मधुमत्तमम् ॥ १९ ॥
कविं मृजन्ति मर्ज्यं धीभिर्विप्रा अवस्यवः । वृषा कनिक्र-
दर्षति ॥ २० ॥ वृषणं धीभिरप्तुरं सोममृतस्य धारया । मती
विप्राः समस्वरन् ॥ २१ ॥ पवस्व देवायुषगिन्द्रं गच्छतु ते मदः ।
वायुमारोहधर्म्मणा ॥ २२ ॥ पवमान नितोशसे रयिं सोम
श्रवाय्यम् । प्रियः समुद्रमाविश ॥ २३ ॥ अपघ्नन् पवसे मृधः
क्रतुवित् सोम मत्सरः । नुदस्वा देव युञ्जनम् ॥ २४ ॥ पवमाना
असृक्षत सोमाः शुक्रास इन्दवः । अभिविश्वानि काव्या ॥ २५ ॥
पवमानास आशवः शुभ्रा असृग्र मिन्दवः । घ्नन्तो विश्वा अप-
द्विषः ॥ २६ ॥ पवमानः दिवस्पर्य्यन्तरिक्षादसृक्षत । पृथिव्या
अधिसानवि ॥ २७ ॥ पुनानः सोम धारयेन्दो विश्वा अपस्रिधः ।
जहि रक्षांसि सुक्रतो ॥ २८ ॥ अपघ्नन् सोम रक्षसोऽभ्यर्ष्य कनि-
क्रदत् । द्युमन्तं शुष्ममुत्तमम् ॥२९ ॥ अस्मे वसुनि धारय सोम
दिव्यानि पार्थिवा । इन्दो विश्वानिवार्य्या ॥ ३० ॥६३॥ सू०

वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः । वृषा धर्म्माणि
दधिषे ॥ १ ॥ वृष्णस्ते वृष्ण्यं शवो वृषा वनं वृषा मदः । सत्यं
वृषन् वृषेदसि ॥ २ ॥ अश्वो न चक्रदो वृषा सङ्गा इन्दो
समर्वतः । विनो राये दुरो वृधि ॥ ३ ॥ असृक्षत प्रवाजिनो
गव्या सोमासो अश्वया । शुक्रासो वीरयाशवः ॥४॥ शुम्भमाना
ऋतायुभिर्मृज्यमाना गभस्त्योः । पवन्ते वारे, अव्यये ॥ ५ ॥
ते विश्वा दाशुषे वसु सोमा दिव्यानि पार्थिवा । पवतामान्त-

रिष्या। ५॥ पवमानस्य विश्ववित् प्र ते सर्गा असृक्षत। सूर्य्य-
स्येव न रश्मयः॥।॥ केतुं कृण्वन् दिवस्परि विश्वानुपाभ्यर्य्यसि।
समुद्रः सोम पिन्वसे॥ ८॥ हिन्वानो वाचमिष्यसि पवमान
विधर्म्मणि। अक्रां देवो न सूर्य्यः॥ ९॥ इन्दुः पविष्टचेतनः
प्रियः कवीनां मती। सृजदश्वं रथीरिव॥ १०॥ ऊर्म्मिर्य्यस्ते
पवित्र आ देववीः पर्य्यक्षरत्। सीदन्नृतस्य योनिमा॥ ११॥
सनो अर्ष पवित्र आ मदो यो देववीतमः। इन्दविन्द्राय
पीतये॥ १२॥ इषे पवस्व धारया मृज्यमानो मनीषिभिः।
इन्दोरुचाभिगा इहि॥ १३॥ पुनानो वरिवस्कृध्यूर्ज्जं जनाय
गिर्वणः। हरे सृजान आशिरम्॥ १४॥ पुनानो देववीतय
इन्द्रस्य पाहि निष्कृतम्। द्युतो नो वाजिभिर्यतः॥१५॥ प्रहि-
न्वास इन्दवोऽच्छा समुद्रमाशवः। धिया जूता असृक्षत॥१६॥
मर्म्मृजानास आयवो वृथा समुद्रमिन्दवः। अग्मन्नृतस्य
योनिमा॥ १७॥ परिणोयाह्यस्मयुर्विश्वा वसून्योजसा। पाहि
नः शर्म्मः वीरवत्॥ १८॥ मिमाति वह्निरेतश पदं युजान
ऋक्वभिः। प्रयत् समुद्र आहितः॥ १९॥ अपयोनिं हिरण्ययं
आशुर्ऋतस्य सीदति। जहात्यप्रचेतसः॥ २०॥ अभिवेना अनू-
षते यच्छन्ति प्रचेतसः। मज्जन्त्यविचेतसः॥ २१॥ इन्द्रायेन्दो
मरुत्वते पवस्व मधुमत्तमः। ऋतस्य योनिमासदम्॥ २२॥
तं त्वा विप्रा वचोविदः परिष्कृण्वन्ति वेधसः। स त्वा मृजन्त्या-
यवः॥ २३॥ रसं ते मित्रो अर्यमा पिबन्ति वरुणः कवे। पव-
मानस्य मरुतः॥ २४॥ त्वं सोम विपश्चितं पुनानो वाच-
मिष्यसि। इन्दो सहस्रभर्णसम्॥ २५॥ उतो सहस्रभर्णसं वाचं
सोमं मखस्युवन्। पुनान इन्दवाभर॥ २६॥ पुनान इन्दवेषां
पुरुहुत जनानाम्। प्रियः समुद्रमाविश॥ २७॥ दविद्युतत्या
रुचा परिष्टोभन्त्या कृपा। सोमाः शुक्रा गवा शिरः॥ २८॥

हिन्वानो हेतृभिर्यत आवाजवाज्यं क्रमीत्। सीदन्तो वनुषो यथा ॥ २९ ॥ ऋधक् सोम स्वस्तये संजग्मानो दिवः कविः। पवस्व सूर्यो दृशे ॥ ३० ॥ ६४ सूक्तम्।

हिन्वन्ति सूरमुस्रयः स्वसा योजामयस्पतिम्। महामिन्दु महीयुवः ॥ १ ॥ पवमान रुचारुचा देवो देवेभ्यस्परि। विश्वा-वसून्याविश ॥ २ ॥ आपवमान सुष्टुतिं वृष्टिं देवेभ्यो दुवः। इषे पवस्व संयत ॥ ३ ॥ वृषा ह्यसि भानूना द्युमन्तं त्वा हवा-महे। पवमान स्वाध्यः ॥ ४ ॥ आपवस्व सुवीर्यं मन्दमानः स्वायुध। इहो ष्विन्दवागहि ॥ ५ ॥ यदद्भिः परिषिच्यसे मृज्यमानो गभस्त्योः। द्रुणा सधस्थमश्नुषे ॥ ६ ॥ प्रसोमाय व्यश्ववत् पवमानाय गायत। महे सहस्रचक्षसे ॥ ७ ॥ यस्य वर्णं मधुश्चुतं हरिं हिन्वन्त्यद्रिभिः। इन्दुमिन्द्राय पातये ॥ ८ ॥ तस्य ते वाजिनो वयं विश्वाधनानि जिग्युषः। सखित्वमावृणी-महे ॥ ९ ॥ वृषा पवस्व धारया मरुत्वते च मत्सरः। विश्वा-दधान ओजसा ॥ १० ॥ तत्वा धर्त्तारमोण्योः पवमान स्वर्दृ-शम्। हिन्वे वाजेषु वाजिनम् ॥ ११ ॥ अयाचिता विपानया हरिः पवस्व धारया। युजं वाजेषु चोदय ॥ १२ ॥ आ न इन्दो महामिषं पवस्व वृत्तवर्हिषः। अस्मभ्यं सोम गातु-वित्। १३ ॥ अकलशा अनूषते दोधाराभिरोजसा। इन्द्रस्य पीतये विश ॥ १४ ॥ यस्य ते मदं रसन्तो दुहन्त्यद्रिभिः। स पवस्वाभिमातिहा ॥ १५ ॥ राजा मेधाभिरीयते पवमानो मना-वधि। अन्तरिक्षेण पातवे ॥ १६ ॥ आ न इन्दो शतग्विनं गवां पोषं स्वश्व्यम्। वहाभ गतिमूतये ॥ १७ ॥ आ नः सोम सहोजुवो रूपं न वर्चसे भर। सुष्वाणो देववीतये ॥ १८ ॥ अर्षा साम द्युमत्तमोऽभिद्रोणानि रोरुवत्। सीदन् श्येनो न योनिमा ॥ १९ ॥ अप्सा इन्द्राय वायवे वरुणाय मरुद्भ्यः।

सोमे अर्षति विष्णवे ॥ २० ॥ इषन् तोकाय नो दधदस्मभ्यं सोम विश्वतः । आपवस्व सहस्रिणम् ॥ २१ ॥ ये सोमासः परावति ये अर्वावति सुन्विरे । ये वादः शर्यणावति ॥ २२ ॥ य आर्जीकेषु कृत्वसु ये मध्ये पस्त्यानाम् । ये वा जनेषु पञ्चसु ॥ २३ ॥ ते नो वृष्टिं दिवस्परि पवन्तामासुवीर्यम् । सुवाना देवास इन्दवः ॥ २४ ॥ पवते हर्यतो हरिर्गृणानो जमदग्निना । हिन्वानो गोरधित्वचि ॥ २५ ॥ प्रशुक्रासो वयोजुवो हिन्वानासो न सप्तयः । श्रीणाना अप्सु मृञ्जत ॥ २६ ॥ तं त्वा सुतेष्वाभुवो हिन्विरे देवतातये । स पवस्वानया रुचा ॥ २७ ॥ आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे । पान्तमा पुरुस्पृहम् ॥ २८ ॥ आमन्द्रमावरेण्यमाविप्रमामनीषिणम् । पान्तमा पुरुस्पृहम् । २९ ॥ आ रयिं मासुचेतनमासुक्रतो तनूष्वा । पान्तमा पुरुस्पृहम् ॥ ३० ॥ ६५ सूक्तम् । इति पञ्चषष्टिसूक्तात्मकं पावमानसूक्तम् । (ऋ० ९ म० १ अवधि ६५ सूक्तपर्य्यन्तम् ।

सोमसूक्तम् । त्वं सोमेत्यादि ( ११८पृ० २६ पं० ) प्राग्वत् ।

सुमङ्गलम् । कनिक्रददित्यादि तृचस्य मङ्गलद्रष्टा गृत्समद ऋषिस्त्रिष्टुप् छन्दः कपिञ्जलरूपीन्द्रो देवता तत्प्रीतये० वि० । ओं कनिक्रदज्जनुषं प्रब्रुवाण इयर्त्ति वाचमरितेव नावम् । सुमङ्गलश्च शकुने भवासि मा त्वा काचिदभिभा विश्व्या च विदत् ॥ १ ॥ मा त्वा श्येन उद्वधीन्मा सुपर्णो मा त्वा विददिषुमान् वीरो अस्ता । पित्र्यामनु प्रदिशं कनिक्रदत् सुमङ्गलो भद्रवादी वदेह ॥ २ ॥ अवक्रन्द दक्षिणतो गृहाणां सुमङ्गलो भद्रवादी शकुन्ते । मा नः स्तेन ईशत माघशंसो बृहद्वदेम विदथे सुवीराः ॥३॥ (ऋ० २म० ४२ सू० १,२,३म०) ॥

शान्त्यध्यायः । शन्न इन्द्राग्नी इत्यादिवर्गत्रयस्य वसिष्ठ

ऋषिस्त्रिष्टुप् छन्दः लिङ्गोक्ता देवताः शान्तिजपे वि० । ॐ शन्न इन्द्राग्नी भवतामवोभिः शन्न इन्द्रावरुणा रात हव्या । शमिन्द्रासोमा सुविताय शंयोः शन्न इन्द्रापूषणा वाजसातौ । शन्नो भगः शमुनः शंसो अस्तु शन्नः पुरन्धिः शमु सन्तु रायः । शन्नः सत्यस्य सुयमस्य शंसः शन्नो अर्यमा पुरुजा अस्तु । शन्नो धाता शमु धर्त्ता नो अस्तु शन्न उरूची भवतु स्वधाभिः । शं रोदसी बृहती शन्नो अद्रिः शन्नो देवानां सुहवानि सन्तु । शन्नो अग्निर्ज्योतिरनीको अस्तु शन्नो मित्रा वरुणावश्विना शम् । शन्नः सुकृतां सुकृतानि सन्तु शन्न इषिरो अभिवातु वातः । शन्नो द्यावा पृथिवी पूर्वहूतौ शमन्तरिक्षं दृशये नो अस्तु । शन्न ओषधीर्वनिनो भवन्तु शन्नो रजसस्पतिरस्तु जिष्णुः ॥ १ ॥ शन्न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः । शन्नो रुद्रो रुद्रेभिर्जलाषः शन्नस्त्वष्टाग्नाभिरिह शृणोतु । शन्नः सोमो भवतु ब्रह्म शन्नः शन्नो ग्रावाणः शमु सन्तु यज्ञाः । शन्नः स्वरूणां मितयो भवन्तु शन्नः प्रस्वः शम्वस्तु वेदिः । शन्नः सूर्य्य उरुचक्षा उदेतु शन्नश्चतस्रः प्रदिशो भवन्तु । शन्नः पर्वता ध्रुवयो भवन्तु शन्नः सिन्धवः शमु सन्त्वापः । शन्नो अदितिर्भवतु व्रतेभिः शन्नो भवन्तु मरुतः स्वर्काः । शन्नो विष्णुः शमु पूषा नो अस्तु शन्नो भवित्रं शम्वस्तु वायुः । शं नो देवः सविता त्रायमाणः शन्नो भवन्तूषसो विभातीः । शन्नः पर्जन्यो भवतु प्रजाभ्यः शन्नः क्षेत्रस्य पतिरस्तु शम्भुः ॥ २ ॥ शन्नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु । शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवाः शन्नो अप्याः । शन्नः सत्यस्य पतयो भवन्तु शन्नो अर्वन्तः शमु सन्तु गावः । शन्न ऋभवः सुकृतः सुहस्ताः शन्नो भवन्तु पितरो हवेषु । शन्नो अज एकपाद्देवो अस्तु शन्नोऽहिर्बुध्न्यः शं समुद्रः । शन्नो अपां नपात्पेरुरस्तु शन्नः पृश्निर्भवतु

देवगोपा। आदित्या रुद्रा वसवो जुषन्तेदं ब्रह्म क्रियमाणं नवीयः। शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः। ये देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा अमृता ऋतज्ञाः। ते नो रासन्तामुरुगायमद्य यूयपात स्वस्तिभिः सदा नः॥ ३॥ (ऋ० ७ म० ३५सू०)

इन्द्रसूक्तम् इन्द्रं विश्वा इत्यादि एकादशर्चं सूक्तम् (१३०पृ० ८पं०) प्रागुक्तम्।

रक्षोघ्नसूक्तं कृणुष्वपाज इत्यादि प्रमृणीहि शत्रूनित्यन्तं पञ्चर्चम् (२०पृ० २पं० ११प० पर्य्यन्तम्) (ऋ० ४म० ४सू०१, २, ३, ४, ५ मन्त्राः)

अथ यजुर्वेदिद्वारपालपाठ्यसूक्तादीन्यभिधीयन्ते तानि च दक्षिणे द्वारपालौ तु रुद्रान् पुरुषसूक्तकम्। श्लोकाध्यायं शुक्रियञ्च मण्डलाध्यायमेव चेति दानपारिजाते उक्तानि। तत्र रुद्रसूक्तं नमस्ते रुद्रेत्यादि (१६२पृ० ४पं०) प्रागुक्तम्।

पुरुषसूक्तं सहस्रशीर्षेत्यादि (१६३पृ० १३पं०) प्रागुक्तम्।

श्लोकाध्यायः देव सवितरित्यादिः त्रिंशत्तमोऽध्यायः। तस्य नारायणपुरुष ऋषिः आद्यायास्त्रिष्टुप् द्वितीयादितिसृणां गायत्री, शिष्टानां यजुष्ट्वाच्छन्दोऽभावः आद्यचतसृणां सविता शिष्टानामात्मा देवता तत्प्रीतये० वि०। ओं देव सवितः प्रसुव यज्ञं प्रसुव यज्ञ पतिं भगाय। दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु॥ १॥ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्॥ २॥ विश्वानि देव सवितर्दुरितानि परासुव। यद्भद्रं तन्न आसुव॥ ३॥ विभक्तारं हवामहे वसोश्चित्रस्य राधसः सवितारं नृचक्षसम्॥ ४॥ ब्रह्मणे ब्राह्मणं क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे शूद्रं तमसे तस्करं नारकाय वीरहणं पाप्मने क्लीवमाक्रयाया अयोगूं कामाय

पुंश्चलुमतिक्रुष्टाय मागधम् ॥ ५ ॥ नृत्ताय सूतं गीताय शैलुषं धर्म्माय सभाचरं नरिष्ठायै भीमलं नर्माय रेभं हसाय कारि-मानन्दाय स्त्रीषखं प्रमदे कुमारीपुत्रं मेधायै रथकारं धैर्य्याय तक्षाणम् ॥६॥ तपसे कौलालं मायायै कर्म्मारं रूपाय मणिकारं शुभे वपं शरव्याया इषूकारं हेत्यै धनुष्कारं कर्म्मणे ज्याकरं दिष्टाय रज्जुसर्जं मृत्यवे मृगयुमन्तकाय श्वनिनम् ॥७॥ नदीभ्य: पौञ्जिष्ठमृत्तीकाभ्यो नैषादं पुरुषव्याघ्राय दुर्म्मदं गन्धर्वाप्सरोभ्यो व्रात्यं प्रयुग्भ्य उन्मत्तं सर्पदेवजनेभ्योऽप्रतिपदमयेभ्य: कितव-मीर्य्यताया अकितवं पिशाचेभ्यो विदलकारीं यातुधानीभ्य: कण्टकीकारीम् ॥८॥ सन्धये जारं गेहायोपपतिमार्त्यै परिवित्तं निर्ऋत्यै परिविविदानमराद्ध्या एदिधिषु: पतिं निष्कृत्यै पेशस्कारीं संज्ञानाय स्मरकारीं प्रकामोद्यायोपसदं वर्णायानुरुधं बलायोपदाम् ॥९॥ उत्सादेभ्य: कुब्जं प्रमुदे वामनं द्वार्भ्य: स्रामं स्वप्नायान्धमधर्म्माय वधिरं पवित्राय भिषजं प्रज्ञानाय नक्षत्र-दर्शमाशिक्षायै प्रश्निनमुपशिक्षाया अभिप्रश्निनं मर्य्यादायै प्रश्न-विवाकम् ॥ १० ॥ अर्मेभ्यो हस्तिपं जवायाश्वपं पुष्ट्यै गोपालं वीर्य्यायाविपालं तेजसेऽजपालमिरायै कीनाशं कीलालाय सुरा-कारं भद्राय गृहपं श्रेयसे वित्तधमाध्यक्षायानुक्षत्तारम् ॥ ११ ॥ भायै दार्वाहारं प्रभाया अग्न्येधं ब्रध्नस्य विष्टपायाभिषेक्तारं वर्षिष्ठाय नाकाय परिवेष्टारं देवलोकाय पेशितारं मनुष्यलोकाय प्रकरितारं सर्वेभ्यो लोकेभ्य उपसेक्तारमव ऋत्यै वधायोपमन्थि-तारं मेधाय वास:पल्पूलीं प्रकामाय रजयित्रीम् ॥१२॥ ऋताय स्तेनहृदयं वैरहत्याय पिशुनं विविक्त्यै क्षत्तारमौपद्रष्ट्र्याया-नुक्षत्तारं बलायानुचरं भूम्ने परिष्कन्दं प्रियाय प्रियवादिन-मरिष्ट्या अश्वसादं स्वर्गाय लोकाय भागदुघं वर्षिष्ठाय नाकाय परिवेष्टारम् ॥ १३ ॥ मन्यवेऽयस्तापं क्रोधाय निसरं योगाय

यौक्तारं शोकायाभिसर्त्तारं क्षेमाय विमोक्तारमुत्कूलनिकूलेभ्य-स्त्रिष्ठिनं वपुषे मानस्कृतं शीलायाञ्जनीकारीं निर्ऋत्यै कोश-कारीं यमायासूम् ॥ १४ ॥ यमाय यमसूमथर्वभ्योऽवतोकां संवत्सराय पर्य्यायिणीं परिवत्सरायाविजातामिदावत्सराया-तीत्वरीमिद्वत्सरायातिष्कद्वरीं वत्सराय विजर्जरां संवत्सराय पलिक्नीमृभुभ्योऽजिनसन्धं साध्येभ्यश्चर्मम्नम् ॥ १५ ॥ सरोभ्यो धैवरमुपस्थावराभ्यो दाशं वैशान्ताभ्यो वैन्दं नड्वलाभ्यः शौष्कलं पाराय मार्गारमवाराय कैवर्त्तं तीर्थेभ्य आन्दं विषमेभ्यो मैनालं स्वनेभ्यः पर्णकं गुहाभ्यः किरातं सानुभ्यो जम्भकं पर्वतेभ्यः किम्पूरुषम् ॥ १६ ॥ वीभत्सायै पौल्कसं वर्णाय हिरण्यकारं तुलायै वाणिजं पश्चाद्दोषाय ग्लाविनं विश्वेभ्यो भूतेभ्यः सिध्मलं भूत्यै जागरणमभूत्यै स्वपनमार्त्त्यै जनवादिनं व्यृद्ध्या अप्रगल्भं संशराय प्रच्छिदम् ॥ १७ ॥ अक्षराजाय कितवं कृतायादिनव-दर्शं त्रेतायै कल्पिनं द्वापरायाधिकल्पिनमास्कन्दाय सभास्थाणुं मृत्यवे गोव्यच्छमन्तकाय गोघातं क्षुधे यो गां विकृन्तन्तं भिक्ष-माण उपतिष्ठति दुष्कृताय चरकाचार्य्यं पाप्मने सैलगम् ॥ १८ ॥ प्रतिश्रुत्काया अर्त्तनं घोषाय भषमन्ताय बहुवादिनमनन्ताय मूकं शब्दायाडम्बराघातं महसे वीणावादं क्रोशाय तूणवध्मम-वरस्पराय शङ्खध्मं वनाय वनपमन्यतोऽरण्याय दावपम् ॥ १९ ॥ नर्माय पुंश्चलुं हसाय कारिं यादसे शाबल्यां ग्रामण्यं गणकमभि-क्रोशकं तान्, महसे वीणावादं पाणिघ्नं तूणवध्मं तान्नृत्ताया-नन्दाय तलवम् ॥ २० ॥ अग्नये पीवानं पृथिव्यै पीठसर्पिणं वायवे चाण्डालमन्तरिक्षाय वंशनर्त्तिनं दिवे खलतिं सूर्य्याय हर्य्यक्षं नक्षत्रेभ्यः किर्मिरं चन्द्रमसे किलासमह्ने शुक्लं पिङ्गाक्षं रात्र्यै कृष्णं पिङ्गाक्षम् ॥ २१ ॥ अथैतानष्टौ विरूपानालभतेऽति-दीर्घं चातिह्रस्वं चातिस्थूलं चातिकृशं चातिशुक्लं चातिकृष्णं

चातिकुल्वं चातिलोमशम् । अशूद्रा अब्राह्मणास्ते प्राजापत्याः । मागधः पुंश्चली कितवः क्लीबोऽशूद्रा अब्राह्मणास्ते प्राजापत्याः ॥ २२ ॥ (य० ३०अ० आद्यन्तः)।

शुक्रियः शान्त्यध्यायः । यथा ऋचं वाचमित्याद्यध्यायस्य दध्यङ्ङाथर्वण ऋषिः छन्द आदिकं प्रतिमन्त्रं वक्ष्यते शान्तिपाठे वि० । ओं ऋचं वाचं प्रपद्ये, मनो यजुः प्रपद्ये, साम प्राणं प्रपद्ये, चक्षुः श्रोत्रं प्रपद्ये, वागोजः सहोजो मयि प्राणापानौ (पञ्च यजूंषि लिङ्गोक्तदैवतानि) ॥ १ ॥ यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृण्णं बृहस्पतिर्मे तद्दधातु । शंनो भवतु भुवनस्य यस्पतिः । (बार्हस्पत्यं पाङ्क्तोषम्) ॥ २ ॥ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । (सावित्रं गायत्रम्) ॥ ३ ॥ कया नश्चित्र आभूवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥ ४ ॥ कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृढ़ा चिदारुजे वसु ॥ ५ ॥ अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिः । (तृचमैन्द्रं गायत्रम्) ॥ ६ ॥ कया त्वं न ऊत्याभि प्रमन्दसे वृषन् । कया स्तोतृभ्य आभर । (ऐन्द्रं गायत्रम्) ॥ ७ ॥ इन्द्रो विश्वस्य राजति । शं नो अस्तु द्विपदे शं चतुष्पदे । (द्वैपादविराजमैन्द्रम्) ॥ ८ ॥ शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा । शन्न इन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः ॥ ९ ॥ शंनो वातः पवतां शंनस्तपतु सूर्य्यः । शं नः कनिक्रदद्देवः पर्जन्यो अभिवर्षतु । (द्व्यृचं मैत्रावरुणमानुष्टुभम्) ॥ १० ॥ अहानि शं भवन्तु नः शं रात्रीः प्रतिधीयताम् । शन्न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या । शं न इन्द्रापूषणावाजसातौ शमिन्द्रासोमा सुविताय शंयोः । (आद्यं द्वैपादगायत्रसन्त्यं त्रैष्टुभं लिङ्गोक्तदैवतम्) ॥ ११ ॥ शं नो देवीरभिष्टय

आपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः। (गायत्रमब्दैव-
तम्)॥ १२॥ स्योना पृथिवि नो भवान्टक्षरा निवेशनी।
यच्छा नः शर्म सप्रथाः। (भौमं गायत्रम्)॥ १३॥ आपो हि
ष्ठा मयो भुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे॥ १४॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः
॥ १५॥ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ। आपो
जनयथा च नः। (त्र्यचं गायत्रमब्दैवतम्)॥ १६॥ द्यौः शान्ति-
रन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः।
वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः शान्तिरेव
शान्तिः सा मा शान्तिरेधि॥ १७॥ दृते दृंह मा मित्रस्य मा
चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्। मित्रस्याहं चक्षुषा
सर्वाणि भूतानि समीक्षे। मित्रस्य चक्षुषा समीक्षामहे॥ १८॥
दृते दृंह मा ज्योक्ते संदृशि जीव्यासं ज्योक्ते संदृशि जीव्यासम्
(लिङ्गोक्तदैवतानि त्रीणि यजूंषि)॥ १९॥ नमस्ते हरसे
शोचिषे नमस्ते अस्त्वर्चिषे। अन्याँस्ते अस्मत्तपन्तु हेतयः
पावको अस्मभ्यं शिवो भव (वार्हतमाग्नेयम्)॥ २०॥ नमस्ते
अस्तु विद्युते नमस्ते स्तनयित्नवे। नमस्ते भगवन्नस्तु यतः स्वः
समीहसे॥ २१॥ यतो यतः समीहसे ततो नो अभयं कुरु।
शं नः कुरु प्रजाभ्योऽभयं नः प्रजाभ्यः। (त्र्यचमानुष्टुभं स्तन-
यित्नु भगवद्दैवतम्)॥ २२॥ सुमित्रिया न आप ओषधयः सन्तु
दुर्मित्रियस्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः। (वारुणं
यजुः)॥ १३॥ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् पश्येम
शरदः शतं जीवेम शरदः शतम्। शृणुयाम शरदः शतं प्रब्रवाम
शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्
[सौरं त्रैष्टुभम्]॥ २४॥ [य० ३६अ० आद्यन्तः]

मण्डलाध्यायः। ओं यदेतन्मण्डलं तपति तन्महदुक्थं

ता ऋचः स ऋचां लोकोऽथ यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन्मण्डले पुरुषः सोऽग्निस्तानि यजूंषि स यजुषां लोकः ॥ १ ॥ सैषा त्रय्येव विद्या तपति तद्धैतदप्यविद्वांस आहुस्त्रयी वा एषा विद्या तपतीति वाग्घैव तत्पश्यन्ती वदति ॥ २ ॥ स एष मृत्युः । य एष एतस्मिन्मण्डले पुरुषोऽथैतदमृतं यदेतदर्चिर्दीप्यते तस्मान्मृत्युर्न म्रियतेऽमृते ह्यन्तस्तस्मादु न दृश्यतेऽमृते ह्यन्तः ॥ ३ ॥ तदेष श्लोको भवति । अन्तरं मृत्योरमृतमित्यवरं ह्येतन्मृत्योरमृतं मृत्यावमृतमाहितमित्येतस्मिन् हि पुरुष एतन्मण्डलं प्रतिष्ठितं तपति मृत्युर्विवस्वन्तं वस्त इत्यसौ वा आदित्यो विवस्वानेषं ह्यहोरात्रे विवस्ते तमेष वस्ते सर्वतो ह्येनेन परिवृतो मृत्योरात्मा विवस्वतीत्येतस्मिन् हि मण्डल एतस्य पुरुषस्यात्मैतदेष श्लोको भवति ॥ ४ ॥ तयोर्वा एतयोः । उभयोरेतस्य चार्चिष एतस्य च पुरुषस्यैतन्मण्डलं प्रतिष्ठा तस्मान्महदुक्थं परस्मै न शंसेन्नेदेतां प्रतिष्ठां छिनदा इत्येतां ह स प्रतिष्ठां छिन्त्ते यो महदुक्थं परस्मै शंसति तस्मादुक्थशंसं भूयिष्ठं परिचक्षते प्रतिष्ठाच्छिन्नो हि भवतीत्यधिदैवतम् ॥ ५ ॥ अथाधियज्ञम् । यदेतन्मण्डलं तपतीत्ययं स रुक्मोऽथ यदेतदर्चिर्दीप्यत इदं तत्पुष्करपर्णमापो ह्येता आपः पुष्करपर्णमथ य एष एतस्मिन्मण्डले पुरुषोऽयमेव स योऽयं हिरण्मयः पुरुषस्तदेतदेवैतत् त्रयं संस्कृत्येहोपधत्ते तद्यज्ञस्यैवानु संस्थामूर्द्ध्वमुत्क्रामति तदेतमप्येति य एष तपति तस्मादग्निं नाद्रियेत परिहन्तुममुत्र ह्येष तदा भवतीत्यु एवाधियज्ञम् ॥ ६ ॥ अथाध्यात्मम् । यदेतन्मण्डलं तपति यश्चैष रुक्म इदं तच्छुक्लमक्षन्नथ यदेतदर्चिर्दीप्यते यच्चैतत् पुष्करपर्णमिदं तत्कृष्णमक्षन्नथ य एष एतस्मिन्मण्डले पुरुषो यश्चैष हिरण्मयः पुरुषोऽयमेव सः

योऽयं दक्षिणेऽक्षन् पुरुषः ॥ ७ ॥ स एष देवलोकं पृणा। तामेव सर्वोऽग्निरभिसम्पद्यते तस्यैतन्मिथुनं योऽयं सव्येऽक्षन् पुरुषोऽर्द्धमु हैतदात्मनो यन्मिथुनं यदा वै सह मिथुनेनाथ सर्वोऽथ कृत्स्नः कृत्स्नतायै तद्यक्ते द्वे भवतो द्वन्द्वं हि मिथुनं प्रजननं तस्माद्वे द्वे लोकं पृणी उपधीयेते तस्माद् द्वाभ्यां चितिं प्रणयन्ति ॥ ८ ॥ स एष एवेन्द्रः । योऽयं दक्षिणेऽक्षन् पुरुषोऽथेयमिन्द्राणी ताभ्यां देवा एतां विधृतिमकुर्वन्नासिकां तस्माज्जायाया अन्ते नाश्नीयाद्वीर्य्यवान् हास्माज्जायते वीर्य्यवन्तमु ह सा जनयति यस्या अन्ते नाश्नाति ॥ ९ ॥ तदेतद्देवव्रतम् । राजन्यबन्धवो मनुष्याणामनुतमां गोपायन्ति तस्मादु तेषु वीर्य्यवान् जायतेऽमृतवाका वयसां सा क्षिप्रश्येनं जनयति ॥ १० ॥ तौ हृदयस्याकाशं प्रत्यवेत्य मिथुनीभवतस्तौ यदा मिथुनस्यान्तं गच्छतोऽथ हैतत् पुरुषः स्वपिति तद्यथा हैवेदं मानुषस्य मिथुनस्यान्तं गत्वा संविद इव भवत्येवं हैवैतदसंविद इव भवति दैवं ह्येतन्मिथुनं परमो ह्येष आनन्दः ॥ ११ ॥ तस्मादेवं वित् स्वप्यात् । लोक्यं हैते एव तद्देवते मिथुनेन प्रियेण धाम्ना समर्द्धयति तस्मादुह स्वपन्तं धुरेव न बोधयन्नेदेते देवते मिथुनीभवन्त्यौ हिनसानीति तस्मादु है तत् सुषुपुषः श्लेष्माणमिव मुखं भवत्येते एव तद्देवते रेतः सिञ्चतस्तस्माद्रेतस इदं सर्वं सम्भवति यदिदं किञ्च ॥ १२ ॥ स एष एव मृत्युः । य एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषस्तस्य हैतस्य हृदये पादावतिहतौ तौ हैतदाच्छिद्योत्क्रामति स यदोत्क्रामत्यथ हैतत् पुरुषो म्रियते तस्मादु हैतत् प्रेतमाहुराच्छेद्यस्येति ॥ १३ ॥ एष उ एव प्राणः । एष हीमाः सर्वाः प्रजाः प्रणयति तस्यैते प्राणाः स्वाः स यदा स्वपित्यथैनमेते प्राणाः स्वा अपियन्ति तस्मात् स्वाप्ययः स्वाप्ययो ह वैतं स्वप्न इत्याचक्षते परोक्षं परोक्षकामा

हि देवाः ॥ १४ ॥ स एतैः सुप्तः। न कस्य च न वेद न मनसा संकल्पयति न वाचान्नस्य रसं विजानाति न प्राणेन गन्धं विजानाति न चक्षुषा पश्यति न श्रोत्रेण शृणोत्येतं ह्येते तदापीता भवन्ति स एष एकः सन् प्रजासु बहुधा व्याविष्टस्तस्मादेका सती लोकं पृणा सर्वमग्निमनुभवत्यथ यदेक एव तस्मादेका ॥ १५ ॥ तदाहुः। एको मृत्युर्बहवा इत्येकश्च बहवश्चेति ह ब्रूयाद् यदहासावमुत्र तेनैकोऽथ यदिह प्रजासु बहुधा व्याविष्टस्तेनो बहवः ॥ १६ ॥ तदाहुः। अन्तिके मृत्युर्दूरा इत्यन्तिके च दूरे चेति ह ब्रूयाद् यदहायमिहाध्यात्मं तेनान्तिकेऽथ यदसावमुत्र तेनो दूरे ॥ १७ ॥ तदेष श्लोको भवति। अन्ने भात्यपश्रितो रसानां संक्षरेऽमृत इति यदेतन्मण्डलं तपति तदन्नमथ य एष एतस्मिन्मण्डले पुरुषः सोऽत्ता स एतस्मिन्नन्नेऽपश्रितो भातीत्यधिदैवतम् ॥ १८ ॥ अथाध्यात्मम्। इदमेव शरीरमन्नमथ योऽयं दक्षिणेऽक्षन् पुरुषः सोऽत्ता स एतस्मिन्नन्नेऽपश्रितो भाति ॥ १९ ॥ तमेतमग्निरित्यध्वर्य्यव उपासते। यजुरित्येष हीदं सर्वं युनक्ति सामेति छन्दोगा एतस्मिन् हीदं सर्वं समानमुक्थमिति बह्वृचा एष हीदं सर्वमुत्थापयति यातुरिति यातुविद एतेन हीदं सर्वं यतं विषमिति सर्पाः सर्प इति सर्पविद ऊर्गिति देवारयिरिति मनुष्या मायेत्यसुराः स्वधेति पितरो देवजन इति देवजनविदो रूपमिति गन्धर्वा गन्ध इत्यप्सरसस्तं यथा यथोपासते तदेव भवति तद्धैनान् भूत्वावति तस्मादेतमेवंवित् सर्वैरेव तैरुपासीत सर्वं हैतद्भवति सर्वं हैनमेतद्भूत्वावति ॥ २० ॥ स एष त्रोष्टकोऽग्निः। ऋगेका यजुरेका सामैका तद्यां कां चात्र्चोपदधाति रुक्म एव तस्या आयतनमथ यां यजुषा पुरुष एव तस्या आयतनमथ यां साम्ना पुष्करपर्णमेव तस्या आयतन-

मेवं त्वैष्टकः ॥ २१ ॥ ते वा एते। उभे एष च रुक्म एतच्च पुष्करपर्णमेतं पुरुषमपीत उभे ह्यृक्सामे यजुरपीत एवन्त्वैके-ष्टकः ॥ २२ ॥ स एष एव मृत्युः। य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः स एष एवं विद आत्मा भवति स यदैवं विदस्माल्लोकात् प्रैत्यथैतमेवात्मानमभिसम्भवति सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति ॥ २३ ॥ (य० शतपथ ब्राह्मणे १०अ० ३प्र० )।

अथ सामवेदिपाठ्यसूक्तादीनि वामदेव्यं बृहत्साम ज्येष्ठ-साम रथन्तरम्। तथा पुरुषसूक्तञ्च रुद्रसूक्तं ततःपरम्। आज्यदोहानि सामानि शान्तिकं भारुडानि च ॥ पश्चिमे द्वार-पालौ तु पठेतां सामगौ तथा इति दानपारिजातोक्तानि। तत्र वामदेव्यं कया नश्चित्र इत्यस्यामृचि गीतं साम तच्च (२०४पृ० १२पं०) प्रागुक्तम्।

बृहत्साम त्वामिद्धि हवामहे इत्यस्यामृचि गीतं यथा त्वामिद्धो। हवा २ माहे। आ ३५३। होवा हा उवा ३ ॥ ऊ ३४पा सातौ। वाज। स्या ३ का २ रवः। आ ३५३ हो वा हा उवा ३। ऊ ३४पा त्वां वृत्रायि षु ( इं द्र सा २ त्पतिम्) आ ३५४ हो वा हाउ वा ३। ऊ ३४ पा। नरस्त्वां काष्ठा। सु अ२ वंतः। आ ३५ होवा हाउ वा ३। ऊ ३२३४ पा। १। त्वा मिद्धि हवामहेसातौ वाजो वा। स्या का १ रावा २ः। त्वां वृत्रायिषू इन्द्र सत्पतिन्नारा २ः त्वां का २३ ष्ठासु अर्वा २३ त १२३ उ भा २३ ४५ ई ड़ा। ( सा० वे० ५प्र० १अ० २८, २९ गा० ) गानाशक्तौ त्वामिद्धि हवामहे सातौ वाजस्य कारवः। त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्ववंतः। (सामार्चि० ३प्र० १अ० ५द० २क० ) इत्यस्य त्रिधा जपः।

ज्येष्ठसाम मूर्द्धानमित्यस्यामृचि गीतं (१८९ पृ०, २१ पं०)

प्रागुक्तं गानाशक्तौ मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम्। कविं सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः) (सामार्चिं० १प्र० १अ० २द० ५क०) इत्यस्य त्रिधा जपः।

रथन्तरम् अभित्वा शूर इत्यस्यामृचि गीतं तस्य वसिष्ठ ऋषिर्बृहती छन्द इन्द्रो देवता तत्प्रीतये जपे वि०। अभित्वा शू। र नोनुमो २ः। ओयि नो नु ३ माः। अ दुग्धा इ। व धायि नवा २ः। ओयिना ३ वाः। आयि शानमस्य जगतः। सुवा-र्दृंशाम्। आर्दृं ३ शाम्। आयिशानमि। न्द्र तास्थूषः। आ २, ३, स्थू, षा २, ३, ४, ३, ५ होवा स्थू षा २, ३, ४, ५ः। (सा० वे० ६प्र० १अ० २६ गा०) इत्येव पठनीयमिति केचित्। आभि त्वा शूर नो नु मो वा। आदुग्धा इव धेनवः ईशान-मस्य जगतः। सुवा २, ३, दृंशाम्। आईशानमस्य २, ३, इन्द्रा ३ तास्थू २, ३, ४, षाः। ओवा ६। हाउवा (सामवेद-स्योह्यगाने १ प्रथमगानम्) पाठ्यमिति बहवः। गाना-शक्तौ अभि त्वा शूर नो नुमोऽदुग्धा इव धेनवः। ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः। (सामार्चिं० ३प्र० १अ० ५द० १म०) इत्यस्य त्रिधा जपः।

पुरुषसूक्तम्। सहस्रशीर्षेत्यादिकं (१८५पृ० ३पं०) प्रागुक्तम्।

रुद्रसूक्तम्। आवो राजानमित्यादिकम्। (१८८पृ० २६पं०) प्रागुक्तम्।

आज्यदोहानि देवव्रतसंज्ञानि त्रीणि। (१९०पृ० १७पं०) प्रागुक्तानि।

शान्तिकम्। अबोध्याग्निरित्यादिकस्य प्रजापतिर्ऋषि-स्त्रिष्टुप् छन्द इन्द्रो देवता शान्तिपाठे वि०। अबोधिया। ग्नायिः समिधा जना २, नाम्। प्रतायि धे ३, नूम्। इवायती

मुषासम्। यह्वा ई २ वा। प्रवा २, यामुज्जिहाना: प्रभाना २, ३, वा:। सस्रते नाकमच्छ इडा २, ३,। भा ३, ४, ३,। ओ २, ३, ४, ५, ई। डा। (सा० वे० २प्र० २अ० १०गा०) गानाश्रतौ अबोध्याग्निः समिधा जनानां प्रतिधेनुमिवायती-मुषसम्। यह्वा इव प्रवयामुज्जिहानाः प्रभानवः सस्रते नाकमच्छ। (सामार्चि० १प्र० २अ० ८द० १म०) इत्यस्य त्रिधा जपः।

भारुण्डानि। इमं स्तोममित्यादिकस्य भारुण्ड ऋषिर्जगती-छन्दः जातवेदोऽग्निर्देवता शान्ति जपे वि०। इमं स्तो २,३,४, माम्। अर्हते २, ३, ४, जा। ता। वेदसे ३। होयि। रथमी २,३,४, वा। सम्माहे २, ३, ४, मा। मानीषया २। होयि। भद्राही २, ३, ४, ना: प्रमाती २, ३, ४, रा। स्यासंसदे ३। होयि। अग्नायि सा २, ३, ४, ख्यायि। मारायि या २, ३, ४ मा। वायं तवा ३। हो २, ३, ४, ५ ई डा॥ १॥ मूर्द्धा। हो हायि। नं दा २, ३, ४ यि वा:। अरतायिम्। पृथी ३व्या: वैश्वानराम्। ऋत आ। जातमग्नीम्। कविं संम्राजमति-थायिम्। जना २, ३ नाम्। आसन्न: पा। त्रा ३ ज्ञन। या ३, ४, ३। न्ता ३ दा ५ यि वा ६ ५ ६ :॥२॥ हो वा यि। मूर्द्धा हायि। नं दायि। वा : ३ अरातिं पृथिव्या:। इहो इया ३,। ई ३या। वैश्वानराम्। ऋत आ। जातमग्नीम्। इहो इया ३ ई ३ या। कविं संम्राजा ३ मति। थिं जनानाम्। इहो इया ३। ई ३ या। आसन्नः पा। त्रा ३ ज्ञन। यन्त देवा:। इहो इया ३। ई २। या २, ३, ४। ओ ५ होवा। ई २, ३, ४, ५॥ ३॥ विश्वत्। ओ हायि। आपो न पर्वतस्य पा २, ३, ष्ठात्। ओकथेभिरग्ने जनयन्त दा २, ३ यि वा:। तं त्वा गिर: सुष्टुतयो वाजया २, ३ न्तो। आजिन्न गायिर्ववा २, ३,

हा:। जायि ३। ग्यू २ रा २, ३, ४ ओ ५ हो वा। अश्वा २, ३, ४, ५ :॥ ४॥ हा। ययायि दिवो हायि। विल्वत्। आपो। न पर्वं। त स्य पृष्ठात्। हा। ययायि दिवो हायि। उक्थायि। भिरा। ग्ने ३ जन। यन्त देवा:। हा ययायि दिवो हायि। तं त्वा। गिरा:। सुष्टुतय:। वाजयन्ती। हा। ययायि दिवो हायि। आजीम्। न गायिर्वंवा २, ३, हा ३ :। जाये ३। ग्यू २ रा २, ३, ४, ओ ५, हो वं। अश्वा २, ३, ४, ५ :॥ ५॥ आवो राजा। नमध्वरस्य रुद्राम्। हो। ता। राम्। स। त्ययजा ३ म्। रोदसीयो:। अग्निं पु। रा। तनयि। त्नोरचित्तात्। हिरण्य। रू। पा ३ मव। सा ३, ४, ३ यि। का ३ णूँ ५ ध्वा ६, ५, ६ म्॥ ७॥ इन्धा ३, १, २, ३, ४ इ। हाउ हाउ हाउ। राजा समर्य्यो न। मोभो-रोभो:। ओभो:। यस्य ३, १, २, ३, ४। हाउ। ३। प्रतीक-माहुतं घृ। तायिना आयिना। आयिना। नरा ३, १, २, ३, ४ :। हाउ। ३। हव्येभिरीडते स। वाधा। वाधा:। वाधा:। आग्ना ३, १, २, ३, ४ यि :। हाउ। ३। अग्रसुषसा २, ३ मशाउ। वा ३। चो २, ३, ४, ५॥ ७॥ हौहो २,। हौहो २,। हौहोयि। इन्धे राजा समर्य्योना ३ मोभो २ :। ओ भो २ :। ओ भो २ :। यस्य प्रतीकमाहुतं घृ ३ तायि ना २। आयि ना २। आयि ना २। नरो हव्येभिरीडते सा ३ वाधा २ :। वाधा २ :। वाधा २ :। हौहो २। हौहो २। हौहोयि। आग्निरग्रसुषसा २, ३ मशाउ। वा ३। चो २, ३, ४, ५॥ ८॥ प्रकेतुना। बृहता या। तियग्नायि:। होयि होवा ३ होयि। आरोदसायि। वृषभो रो। रवीतायि। होयि होवा ३। होयि। दिवश्चिदा। न्तादुपमाम्। उदानाट्। होयि होवा ३ होयि। अपामुपा। स्थे महिषो। ववर्द्धा। होयि

होवा हा ३, १ उवा २, ३। दे ३। दिवा २, ३, ४, ५ म् ॥९॥ हा। हाओ ५। होयि। प्रा २, ३, ४ के। तुना। बृहता ३। यातिषग्नोः। हा। हाओ ५ होयि। आ २, ३, ४ रो। दसा यि। वृषभो ३। रोरवीती। हा। हाओ ५ होयि। दी २, ३, ४ वाः। चिदा। न्ता ३ दुप। मासुदानट्। हा हाओ ५ होयि। आ २, ३, ४ पाम्। उपा स्थे ३ महि। षो ववर्द्धा। हा। हाओ ५ हो। वा २,३,४ ओ ५ होवा। ए ३। दिवा २,३, ४,५ म् ॥१०॥ हाउ। ३। आग्नीम्। नरोः ३। दी ३ धिति। भिररण्योः। हाउ। ३। हास्ता। च्यूताम्। ३। जनय। त प्रश- स्तम्। हाउ। ३। दूरायि। दृशाम्। ३। गृहप। तिमथर्व्युम्। हाउ हाउ हाउ। वा। ई २,३,४,५ ॥११॥ हाउ। ३। आग्निम्। न रोः दी ३ धिति। भिररण्यो। ण्यो। ण्योः। हाउ। ३। हास्ता। च्युताम्। जनय। त प्रशस्तम्। स्तम्। स्तम्। हाउ। ३। दूरायि। दृशाम्। गृहपा। तिमथर्व्युम्। र्व्युम्। र्व्युम्। हाउ हाउ हाउ। वा। ई २, ३, ४, ५ ॥ १२ ॥ (साम० वे० २प्र० १, २ अर्द्ध ३८ अवधि १२ गा० ) एवं गानाशक्तौ इमं स्तोममर्हते जातवेदसे रथमीव संमहेमा मनीषया। भद्रा हि नः प्रमतिरस्यसंसद्यग्ने सख्ये मारिषाम वयं तव ॥ १ ॥ मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम्। कविं सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः ॥२॥ वित्व- दापो न पर्वतस्य पृष्ठादुक्थेभिरग्ने जनयन्त देवाः। तं त्वागिरः सुष्टुतयो वाजयन्त्याजिन्न गिर्ववाहो जिग्युरश्वाः ॥ ३ ॥ आवो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः। अग्निं पूरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥ ४ ॥ इन्धे राजा समर्य्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन। नरो हव्येभिरीलते सबाध आग्निरग्रमुषसामशोचि ॥५॥ प्रकेतुना बृहता यात्यग्नि-

रारोदसी वृषभो रोरवीति । दिवश्चिदन्ता दुपमामुदानडपा मुपस्थे महिषो ववर्द्ध ॥ ६ ॥ अग्निं नरो दीधितिभिररण्योर्हस्त-च्युतं जनयत प्रशस्तम् । दूरेदृशं गृहपतिमथर्व्युम् ॥७॥ (सामार्चि० १प्र० २अ० २द० ४अवधि १०प० म०) इत्येषां त्रिधा जपः ।

अथाथर्वणिकानां पाठ्यसूक्तानि अथर्वाङ्गिरसं नीलरुद्र देव्यपराजिता । मधूसूक्तं रौधसञ्च शान्तिकाध्यायमेव च । अथर्वाणौ द्वारपालौ पठेतामुत्तराश्रितौ इति दानपारिजातो-क्तानि बोध्यानि । तत्राथर्वणं यथा । अथर्वाणं पितरं देवबन्धुं मातुर्गर्भं पितुरसुं युवानम् ॥ य इमं यज्ञं मनसा चिकेत प्रणो वोचस्तमिहेह ब्रवः । (अथ ७अ० २क०) इति केचित् । छन्दोगाय वृहद्गायेत्यादिकमित्यन्ये तच्च संहितायामदृष्टत्वान्नो-द्धृतम् ।

आङ्गिरसम् । अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः । तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौम-नसे स्याम ॥ १ ॥ अङ्गिरोभिर्यज्ञियैरागहीह यम वैरूपैरिह मादयस्व । विवस्वन्तं हुवे यः पिता तेऽस्मिन् वर्हिष्या निषद्य ॥ २ ॥ इमं यम प्रस्तरमा हि रोहाङ्गिरोभिः पितृभिः संविदानः । आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषो मादयस्व ॥ ३ ॥ इत एत उदारुहन् दिवस्पृष्टान्यारुहन् । प्रभूर्जयो यथा पथा द्यामङ्गिरसो ययुः ॥ ४ ॥ (अथ० १८अ० १क० ५८, ५९, ६०, ६१म०) इति बहवः । अङ्गिरोऽसि जन्मनेत्यादिकमिति पाठ्यमित्यन्ये तच्च संहितायामदृष्टत्वान्नेह मया उद्धृतम् ।

नीलरुद्रम् । यां ते रुद्र इषूमास्यदङ्गेभ्यो हृदयाय च । इदं तामद्य त्वद्वयं विषूचीं विवृहामसि ॥ १ ॥ यास्ते शतं धमनयो-ऽङ्गान्यनुविष्ठिताः । तासां ते सर्वासां वयं निर्विषाणि ह्वया-

मसि ॥२॥ नमस्ते रुद्रास्यते नमः प्रतिहितायै। नमो विसृज्यमानायै नमो निपतितायै॥ ३ ॥ ( अथ० ६अ० ८ ·क० १, २, ३म० )।

अपराजिता देवी। परिवर्त्मानि सर्वत इन्द्रः पूषा च सस्रतुः। मुह्यन्त्वद्यामूः सेना अमित्राणां परस्तराम्॥ १ ॥ मूढ़ा अमित्राश्चरताशीर्षाण इवाहयः। तेषां वो अग्निमूढ़ानामिन्द्रो हन्तु वरंवरम्॥ २ ॥ ऐषु नह्य वृषाजिनं हरिणस्यभयं कृधि। पराङ्मित्र एषत्वर्वाची गौरुपेषतु॥ ३ ॥ ( अथ० ६अ० ६७क० १,२,३म० )

मधुसूक्तम् ( १८पृ० ७पं० ) प्रागुक्तम्।

रौधसम्। अभयं द्यावापृथिवी इहास्तु नोऽभयं सोमः सविता नः कृणोतु। अभयं नोऽस्तूर्वन्तरिक्षं सप्त ऋषीणाञ्च हविषाभयं नो अस्तु॥ १ ॥ अस्मै ग्रामाय प्रदिशश्चतस्र ऊर्जं सुभूतं स्वस्ति सविता नः कृणोतु। अशत्र्विन्द्रो अभयं नः कृणोत्वन्यत्र राज्ञामभियातु मन्युः॥ २ ॥ अनमित्रं नो अधरादनमित्रं न उत्तरात्। इन्द्रानमित्रं नः पश्चादनमित्रं पुरस्कृधि ॥ ३ ॥ ( अथ० ६अ० ४०क० १,२,३म० )

शान्त्यध्यायः। शन्न इन्द्राग्नी भवतामवोभिः शन्न इन्द्रावरुणा रातहव्या। शमिन्द्रासोमा सुविताय शंयोः शन्न इन्द्रापूषणा वाजसातौ॥ १ ॥ शन्नो भगः शमु नः शंसो अस्तु शन्नः पुरन्धिः शमु सन्तु रायः। शन्नः सत्यस्य सुयमस्य शंसः शन्नो अर्यमा पुरुजातो अस्तु॥ २ ॥ शन्नो धाता शमु धर्त्ता नो अस्तु शन्न उरूची भवतु स्वधाभिः। शं रोदसी बृहती शन्नो अद्रिः शन्नो देवानां सुहवानि सन्तु॥ ३ ॥ शन्नो अग्निर्ज्योतिरनीको अस्तु शन्नो मित्रावरुणावश्विना शम्। शं नः सुकृतां सुकृतानि सन्तु शं न इषिरो अभि वातु वातः॥ ४ ॥ शं नो द्यावापृथिवी

पूर्वहुतौ शमन्तरिक्षं दृशये नो अस्तु। शं न ओषधीर्वनिनो भवन्तु शं नो रजसस्पतिरस्तु जिष्णुः ॥ ५ ॥ शं न इन्द्रो वसुभिर्देवो अस्तु शमादित्येभिर्वरुणः सुशंसः। शं नो रुद्रो रुद्रेभिर्जलाषः शं नस्त्वष्टा ग्नाभिरिह शृणोतु ॥ ६ ॥ शं नः सोमो भवतु ब्रह्म शं नः शं नो ग्रावाणः शमु सन्तु यज्ञाः। शं नः स्वरूणां मितयो भवन्तु शं नः प्रस्वः शम्बस्तु वेदिः ॥ ७ ॥ शं नः सूर्य्य उरुचक्षा उदेतु शं नो भवन्तु प्रदिशश्चतस्रः। शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः ॥ ८ ॥ शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्काः। शं नो विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं शम्बस्तु वायुः ॥ ९ ॥ शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः। शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शंभुः ॥ १० ॥ १सूक्तम्।

शं नः सत्यस्य पतयो भवन्तु शं नो अर्वन्तः शमु सन्तु गावः। शं न ऋभवः सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु ॥ १ ॥ शं नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु। शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवाः शं नो अप्याः ॥ २ ॥ शं नो अज एकपाद्देवो अस्तु शमहिर्बुध्न्यः शं समुद्रः। शं नो अपां नपात्पेरुरस्तु शं नः पृश्निर्भवतु देवगोपा ॥ ३ ॥ आदित्या रुद्रा वसवो जुषन्तामिदं ब्रह्म क्रियमाणं नवीयः। शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः ॥ ४ ॥ ये देवाना मृत्विजो यज्ञियासो मनोर्यजत्रा अमृता ऋतज्ञाः। ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥ तदस्तु मित्रावरुणा तदग्ने शंयोरस्मभ्यमिदमस्तु शस्तम्। अशीमहि गाधमुत प्रतिष्ठां नमो दिवे बृहते सादनाय ॥ ६ ॥ २सूक्तम्।

उषा अप स्वसुस्तमः सं वर्त्तयति वर्त्तनिं सुजातता। अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः॥ १॥ ३सू० (अथ० १९अ० १०, ११ १२, सू०) इति पाठ्यसूक्तादि।

एवं सर्वमहादानादिसाधारणं कृत्यं समाप्य तुलादाने विशेषकृत्यं कुर्य्यात्। तत्रादौ वेदिमध्ये षोड़शारं चक्रं रचयेत्। यथा गुरुर्वेदिमध्ये त्रिहस्तदीर्घविस्तारं चतुरस्रं प्रसाध्य तत्र प्राक्पश्चिमयोर्दक्षिणोत्तरतश्च नव नव रेखाः कृत्वा चतुःषष्टि कोष्ठकं मण्डलं कुर्य्यात्। तत्र च सर्वाणि कोष्ठानि नवाङ्गुलदीर्घायामानि सम्पद्यन्ते। तत्र वाह्यासु पङ्क्तिषु चतुर्दिक्षु मध्ये पार्श्वयोः द्वे द्वे कोष्ठे परित्यज्य चत्वारि कोष्ठानि मार्जयित्वा चतुःकोष्ठानामेकतां संपाद्य स्वस्वसंलग्नो-पान्त्यपङ्क्तिषु द्वे द्वे मध्यकोष्ठे पार्श्वयोः त्रीणि त्रीणि कोष्ठानि त्यक्त्वा मार्जयेत्तेन चतुर्दिक्षु षट्षट्कोष्ठात्मकानि चत्वारि द्वाराणि जायन्ते। ततो मध्यस्थानि षोड़शकोष्ठानि प्रतिदिशं चत्वारि चत्वारि कोष्ठानि परित्यज्य मार्जयेत्। ततो वाह्य-पङ्क्तिषु एकैकं कोणगं कोष्ठमुत्सृज्य कोणकोष्ठद्वारपीठा-न्तरालवर्त्तीनि पञ्च पञ्च कोष्ठानि प्रतिदिशं मार्जयेत्। तेन मध्यचतुरस्रपीठस्य पादाः भवन्ति। ततो मध्यपीठमारभ्य क्रमशश्चत्वारि वृत्तानि कुर्य्यात्। तत्राद्ये चतुरङ्गुलो द्वितीये-ऽष्टाङ्गुलस्तृतीये चतुर्विंशत्यङ्गुलः चतुर्थे च षड्विंशत्यङ्गुलो व्यासः। तत्राद्यं चतुरङ्गुलव्यासकं वृत्तं कर्णिकारूपं पीतेन रजसा पूरयित्वा कर्णिकावधि रेखां सितेन रजसा विदध्यात्। तद्वहिरष्टाङ्गुलव्यासे द्वितीयवृत्ते क्रमेण पीतरक्तासितरजोभि सम्पादितमध्यमूलाग्राणि षोड़श केशराणि कृत्वा केशरावधि-रेखां सितेनैव रजसा अङ्गुलोन्नतां कुर्य्यात्। ततस्तद्वहिश्चतुर्विंश-त्यङ्गुलव्यासे तृतीयवृत्ते अष्टसु दिक्ष्वष्टौ पत्राणि सितरजसा

विधाय रक्ताग्राणि कुर्य्यात्। ततो दलान्तरेषु सितेन रजसा रेखां विधाय दलमध्यानि कृष्णेन रजसा पूरयेत्। तद्बहि-रेकाङ्गुलान्तरालां वहिर्वृत्तस्थचतुर्थरेखां सितरजसा सम्पाद्य तृतीयचतुर्थवृत्तद्वयान्तरस्थानेषु परितोऽष्टदलाग्रतत्सन्धिषु षोड़शभिः पत्रैः षोड़शधा विभज्य प्रतिभागं यवाकारान् षोड़शा-रान् श्यामपीतारुणश्वेतरजोभिः कल्पयित्वा तन्मध्यं यथा-योगं रजोभिः पूरयेत्। तद्बहिः सितपीतारुणश्यामहरिताः पञ्च रेखाः क्रमशो लिखेत्। तद्बहिः पीठक्षेत्रचतुरस्रं यथाशोभं रजोभिरलङ्कृत्य पीठावधिरेखां सितेन रजसा कृत्वा द्वारक्षेत्राणि पूर्वादितः पीतश्वेतश्यामहरितरजोभिः पूरयेत्। तत आग्ने-यादिकोणस्थकोष्ठचतुष्टयं क्रमेण लोहितहरितश्यामधवलैः पूरयित्वा आग्नेयादिपीठपादचतुष्टयं पञ्चकोष्ठात्मकं क्रमात् सितरक्तपीतकृष्णरजोभिः पूरयेत्। ततः सितेन रजसा अङ्गुलो-न्नतेन वहिश्चतुरस्ररेखां कुर्य्यात्। ततः प्राच्यां वज्रम्, आग्नेय्यां शक्तिं, दक्षिणे दण्डं, नैरृत्यां खड्गं, पश्चिमायां पाशं, वायव्यां ध्वजं, कौवेर्य्यां गदाम्, ऐशान्यां शूलं, तद्वामे चक्रं, पाशदक्षिणे पद्मञ्च लिखेत्। एवं महावेदिमध्ये षोड़शारं विलिख्य तत्रैव प्रागुक्ताः वक्ष्यमाणाश्च ईशादयो देवताः संपूजयेत्। ततो वेदि-मध्ये यथोक्तलक्षणां तुलां स्थापयेत्। सा च बहुप्रकारापि बहु-सम्प्रदायसिद्धा प्रदर्श्यते। प्रागुक्तमण्डपमध्यस्थकोष्ठरूपवेदिमध्ये पूर्वपश्चिमयोः शाकेङ्गुदीदेवदारुचन्दनादिसारकाष्ठनिर्म्मितम् उभयतः प्रादेशमात्रस्थूलं सप्तहस्तप्रमाणं स्तम्भद्वयं कृत्वा भूमौ निखातहस्तद्वयं चतुर्हस्तान्तराल स्थाने निखनेत्। तयोरुपरि हस्तमिता चूड़ा कार्य्या उपरिभागयोः हस्तमितं त्यक्त्वा उत्त-राङ्गकाष्ठाधारतायोग्यं विलं वा कार्य्यम्। तदुपरि तत्सजा-तीयकाष्ठघटितमुभयतो वितस्तिमितस्थूलं पञ्चहस्तं प्रान्तयो-

वितस्तिमात्रं त्यक्त्वा स्तम्भद्वयोपरिस्थितचूड़ाप्रवेशयोग्यविल-सहितं स्वप्रान्तयोर्वितस्तिमात्रचूडाभ्यां स्तम्भद्वयोपरिस्थित-विलयोः प्रवेशनयोग्यं वा उत्तराङ्गं स्थापयेत्। उत्तराङ्गमध्येऽधो-भागे तुलावलम्बनयोग्यं वड़िशाकृति लौहकटकमेकाङ्गुलपिण्डं षड़ङ्गुलमितं तिर्य्यक्लौहकीलकेन कृतयोजनं निवेशयेत्। उत्तराङ्गकाष्ठषड़ङ्गुलाधोभागे उक्तलौहकीलके तथाविधतुलोर्द्ध-स्थितषड़ङ्गुलकटकेन संयोज्य तुलामवलम्बयेत्। तुला तु प्रागुक्तकाष्ठमयी दशाङ्गुलसूत्रवेष्टनस्थूला वर्त्तुला सार्द्धचतुर्हस्त-दीर्घा प्रान्तयोः षड़ङ्गुलान्तरितभागे प्रागुक्तरूपषड़ङ्गुलकटक द्वयोपेता तद्बहिरुभयतश्चतुरङ्गुललौहपाशीसहिता मध्यभागे च ऊर्द्ध्वं तथाविधकटकसहिताधोभागेऽपि एकाङ्गुलस्थूला षड़ङ्गुल-चूड़ान्विततिर्य्यक्कीलकयोजितलौहकटकसहिता च कार्य्या। सा च उत्तराङ्गकाष्ठे दक्षिणोत्तरतो निवेशनीया। उत्तराङ्ग-काष्ठे च प्रागादिक्रमेण चतुरङ्गुलान्तरितदेशेषु सौवर्णपट्टादि-सूत्रैश्चतुर्विंशतिर्बन्धाः कार्य्याः। तेषु बन्धेषु च क्रमेण माषान्यून सुवर्णघटिता अङ्गुष्ठपर्व्वमात्रान्यूना वक्ष्यमाणध्यानानुरूपमूर्त्ति-मन्त ईशादयो देवाः स्थाप्याः। उत्तराङ्गोपरि च सौवर्णपट्ट-वस्त्रादिभिराच्छादयेत्। तुलादण्डमध्ये च षड़ङ्गुलकटकाधो-भागे तथैव सौवर्णवक्ष्यमाणध्यानानुरूपमूर्त्तिमान् गोविन्दः स्थाप्यः। तुलादण्डपार्श्वस्थकटकयोश्च त्रिसप्तत्यङ्गुलदीर्घा एकाङ्गुलस्थूलपञ्चचत्वारिंशत्कटकानुविद्धाश्चतस्रश्चतस्रो लौह-शृङ्खलास्तदभावे रज्जुः उपरिस्थकटकेन संयोज्य अवलम्बयेत्। तासु च शक्त्यनुसारेण दशाष्टषट्शतपलमितताम्रैः क्रमेण पञ्च-चतुःसार्द्धत्रिप्रादेशदीर्घविस्तारे प्रान्तेषु एकाङ्गुलोन्नते वलयाकार-चतुर्लौहकटकसहिते तदभावे सारदारुमये ताम्रान्वितकाष्ठ-निर्म्मिते सुवर्णयजमानधारणयोग्ये फलके कार्य्ये। ते च

प्रागुक्तशृङ्खलाधोभागस्थकटकैर्वलयाकारैः संयोज्य अवलम्बयेत् । तत्फलके च भूमेर्वितस्तिमात्रमूर्द्ध्वं यथा तिष्ठेतां तथालम्बयेत् । उत्तराङ्गकाष्ठतुलादण्डौ च पञ्चविंशत्यङ्गुलदीर्घैकाङ्गुलपिण्डेन स्थूलेन वासुकिनाम्ना लौहशृङ्खलेन बध्नीयात् । एवं तोरण-स्तम्भोत्तराङ्गसहितं तुलादण्डं विधाय तत्र बन्धस्थानस्थान् प्रागादिक्रमेण वक्ष्यमाणध्यानानुरूपमूर्त्तिकान् देवान् समावाह्य प्रणवादिचतुर्थ्यन्तस्वस्वनामभिर्यथाविभवमर्चयेत् । ते च देवा ध्यानावाहनस्थापनमन्त्रसहिताः क्रमशः प्रदर्श्यन्ते ।

तत्रेशस्य, पूर्वोत्तरे त्रिनेत्रश्च वृषभस्थस्त्रिशूलभृत् । कपाल-पाणिश्चन्द्रार्द्धभूषणः परमेश्वरः इति ध्यानलक्षणे । अग्न्युत्तारणा-दिना च तन्मूर्त्तिं संस्कृत्य प्राणप्रतिष्ठां विधायावाहयेत् । यथा पञ्चवक्त्र वृषारूढ प्रतिवक्त्रं त्रिलोचन । कपालशूलखट्वाङ्गिन् चन्द्रमौले सदाशिव । आगच्छ भगवन्नीश तुलाबन्धमलङ्कुरु । इत्यावाह्य तमीशानं (११२पृ० २६पं०) प्रागुक्तमुच्चार्य्य ओं भूर्भुवः स्वः ईशान इहागच्छेत्यादिना आवाह्य स्थापयेत् । ततो यथा-विभवं प्रणवादिनमोऽन्त नाममन्त्रेण पूजयेत् । एवं सर्वत्रार्षादि-स्मरणान्ते तत्तन्मन्त्रैः स्थापनं पूजनञ्च ।

सोमस्य, दशाश्वरथगः सोमो गदापाणिर्वरप्रदः । लक्षणं तथैव ध्यानम् । अत्रिपुत्र जगत्प्राण यमुनाविषयोद्भव । दशाश्व-वाहन श्वेत गदापाणे वरप्रद । आगच्छ भगवंश्चन्द्र तुलाबन्ध-मलङ्कुरु । इति आवाहनम् । सोमो धेनुम् ( ११२पृ० २१पं० ) प्रागुक्तेन स्थापनम् । २

मारुतस्य, धावन् हरिणपृष्ठस्थो ध्वजधारी समीरणः । लक्षणं ध्यानञ्च । मृगारूढ महाबाहो मारुत त्वं सदागते । ध्वजहस्त महाकाय तुलाबन्धमलङ्कुरु । वायो ये ते ( १५७ पृ० २पं० ) प्रागुक्तेन स्थापनम् । ३

रुद्रस्य, रक्तवर्णस्त्रिनयनो द्विभुजश्चन्द्रमौलिभृत्। जटिलश्च प्रकर्त्तव्यो रुद्रो बाणधनुर्द्धरः। लक्षणं ध्यानञ्च। वृषारूढ़ महादिव्य व्यक्ताव्यक्तस्वरूपधृक्। नागहार महारुद्र सृष्टि-संहारकारक। आगच्छ भगवन् रुद्र तुलाबन्धमलङ्कुरु। इमा रुद्रायेत्यादिना (११७पृ० ४पं०) प्रागुक्तेन स्थापनम्। ४

सूर्य्यस्य, रविः कार्य्यःशुभश्मश्रु सिन्दूरारुणसप्रभः। पद्मा-सनः पद्मकरो भूषितो रशनाधरः। लक्षणं ध्यानञ्च। पद्मासन पद्महस्त सिन्दूरारुणसप्रभ। रथारूढ़ महाबाहो काश्यपेय महाद्युते। आगच्छ भगवन् सूर्य्य तुलाबन्धमलङ्कुरु। वट्सूर्य्य इत्यादिना (१६०पृ० १८पं०) प्रागुक्तेन स्थापनम्। ५

विश्वकर्मणः विश्वकर्मा तु कर्त्तव्यः श्मश्रुलो रशनाधरः। सन्दंशपाणिर्द्विभुजस्तेजोमूर्त्तिधरो महान्। इति लक्षणं ध्यानञ्च। दंशपाणे महावीर सुचित्रकर्मकारक। विश्वकृत् विश्वधृक् च त्वं रशनामानदण्डधृक्। विश्वकर्मन्निहागच्छ तुलाबन्धमल-ङ्कुरु। विश्वकर्मन्नित्यस्य शासऋषिस्त्रिष्टुप् छन्दः विश्वकर्मा देवता तत्स्थापने वि०। विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम्। मुह्यन्त्वन्ये अभितः सपत्ना इहास्माकं मघवा सूरिरस्तु (यजु० काण्व० ८अ० ४५म०) इत्यनेन स्थापनम्। ६

गुरोः, देवदैत्यगुरू तद्वत् पीतश्वेतौ चतुर्भुजौ। दण्डिनौ वरदौ कार्य्यौ साक्षसूत्रकमण्डलू। इति लक्षणं ध्यानञ्च। दण्डाक्षसूत्रवरदकमण्डलुधर प्रभो चतुर्भुज हयारूढ़ पीताम्बर वृहस्पते। वाचस्पते समागच्छ तुलाबन्धमलङ्कुरु। वृहस्पते अतीत्यादिना (१५१पृ० १२पं०) प्रागुक्तेन स्थापनम्। ७

अङ्गिरोग्न्योः, कमण्डलुं स्रुचं चैव शक्तिं दर्भमपि क्रमात्। कलयन्त्यङ्गिरो नाम्नः कराग्राणि समन्ततः। आगच्छ भगवन्

विप्र तुलाबन्धमलङ्कुरु। त्वमग्ने इत्यस्यादित्य याज्ञवल्क्य-
ऋषी जगती छन्दः अङ्गिरा देवता तत्स्थापने वि०। त्वमग्ने
प्रथमोऽङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा। तव व्रते
कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः (य० ३४अ०
१२म०) इत्यनेन पाणिभिश्चाग्निनामा च कलयंस्तु जपस्रजम्।
शक्तिञ्च पुस्तकञ्चैव क्रमादेष कमण्डलुम्। आगच्छ भगवन्नग्ने
तुलाबन्धमलङ्कुरु। अग्निं दूतमित्यादिना (१११पृ० २६पं०)
प्रागुक्तेन च मिलितयोः स्थापनम्। ८

प्रजापतेः, यज्ञोपवीती हंसस्थ एकवक्त्रश्चतुर्भुजः। अक्षं स्रुवं
स्रुचं धत्ते कुण्डिकां च प्रजापतिः। लक्षणं ध्यानञ्च। प्रजापते
समागच्छ तुलाबन्धमलङ्कुरु। प्रजापते नेत्यादिना (११०पृ०
११पं०) प्रागुक्तेन स्थापनम्। ९

विश्वदेवानाम्, विश्वांश्च देवान् शरवाणपाणींस्त्रयोदशैतान्
द्विभुजान् विदध्यात्। इति लक्षणं ध्यानञ्च। शुभ्रवर्णा
महाकाया विद्याभरणभूषिताः। विश्वे देवाः समायाताः प्रकु-
रुध्वं तुलां शुभाम्। विश्वे देवास इत्यस्य मधुच्छन्दा ऋषि-
र्गायत्री छन्दो विश्वे देवा देवतास्तत्स्थापने वि०। विश्वे देवास
आगत शृणुताम इमं हवम्। एदं बर्हिर्निषीदत (य० ७अ०
३४ म०) इत्यनेन स्थापनम्। १०

जगद्विधातुः, हंसारूढो महाबाहुश्चतुर्वक्त्रश्चतुर्भुजः। विष्टरं
स्रुक्स्रुवं धत्ते ह्यक्षमालाञ्च कुण्डिकाम्। ध्यानलक्षणे। जग-
द्विधातरागच्छ तुलाबन्धमलङ्कुरु। विश्वकर्मेत्यस्य भुवनपुत्र-
विश्वकर्मा ऋषिस्त्रिष्टुप् छन्दः विश्वविधाता देवता तत्स्थापने
वि०। विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत
संदृक्। तेषामिष्टानि समिषा मदन्ति यत्रा सप्त ऋषीन् पर
एकमाहुः (य० १७अ० २६म०) इत्यनेन स्थापनम्। ११

पर्जन्यशम्भो:, पर्जन्यनामा विज्ञेयो गजवक्त्रत्रयान्वित:। यो धत्ते सर्वजीवात्मा वरं वीजञ्च शङ्ककम्। कुठारञ्च पयोजञ्च चिन्तारत्नं महाशुचि:। पाशं चक्रं किसलयं कुण्डीं च दशभि: करै:। ध्यानलक्षणे। पर्जन्यागच्छ भगवन् तुलाबन्धमलङ्कुरु। शन्नो वात इत्यस्य दध्यङ्ङाथर्वण ऋषिरनुष्टुप् छन्द: पर्जन्यो देवता तत्स्थापने वि०। शन्नो वात: पवतां शन्नस्तपतु सूर्य्य:। शन्न: कनिक्रदद्देव: पर्जन्यो अभिवर्षतु (य० ३६अ० १०म०) इति पञ्चवक्त्रं वृषारूढ़ं प्रतिवक्त्रं त्रिलोचनम्। कपालशूलखट्टाङ्गं शम्भुं खण्डेन्दुभूषणम्। उक्तलक्षणसम्पन्नं तुलाबन्धे निवेशयेत्। नम: शम्भवायेत्यस्य परमेष्ठिदेवताप्रजापतय ऋषयश्छन्दोऽभाव: शम्भुर्देवता तत्स्थापने वि०। नम: शम्भवाय च मयोभवाय च नम: शङ्कराय च मयस्कराय च नम: शिवाय च शिवतराय च (य० १६ अ० ४१ म०) इत्येताभ्यां मिलितयो: स्थापनम्। १२

पितॄणाम्, कुशविष्टरसंयुक्ता: पितर: पिण्डपाणिन:। तान् पितॄंस्तु समावाह्य तुलाबन्धे निवेशयेत्। नमो व इत्यादि यजुषां प्रजापतिऋषिश्छन्दोऽभाव: ऋतुरूपा: पितरो देवतास्तत् स्थापने वि०। नमो व: पितरो रसाय। नमो व: पितर: शोषाय। नमो व: पितरो जीवाय। नमो व: पितर: स्वधायै:। नमो व: पितरो घोराय। नमो व: पितरो मन्यवे। नमो व: पितर: पितरो नमो व: (य० २अ० ३२म०) एतैर्यजुर्भि: स्थापनम्। १३

सौम्यस्य, दशाश्ववाहनं सौम्यं गदापाणिं वरप्रदम्। उक्तलक्षणसम्पन्नं तुलाबन्धे निवेशयेत्। उद्बुध्यस्वाग्ने इत्यनेन (५३ पृ० २३पं०) प्रागुक्तेन स्थापनम्। १४

धर्मस्य, चतुर्वक्त्रश्चतुष्पादश्चतुर्बाहु: सिताम्बर:। सर्वाभरण-

वान् श्वेतो धर्मः कार्य्यो विजानता। दक्षिणे चाक्षमाला च तस्य वामे च पुस्तकम्। उक्तलक्षणकं धर्मं तुलाबन्धे निवेशयेत्। जङ्घाभ्यामित्यस्य प्रजापतिरृषिरेकपदा महापंक्तिश्छन्दो धर्मो देवता तत्स्थापने वि०। जङ्घाभ्यां पद्भ्यां धर्मोऽसि विशि राजा प्रतिष्ठितः ( य० २०अ० ९क० ) इत्यनेन स्थापनम्। १५

शक्रस्य, चतुर्दन्तगजारूढं वज्रपाणिं पुरन्दरम्। शचीपतिं वृत्रहरं सहस्रनयनोज्ज्वलम्। उक्तलक्षणसम्पन्नं तुलाबन्धे निवेशयेत्। त्रातारमित्यादिना ( ६५पृ० ६पं० ) प्रागुक्तेन स्थापनम्। १६

अश्विनोः, तरुणौ देवभिषजौ ह्यश्वारूढौ महाबलौ। तयोरौषधयः कार्य्या दिव्या दक्षिणहस्तयोः। वामयोः पुस्तके कार्य्ये दर्शनीयतमाविमौ। उक्तलक्षणसम्पन्नौ तुलाबन्धे निवेशयेत्। या वां कशेत्यादिना ( ६४पृ० २१पं० ) प्रागुक्तेन स्थापनम्। १७

जलेशस्य, वरुणं यादसामीशं लोकेशं पाशपाणिनम्। उक्तलक्षणसम्पन्नं तुलाबन्धे निवेशयेत्। तत्त्वा यामीत्यादिना ( ६६पृ० १६पं० ) प्रागुक्तेन स्थापनम्। १८

मित्रावरुणयोः, पद्मपाणिं तथा मित्रं कमलासनसंस्थितम्। द्विभुजं श्वेतमूर्त्तिञ्च सर्वभूतहिते रतम्। वरुणं सरितामीशं लोकेशं पाशपाणिनम्। उक्तलक्षणसम्पन्नौ तुलाबन्धे निवेशयेत्। अयं वां मित्रावरुणेत्यस्य गृत्समद ऋषिर्गायत्री छन्दः मित्रावरुणौ देवते तत्स्थापने वि०। अयं वां मित्रावरुणा सुतः सोम ऋतावृधा। ममेदिह श्रुतं हवम् (ऋ० २अ० २म० ४१सू० ४म० ) इत्यनेन स्थापनम्। १९

मरुद्गणानाम्, इन्द्रेण सप्तधा छिन्नं दितेः पुत्रं मरुद्गणम्। महावीर्य्यं महाबाहुं तुलाबन्धे निवेशयेत्। मरुतो यस्य हीत्यादिना ( ६९ पृ० २५ पं० ) प्रागुक्तेन स्थापनम्। २०

धनेशस्य, नरयुक्तविमानस्थं कुवेरं चोत्तरेश्वरम्। निधीनाञ्च पतिं श्रेष्ठं राजराजं महाबलम्। उक्तलक्षणसम्पन्नं तुलाबन्धे निवेशयेत्। वयं सोम व्रते तव मनस्तनूषु बिभ्रतः प्रजावन्तः सचेमहि इति मन्त्रेण (य० ३अ० ५६म०) स्थापनम्। २१

गन्धर्वस्य, वरदो भक्तलोकानां किरीटी कुण्डली गदी। गन्धर्वः पुरुषो ध्येयो वीणावाद्यरतः सदा। एवं गन्धर्वकं देवं तुलाबन्धे निवेशयेत्। यमेन दत्तमित्यस्य जमदग्निदीर्घतमसावृषी त्रिष्टुप् छन्दः गन्धर्वो देवता तत्स्थापने वि०। यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत्। गन्धर्वो अस्य रशनामगृभ्णात् सूरादश्वं वसवो निरतष्ट (य० २९अ० १३म०) इत्यनेन स्थापनम्। २२

जलेशस्य, ध्यानलक्षणे प्राग्वत् इमं मे इत्यादिना (१५६पृ० ३६पं०) प्रागुक्तेन स्थापनम्। २३

विष्णोः, प्रादक्षिण्यात् दक्षिणाधःकरादारभ्य नित्यशः। विष्णुं कौमोदकीपद्मशङ्खचक्रैरलङ्कृतम्। उक्तलक्षणसम्पन्नं तुलाबन्धे निवेशयेत्। विष्णोरराटमित्यादिना (१५२पृ० २३पं०) प्रागुक्तेन स्थापनम्। ऋष्यादिस्मरणं सर्वत्र प्राग्वत्। २४

गोविन्दस्य, विष्णुमूर्त्तिलक्षणवतीं तुलामध्यस्थकटकाधोभागे प्रादेशमितमौक्तिकमाल्यावलम्बितां सौवर्णीं सर्वमूर्त्तिभ्यो बृहतीं मूर्त्तिं सहस्रशीर्षेत्यादिना (१६३पृ० १३पं०) प्रागुक्तेन स्थापयेत्। २५

एवं तुलाबन्धस्थान् देवान् स्थापयित्वा अभ्यर्च्य स्तम्भपूजां कुर्य्यात् यथा निकामे इत्यस्य प्रजापतिर्ऋषिर्ग्छन्दोऽभावः ब्रह्मा देवता तुलास्तम्भपूजने वि०। निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् (य० २२अ० २२म०) इत्यनेन दधिक्राव्ण इत्यादिना (२१पृ०

१५पं० ) प्रागुक्तेन शिवो भवेत्यस्य त्रित ऋषिर्बृहती छन्दः अजो देवता तुलास्तम्भपूजने वि० । शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः । मा द्यावापृथिवी अभि शोचीर्मान्तरिक्षं मा वनस्पतीन् ( य० ११अ० ४५म० ) इत्यनेन यतो यत इत्यस्य दधङ्ङाथर्वण ऋषिरनुष्टुप् छन्दः विद्युत्स्तनयित्नुरूपौ भगवन्तौ देवते तुलास्तम्भपूजने वि० । यतोयतः समीहते ततो नो अभयं कुरु । शंनः कुरु प्रजाभ्योऽभयं नः पशुभ्यः ( य० ३६अ० २२म० ) इत्यनेन स्थिरो भवेत्यस्य त्रित ऋषिरनुष्टुप् छन्दः रासभो देवता तुलास्तम्भपूजने वि० । स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः ( य० ११अ० ४४म० ) इत्यनेन च मन्त्रेण प्रागादिक्रमेण स्तम्भद्वयं संपूजयेत् । ततस्तैरेव मन्त्रैस्तुलाप्रान्तद्वयं संपूज्य तुलादण्डस्य समन्ततः प्रागादिदिक्षु तूर्य्यादिध्वनिं कारयित्वा यजमानसहित आचार्य्यः पुष्पधूपबलीन् गृहीत्वा एह्येहि सर्वामरेत्यादिभिर्दशभिर्मन्त्रैरिन्द्रादीन् दश दिक्पालान् समावाह्याभ्यर्च्य बलिं दत्त्वा दीपान् प्रज्वालयेत् । ते च मन्त्रा यथा एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरामरेश । संवीज्यमानोऽप्सरसाङ्गणेन रक्षाध्वरन्नो भगवन्नमस्ते इन्द्राय नमः । एह्येहि सर्वामरहव्यवाह मुनिप्रवीरैरभितोऽभिजुष्ट । तेजोवता लोकगणेन सार्द्धं ममाध्वरं रक्ष कवे नमस्ते अग्नये नमः । एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चितधर्ममूर्त्ते । शुभाशुभानन्दशुचामधीश शिवाय नः पाहि मखं नमस्ते यमाय नमः । एह्येहि रक्षोगणनायकस्त्वं विशालवेतालपिशाचसंघैः । ममाध्वरं पाहि शुभाधिनाथ लोकेश्वरस्त्वं भगवन्नमस्ते ओं निर्ऋतये नमः । एह्येहि यादोगणवारिधीनां गणेन पर्जन्यमहाप्सरोभिः । विद्याधरेन्द्रामरगीयमानः पाहि त्वमस्मान् भगवन्नमस्ते ओं वरुणाय नमः । एह्येहि

यज्ञेऽध्वररक्षणाय मृगाधिरूढ़: सह सिद्धसंघै:। प्राणाधिप: काल कवे: सहाय गृहाण पूजां भगवन्नमस्ते ओँ वायवे नम:। एह्येहि यज्ञेश्वर यज्ञरक्षाम्। विधत्स्व नक्षत्रगणेन सार्द्धम्। सर्वौषधिभि: पितृभि: सहैव गृहाण पूजां भगवन्नमस्ते ओँ सोमाय नम:। एह्येहि विश्वेश्वर नस्त्रिशूल कपालखट्वाङ्गकरेण सार्द्धम्। लोकेश भूतेश्वर यज्ञसिद्धै गृहाण पूजां भगवन्नमस्ते ओँ ईशानाय नम:। एह्येहि पातालधरामरेन्द्र नागाङ्गनाकिन्नरगीयमान:। यक्षोरगेन्द्रामरलोकपूज्य: अनन्त रक्षाध्वरमस्मदीयम् अनन्ताय नम:। एह्येहि विश्वाधिपते सुरेन्द्रलोकेन सार्द्धं पितृदेवताभि:। सर्वस्य धातास्यमितप्रभावो विनाध्वरं न: सततं शिवाय ओँ ब्रह्मणे नम:। ततो भूतादिभ्य: प्रार्थना यथा त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च। ब्रह्मविष्णुशिवै: सार्द्धं रक्षां कुर्वन्तु तानि मे। देवदानवगन्धर्वा: यक्षराक्षसपन्नगा:। ऋषयो मनवो गावो देवमातर एव च। एते ममाध्वरे रक्षां प्रकुर्वन्तु मुदान्विता:। गौड़ास्त्वत्रैव समये गोविन्दादिप्रतिमानां गन्धादिद्रव्यद्वारा अधिवासनमपि कुर्वन्ति मूलग्रन्थेषु तस्यादर्शनादाचारमात्रमूलतैवेत्यवसीयते। अतस्तन्मन्त्रा नात्र प्रदर्शितास्ते तु यथाचारमेव गन्धद्वारामित्यादयो मन्त्रा: पाठ्या:। ततोऽधिवासनकर्मदक्षिणामभिलष्य दद्यात्। यथा देशकालकीर्त्तनान्ते अमुककर्माङ्गाधिवासनकर्मण: प्रतिष्ठार्थमिदं सुवर्णादि दक्षिणामाचार्य्यादिभ्यो यथानामगोत्रेभ्यो ब्राह्मणेभ्यो ददे। ततो यजमानेन उपवास: अशक्तौ नक्तभोजनं रात्रिजागरणञ्च कार्य्यम्। निरवकाशे सद्य एवाधिवासनैमिति हेमाद्रिप्रभृतय:।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचितायां तुलादानादिपद्धतौ सर्वकर्मसाधारणमधिवासप्रकरणं समाप्तम्।

अथ तुलापुरुषदानदिनकृत्यम् कृतनित्यक्रियो यजमानः (१०पृ० १२पं०) पूर्वोक्तविधानेन पुण्याहादिवाचनादिकं कुर्य्यात् । ततः ऋत्विगादयः स्वस्वकुण्डे स्थण्डिले वा महाव्याहृतिहोमपूर्वकं पूर्णाहुतिं स्वस्वशाखीयैः प्रागुक्तमन्त्रैर्जुहुयुः । ततो होमदक्षिणादि कर्मशेषञ्च समापयेयुः । सामर्थ्ये पूर्णपात्रं दक्षिणां दत्त्वा सूर्य्यादिग्रहाणां प्रत्येकं यज्ञसाङ्गतार्थं धेन्वादयो दक्षिणा देया । तत्र धेन्वादीनां न्यूनाधिकमूल्यवत्त्वे यावता मूल्येन समता भवेत् तावन्मूल्येन काञ्चनेन रजतादिना वा समता विधेया । अधिदेवतादीनां ततो न्यूनमूल्यं काञ्चनं तन्मूल्यं रजतादिकं वा प्रत्येकं दक्षिणा देयेति विशेषः । तत्र सूर्य्यादीनां धेनुदानादिमन्त्राः प्रदर्श्यन्ते ।

तत्र सूर्य्यस्य, कपिले सर्वभूतानां पूजनीयासि रोहिणि । तीर्थदेवमयी यस्मादतः शान्तिं प्रयच्छ मे । इत्युच्चार्य्य धेनुं सूर्य्ययागकर्त्रे ऋत्विजे दद्यात् । एवमुत्तरत्र ।

चन्द्रस्य, पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानाञ्च मङ्गलम् । विष्णुना विधृतो नित्यमतः शान्तिं प्रयच्छ मे । शङ्खम् ।

कुजस्य, धर्मस्त्वं वृषरूपेण जगदानन्दकारकः । अष्टमूर्त्तेरधिष्ठानमतः पाहि सदा हि नः । इति वृषम् ।

बुधस्य, हिरण्यगर्भगर्भस्थं हेमवीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे । सुवर्णम् ।

गुरोः, पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम् । प्रदानादस्य मे विष्णुः प्रीयतां भक्तवत्सलः । पीतवस्त्रम् ।

शुक्रस्य, विष्णुस्त्वमश्वरूपेण यस्मादमृतसम्भवः । चन्द्रार्कवाहनो नित्यमतः शान्तिं प्रयच्छ मे । अश्वम् ।

शनेः, यस्मात्त्वं पृथिवी देवी धेनुः केशववल्लभा । सर्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे । कृष्णधेनुम् ।

राहो:, यस्मादायस कर्माणि तवाधीनानि सर्वदा। हला गलायुधादीनि तत: शान्तिं प्रयच्छ मे। आयसम्।

केतूनां, यस्मात्त्वं सर्वयज्ञानामङ्गत्वेन व्यवस्थित:। यानं विभावसोर्नित्यमत: शान्तिं प्रयच्छ मे इति छागं दद्यात्।

तत: प्राङ्मुखमुदङ्मुखं वा यजमानं पत्नीकुटुम्बसहितं मण्डपद्वारग्रहसमीपस्थकलसोदकै: दूर्वापञ्चपल्लवसहितै: स्वस्वशाखीयैर्वैदिकै: सुरास्त्वामित्यादिभिश्च पौराणिकैर्मन्त्रैराचार्यसहिता ऋत्विजोऽभिषिञ्चेयु:। तत्र वैदिकमन्त्रा यथा आपोहिष्ठेत्यादि तिस्र: (१६७पृ० २०पं०) प्रागुक्ता:। त्रातारमिन्द्रमित्येका (१५६पृ० ८पं०) प्रागुक्ता। वरुणस्योत्तम्भनमसीति (३२पृ० ३पं०) प्रागुक्तानि पञ्च यजूंषि। एतान्यभिषेकार्थं विनियोगमुक्त्वा प्रागुक्तार्षादि स्मृत्वा पाठ्यानि। भग प्रणेतरित्यस्य आदित्ययाज्ञवल्क्यादृषी त्रिष्टुप् छन्दो भगो देवता अभिषेके वि०। भगप्रणेतर्भग सत्यराधो भगेमां धियमुदवा ददन्न:। भग प्र णो जनय गोभिरश्वैर्भग प्र नृभिर्नृवन्त: स्याम (य० ३४अ० ३६म०) समुद्राय त्वेत्यस्य प्रजापतिर्ऋषिश्छन्दोऽभाव: वातनामा देवता अभिषेके वि०। समुद्राय त्वा वाताय स्वाहा (य० ३८अ० ७क० १म०) पुनन्तु मेत्यादिकानां नवानां प्रजापत्यश्विसरस्वत्यऋषय: आद्ययो: अनुष्टुप् छन्द पितरो देवता, तृतीयाया गायत्री छन्द: अग्निर्देवता, चतुर्थ्या अनुष्टुप् छन्द देवयजनधीविश्वभूतजातवेदसो देवता:, पञ्चम्या गायत्री छन्द: अग्निर्देवता, षष्ठ्या गायत्रीछन्द: अग्निर्देवता तृतीयपादस्य ब्रह्मा देवता, सप्तम्या: गायत्री छन्द: सोमो देवता तृतीयपादस्य वायुर्देवता, अष्टम्या गायत्री छन्द: सविता देवता, नवम्यास्त्रिष्टुप् छन्द: विश्वे देवा देवता:, सर्वासामभिषेके वि०। पुनन्तु मा पितर: सोम्यास: पुनन्तु मा पितामहा:। पुनन्तु मा

प्रपितामहाः पवित्रेण शतायुषा ॥ १ ॥ पुनन्तु मा पितामहाः पुनन्तु मा प्रपितामहाः । पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥ २ ॥ अग्न आयूंषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ ३ ॥ पुनन्तु मा देवजना पुनन्तु मनसा धियः । पुनन्तु विश्वा भूतानि जातवेदः पुनीहि माम् ॥ ४ ॥ पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् । अग्ने क्रत्वा क्रतूँ-रनु ॥ ५ ॥ यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा ब्रह्म तेन पुनातु मा ॥ ६ ॥ पवमानः सो अद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु मा ॥ ७ ॥ उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः ॥ ८ ॥ वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः । तया मदन्त सधमादेषु वयं स्याम पतयो रयीणाम् ( य० १९ अ० ३७ अवधि ८ मन्त्राः ) आप्यायस्वेत्येका ( १०६ पृ० ५ पं० ) प्रागुक्ता । पञ्च नद्य इत्यस्य आदित्ययाज्ञवल्क्यादृषी अनुष्टुप् छन्दः सरस्वतीनदी देवता अभिषेके वि० । पञ्च नद्यः सरस्वतीमपि यन्ति सस्रोतसः । सरस्वती तु पञ्चधा सो देशेऽभवत् सरित् । ( य० ३४ अ० ११ म० ) शिरो म इत्यादिकानां पञ्चानां प्रजापतिर्ऋषि स्तृतीयाया गायत्री, अन्यायाः महापङ्क्तिः अन्यासामनुष्टुप् छन्दः, इन्द्रशरीरावयवा देवता अभिषेके वि० । शिरो मे श्रीर्यशो मुखं त्विषिः केशाश्च श्मश्रूणि । राजा मे प्राणो अमृतं सम्राट् चक्षुर्विराट् श्रोत्रम् ॥ १ ॥ जिह्वा मे भद्रं वाङ्महो मनो मन्युः स्वराड्भामः । मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सहः ॥ २ ॥ बाहू मे बलमिन्द्रियं हस्तौ मे कर्म वीर्य्यम् । आत्मा क्षत्रमुरो मम । ३ । पृष्ठीर्मे राष्ट्रमुदरमंसौ ग्रीवाश्च श्रोणी । ऊरू अरत्नी जानुनी विशो मे अङ्गानि सर्वतः । ४ । नाभिर्मे चित्तं विज्ञानं पायुर्मेऽपचितिर्भसत् । आनन्दनन्दावाण्डौ

मे भगः सौभाग्यं पसः। जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि विशि राजा प्रतिष्ठितः। ५। (य० २० अ० ५ अवधि ५ मन्त्राः) देवस्य त्वेत्यादिकानां तिसृणां प्रजापतिर्ऋषि, आद्यायाबृहती, अन्त्ययोर्ऋ गायत्र्यौ छन्दः सवित्रादयो लिङ्गोक्ता देवता अभिषेके वि०। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पुष्णो हस्ताभ्याम्। अश्विनो भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि। १। सरस्वत्यै भैषज्येन वीर्य्यायान्नाद्यायाभिषिञ्चामि। २। इन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि। ३। (य० २० अ० ३ क०) सोमस्य त्वेत्यस्य वरुणऋषिश्छन्दोऽभावो यजमानो देवता अभिषेके वि०। सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेर्भ्राजसा सूर्य्यस्य वर्चसेन्द्रस्येन्द्रियेण। क्षत्राणां क्षत्रपतिरेध्यति दिद्यून् पाहि इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय। इममसुष्य पुत्रमसुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजा। (य० १० अ० १७क०) यजुः सर्वत्र गीयते इत्युक्तेर्यजुर्वेदविहिता एवाभिषेकमन्त्रा दर्शिता अन्यवेदीयास्तु विस्तरभयान्नोद्धृताः। पौराणिकास्तु। सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः। वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते। आखण्डलोऽग्निर्भगवान् यमो वै नैर्ऋतिस्तथा॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः। ब्रह्मणा सहिताः सर्वे दिक्पाला पान्तु ते सदा॥ कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः। बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिश्च मातरः एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः। आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः॥ ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः। देवदानवगन्धर्वा यक्षराक्षसपन्नगाः॥

ऋषयो मनवो गावो देवमातर एव च । देवपत्न्यो द्रुमा नागा-
दैत्याश्चाप्सरसाङ्गणाः ॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि
च । आयुधानि च रत्नानि कालस्यावयवाश्च ये ॥ सरितः
सागराः शैलास्तीर्थानि जलदा नदाः । एते त्वामभिषिञ्चन्तु
सर्वकामार्थसिद्धये इति । एवमभिषिक्तः सपत्नीको यजमानः सर्वौ-
षध्यादिभिरुद्वर्त्तिताङ्गः शुद्धोदकेन स्नातः स्नानवस्त्रं त्यजेत् ।

ततो गृहीतकुसुमाञ्जलिः सफलकां तोरणावलम्बितां तुलां
त्रिः प्रदक्षिणीकृत्य अभिमन्त्रयेत् यथा नमस्ते सर्वदेवानां
शक्तिस्त्वं सर्वमाश्रिता । साक्षिभूता जगद्धात्री निर्मिता विश्व-
योनिना । एकतः सर्वसत्यानि तथानृतशतानि च । धर्माधर्म-
कृतां मध्ये स्थापितासि जगद्धिते । त्वं तुले सर्वभूतानां प्रमाण-
मिह कीर्त्तिता । मां तोलयन्ती संसारादुद्धरस्व नमोऽस्तु ते ।
योऽसौ तत्त्वाधिपो देवः पुरुषः पञ्चविंशकः । स एषोऽधिष्ठितो
देवि त्वयि तस्मान्नमो नमः । इति । ततस्तुलास्थगोविन्दमप्यनु-
मन्त्रयेत् यथा नमो नमस्ते गोविन्द तुलापुरुषसंज्ञक । त्वं हरे
तारयस्वास्मानस्मात् संसारसागरात् । ततस्तत्प्रतिमां संपूज्य
पुनस्तुलां प्रदक्षिणीकृत्य सखड्गचर्मकवचालङ्कारो हैमौ प्रागुक्त-
लक्षणौ धर्मराजसूर्य्यौ संपूज्य वामदक्षिणकराभ्यामादाय तुला-
मध्यस्थावलम्बितगोविन्दप्रतिमां पश्यन् उत्तरफलकमारुह्य
प्राङ्मुख उपविशेत् । तत्रारोहणसमये रुद्राध्यायो जप्यः । स
यथा नमस्त इत्यादिषोडशर्चस्य प्रथमानुवाकस्य प्रागुक्तार्षादि-
कम् अध्यायस्य परमेष्टिदेवप्रजापतय ऋषयश्छन्दांसि तु प्रति-
मन्त्रं वक्ष्यमाणानि अध्यायस्य रुद्रो देवता तत्प्रीत्यर्थं पाठे
वि० । इत्यार्षादिकं स्मृत्वा ( १६२पृ० ४पं० ) प्रागुक्तं षोड-
शर्चं पठित्वा ततोऽध्यायशेषं पठेत् । ( तत्र नमो हिरण्य-
बाहवे इत्यारभ्य नमः नमः पर्णाय चेत्यन्तानि सर्वाणि यजुष्का-

च्छुन्दोरहितानि) नमो हिरण्यबाहवे सेनान्ये दिशाञ्च पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो नमः शष्पिञ्जराय त्विषीमते पथीनां पतये नमो नमो हरिकेशायोपवीतिने पुष्टानां पतये नमः॥ १७॥ नमो बभ्लुशाय व्याधिनेऽन्नानां पतये नमो नमो भवस्य हेत्यै जगतां पतये नमो नमो रुद्रायाततायिने क्षेत्राणां पतये नमो नमः सूतायाहन्त्यै वनानां पतये नमः॥ १८॥ नमो रोहिताय स्थपतये वृक्षाणां पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमः। १९। नमः कृत्स्नायता धावते सत्वनां पतये नमो नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमो नमो निषङ्गिणे ककुभाय स्तेनानां पतये नमो नमो निचेरवे परिचरायारण्यानां पतये नमः।२०। नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो नमः सृकायिभ्यो जिघांसद्भ्यो मुष्णतां पतये नमो नमोऽसिमद्भ्यो नक्तं चरद्भ्यो विकृन्तानां पतये नमः। २१। नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो नम इषुमद्भ्यो धन्वायिभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो नम आयच्छद्भ्योऽस्यद्भ्यश्च वो नमः॥ २२॥ नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमः शयानेभ्य आसीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः॥ २३॥ नमः सभाभ्यः सभापतिभ्यश्च वो नमो नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नम आव्याधिनीभ्यो विध्यन्तीभ्यश्च वो नमो नम उगणाभ्यस्तृंहतीभ्यश्च वो नमः॥२४॥ नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरू-

पेभ्यो विश्वरूपेभ्यश्च वो नमः ॥ २५ ॥ नमः सेनाभ्यः सेनानि-
भ्यश्च वो नमो नमो रथिभ्यो अरथेभ्यश्च वो नमो नमः क्षत्तृभ्यः
संग्रहीतृभ्यश्च वो नमो नमो महद्भ्यो अर्भकेभ्यश्च वो नमः ॥२६॥
नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च
वो नमो नमो निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो नमः श्वनिभ्यो
मृगयुभ्यश्च वो नमः ॥ २७ ॥ नमः श्वभ्यः श्वपतिभ्यश्च वो नमो
नमो भवाय च रुद्राय च शर्वाय च पशुपतये च नमो नीलग्री-
वाय च शितिकण्ठाय च ॥ २८ ॥ नमः कपर्दिने च व्युप्तकेशाय
च नमः सहस्राक्षाय च शतधन्वने च नमो गिरिशयाय च
शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च ॥ २९ ॥ नमो
ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय
च सवृधे च नमोऽग्रयाय च प्रथमाय च ॥ ३० ॥ नम आशवे
चाजिराय च नमः शीघ्रयाय च शीभ्याय च नम ऊर्म्याय चाव-
स्वन्याय च नमो नादेयाय च द्वीप्याय च ॥ ३१ ॥ नमो ज्येष्ठाय
च कनिष्ठाय च नमः पूर्वजाय चापरजाय न नमो मध्यमाय
चापगल्भाय च नमो जघन्याय च बुध्नयाय च ॥ ३२ ॥ नमः
सोभ्याय च प्रतिसर्य्याय च नमो याम्याय च क्षेम्याय च नमः
श्लोक्याय चावसान्याय च नम उर्वर्य्याय च खल्याय च ॥३३॥ नमो
वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नम आशु-
षेणाय चाशुरथाय च नमः शूराय चावभेदिने च ॥ ३४ ॥ नमो
बिल्मिने च कवचिने च नमो वर्म्मिणे च वरूथिने च नमः
श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च ॥३५॥
नमो धृष्णवे च प्रमृशाय च नमो निषङ्गिणे चेषुधिमते च नम-
स्तीक्ष्णेषवे चायुधिने च नमः सायुधाय च सुधन्विने च ॥३६॥
नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः
कुल्याय च सरस्याय च नमो नादेयाय च वैशन्ताय च ॥ ३७ ॥

नमः कूप्याय चावट्याय च नमो वीध्र्याय चातप्याय च नमो मेघ्याय च विद्युत्याय च नमो वर्ष्याय चावर्ष्याय च ॥ ३८ ॥ नमो वात्याय च रेष्म्याय च नमो वास्तव्याय च वास्तुपाय च नमः सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च ॥ ३९ ॥ नमः शंगवे च पशुपतये च नम उग्राय च भीमाय च नम अग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय ॥ ४० ॥ नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥ ४१ ॥ नमः पार्य्याय चावार्य्याय च नमः प्रतरणाय चोत्तरणाय च नमस्तीर्थ्याय च कूल्याय च नमः शष्प्याय च फेन्याय च ॥ ४२ ॥ नमः सिकत्याय च प्रवाह्याय च नमः किंशिलाय च क्षयणाय च नमः कपर्दिने च पुलस्तये च नम इरिण्याय च प्रपथ्याय च ॥ ४३ ॥ नमो व्रज्याय च गोष्ठ्याय च नमस्तल्प्याय च गेह्याय च नमो हृदय्याय च निवेष्प्याय च नमः काट्याय च गह्वरेष्ठाय च ॥ ४४ ॥ नमः शुष्क्याय च हरित्याय च नमः पांसव्याय च रजस्याय च नमो लोप्याय चोलप्याय च नम ऊर्व्याय च सूर्व्याय च ॥ ४५ ॥ नमः पर्णाय च पर्णशदाय च नम उद्गुरमाणाय चाभिघ्नते च नम आखिदते च प्रखिदते च नम इषुकृद्भ्यो धनुष्कृद्भ्यश्च वो नमो नमो वः किरिकेभ्यो देवानां हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नम आनिर्हतेभ्यः ॥ ४६ ॥ (इतःपरं सप्त ऋचस्तत्राद्योपरिष्टाद्बृहती सप्ताष्टदशद्वादशार्णपादा) द्रापे अन्धसस्पते दरिद्र नील लोहित। आसां प्रजानामेषां पशूनां माभेर्मा रोङ् मो च नः किं च नाममत् ॥ ४७ ॥ (जगती) इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः। यथाशमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥४८॥

( अनुष्टुप् ) या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी। शिवा रुतस्य भेषजी तया नो मृड़ जीवसे ॥ ४९ ॥ ( त्रिष्टुप् ) परि नो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः। अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृड़ ॥ ५० ॥ ( एकोना यवमध्या त्रिष्टुप् ) मीढुष्टम शिवतम शिवो नः सुमना भव। परमे वृक्ष आयुधं निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि ॥ ५१ ॥ ( इतःपरं द्वे अनुष्टुभौ ) विकिरिद्र विलोहित नमस्ते अस्तु भगवः। यास्ते सहस्रं हेतयोऽन्यमस्मन्निवपन्तु ताः ॥ ५२ ॥ सहस्राणि सहस्रशो बाह्वोस्तव हेतयः। तासामीशानो भगवः पराचीना मुखा कृधि ॥ ५३ ॥ ( अवतानसंज्ञा अनुष्टुभो दश बहुरुद्रदेवताः ) असंख्याताः सहस्राणि ये रुद्रा अधि भूम्याम्। तेषां सहस्रयोजनेऽवधन्वानि तन्मसि ॥ ५४ ॥ अस्मिन्महत्यर्णवे अन्तरिक्षे भवा अधि। तेषां स० ॥ ५५ ॥ नीलग्रीवाः शितिकण्ठा दिवं रुद्रा उपश्रिताः। तेषां स० ॥ ५६ ॥ नीलग्रीवाः शितिकण्ठाः सर्वा अधःक्षमाचराः। तेषां स० ॥ ५७ ॥ ये वृक्षेषु सष्पिञ्जरा नीलग्रीवा विलोहिताः। तेषां स० ॥ ५८ ॥ ये भूताना मधिपतयो विशिखासः कपर्दिनः। तेषां स० ॥ ५९ ॥ ये पथां पथिरक्षस ऐलबृदा आयुर्युधः। तेषां स० ॥ ६० ॥ ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः। तेषां स० ॥ ६१ ॥ येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्। तेषां स० ॥ ६२ ॥ य एतावन्तश्च भूयांसश्च दिशो रुद्रा वितस्थिरे। तेषां स० ॥ ६३ ॥ ( त्रीणि यजूंषि ) नमोऽस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः। तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः। तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृड़यन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥ ६४ ॥ नमोऽस्तु रुद्रेभ्यो येऽन्त-

रिक्षे येषां वात इषव:। तेभ्यो दश प्राचीरित्यादि ॥ ६५ ॥ नमोऽस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषव:। तेभ्यो दश प्राचीरित्यादि ॥ ६६ ॥ य० १६ अध्याय:।

अथ तुलापुरुषद्रव्यदानप्रयोग:। ऋत्विगादय: दक्षिणे फलके यावता सुवर्णादिना भूमित: फलकमुत्तिष्ठेत् तावत् सुवर्णं रजतं ताम्रं वा दद्यु:। ततो यजमानो मुहूर्त्तमात्रं तत्र स्थित्वा ततोऽवतीर्य्य पुनन्तु मां देवजना इत्यादि (२८६पृ० ४पं०) प्रागुक्तं तृचं पठित्वा पौराणिकमन्त्रान् पठेत्। यथा नमस्ते सर्वभूतानां साक्षीभूते सनातनि। पितामहेन देवि त्वं निर्म्मिता परमेष्ठिना। त्वया धृतं जगत् सर्वं वहि:स्थावरजङ्गमम्। सर्वभूतात्मभूतस्थे नमस्ते विश्वधारिणि। एवं तुलामभिमन्त्र्य दानीयद्रव्यम्—यथा पवित्रमतुल्यमपत्यं जातवेदस:। तथा स्वेन पवित्रेण सुवर्णं हि पुनातु माम्॥ रुद्रस्य तु महत्तेज: कार्त्तिकेयस्य सम्भव:। तथा स्वेन पवित्रेण सुवर्णं हि पुनातु माम्॥ येथाग्निर्देवता: सर्वा: सुवर्णं हि त्वदात्मकम्। तथा स्वेन पवित्रेण सुवर्णं हि पुनातु माम्॥ यत्कृतं मे स्वकायेन मनसा वचसाथ वा। दुष्कृतं तत् सुवर्णस्थं यातु मुक्तिं परां शुभाम्॥ इत्यनेन स्वर्णम्—रुद्रनेत्रसमुद्भूतं रजतं पितृवल्लभम्। प्रदानादस्य मे रुद्र: प्रीयतां भक्तवत्सल इति रजतम्—ताम्रं पुष्टिकरं सर्वदेवप्रियकरं शुभम्। सर्वरक्षाकरं नित्यमत: शान्तिं प्रयच्छ मे इति ताम्रमभिमन्त्रयेत्। एवं पठित्वा तुलितद्रव्यार्द्धमाचार्य्याय दद्यात्। अपरमर्द्धमृत्विग्भ्य: एवमुत्सर्गद्वयमित्येके॥ गुर्वृत्विग्भ्य: सर्वेभ्य एक एवोत्सर्ग इत्यन्ये। अथोत्सर्गप्रयोग:। वेदिपश्चिमे उपविश्य प्राङ्मुख आचान्त: कर्त्ता तुलाद्रव्यं तुलसीकुशोदकेन प्रोक्ष्याभ्यर्च्य च साक्षतकुशजलपाणिर्देशादिकं स्मृत्वा कामनायामिकेत्रमन्वन्तरकालावच्छिन्नप्रतिलोकपाल-

स्थाननिवासपूर्वक-सुवर्णकिङ्किणीजालविमानकरणकानेकाप्सरः पूजासहित श्रीविष्णुपुरगमनपूर्वककल्पकोटिशतकालावच्छिन्न श्रीविष्णुपुराधिकरणकावस्थानानन्तरभूपालमौलि-मणिरञ्जित-पादपीठश्रद्धान्वितयज्ञसहस्रयाजित्वयुक्त प्रतापजितसर्वमहीप-लोकभूमण्डलाधिकरणकराजत्वकामः श्रीलक्ष्मीसहितविष्णु-प्रीतिकामः सर्वपापक्षयकामो वाऽमुकप्रवरान्वितामुकगोत्रामुक-शर्माहमेतत् स्वशरीरसमतोलितसुवर्णादिद्रव्यार्द्धादि अग्निदैवतं रजतं चेत् चन्द्रदैवतं ताम्रं चेत् सूर्य्यदैवतं तुभ्यममुकगोत्राया-मुकदेवशर्मणे आचार्य्याय त्वदनुज्ञया नानाशाखाध्यायिभ्यो नानागोत्रेभ्यो नानाशर्मभ्यः अन्येभ्यश्च ब्राह्मणेभ्यो दीनानाथेभ्यश्च संप्रददे इति करस्थं जलं गुरुहस्ते निक्षिपेत्। स चाचार्य्यः ब्राह्मणे यजमाने, सोङ्कारमुच्चैःस्वरेण, क्षत्रिये निरोङ्कारं मन्द-स्वरेण, वैश्ये उपांशु, शूद्रे तु मनसा. स्वस्तीत्युक्त्वा सावित्रीं पठित्वा द्रव्यं स्पृष्ट्वा स्वस्वशाखोक्तां कामस्तुतिं पठेत्। पुन-र्देशादि संकीर्त्त्य अपरं द्रव्यार्द्धमग्निदैवतममुकामुकगोत्रेभ्यो-ऽमुकामुकशाखाध्यायिभ्यः अमुकामुकशर्मभ्यः ऋत्विग्भ्यः जापकेभ्यो द्वारपालेभ्यो युष्मभ्यं युष्मदनुज्ञया नानाशाखा-ध्यायिभ्यः नानाशर्मभ्योऽन्येभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च संप्रददे इति ऋत्विगादिहस्ते जलं निक्षिपेत्। ते च पूर्ववत्-स्वस्तीत्यादि पठेयुः॥ तत्र यजुः सर्वत्र गीयते इत्युक्तेर्विस्तर-भयादितरवेदीयाः कामस्तुतीरपहाय यजुर्वेदीयाभिधीयते। तत्रादौ ग्रहणमन्त्रः। देवस्यत्वेत्यादि (१२पृ० १८प०) प्रागुक्तः। ततः कोऽदादित्यादिकां कामस्तुतिं पठेत्। यथा कोऽदादित्यस्य प्रजापतिर्ऋषिरनुष्टुप् छन्दः कामो देवता कामस्तुतिपाठे वि०। कोऽदात् कस्मा अदात् कामोऽदात् कामायादात्। कामो दाता कामः प्रतिग्रहीता कामैतत्ते॥

ततः वरणक्रमेण गुरुकराधःस्थितोत्तानदक्षिणकरेभ्यः सर्वेभ्यो युगपदेव वा गुर्वादीनां गोत्राद्युच्चार्य्य पूर्ववदेव दक्षिणोत्सर्गः। पुनर्देशादि स्मृत्वा कृतैतत् तुलापुरुषमहादानप्रतिष्ठार्थं दक्षिणां शतं सुवर्णानि ग्रामरत्नवस्त्रगोऽश्वगजादीनि अमुकामुकगोत्रेभ्यो-ऽमुकामुकशर्मभ्यः अमुकामुकशाखाध्यायिभ्यो गुर्वृत्विग्भ्यः युष्मभ्यमहं संप्रददे इति।

अथ शक्त्यनुसारेण दक्षिणादाननियमः। शतनिष्काधिकं श्रेष्ठं तदर्द्धं मध्यमं स्मृतम्। तस्याप्यर्द्धं कनिष्ठं स्यात् त्रिविधं तत्र कल्पितम्। स्वर्णदाने तावत्परिमितं रजतं रजतादिदाने च तावत् स्वर्णं देयम्। तथा, वस्त्रयुग्मं तथोष्णीषं कुण्डलं कण्ठभूषणम्। अङ्गुलीभूषणञ्चैव मणिबन्धस्य भूषणम्। एतानि चैव सर्वाणि प्रारम्भे धर्मकर्मणि। पुरोहिताय दत्त्वाथ ऋत्विग्भ्यः संप्रदापयेत्। पूर्वोक्तभूषणं सर्वं सोष्णीषं वस्त्र-संयुतम्। दद्यादेतत् प्रयोक्तृभ्यः कुण्डलाच्छादनं बुधः। दक्षिणां च शतं चार्द्धं विप्राय प्रतिपादयेत्। ऋत्विजाञ्चैव सर्वेषां शतनिष्कान् प्रदापयेत्। यागोपकरणद्रव्यमाचार्य्याय प्रदा-पयेदिति।

अथवा हिरण्यादिना गुर्वादीन् परितोष्यान्येभ्यो दीना-नाथविशिष्टेभ्यो ब्राह्मणेभ्यस्तुलाद्रव्यं दद्यात्। ततः सहस्रं शतं वा ब्राह्मणान् भोजयेत्। ततः स्वस्वशाखीयं शान्त्यादिकं पाठ-यित्वावाहितग्रहादीन् पूजयित्वा प्रणम्य विसर्जयेत्। यथा उत्तिष्ठेत्यस्यादित्ययाज्ञवल्क्यऋषी बृहती छन्दः बृहस्पतिर्देवता देवविसर्जने वि०। उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वे महे। उप प्रयन्तु मरुतः सुदानव इन्द्रः प्राशूर्भवा स चा ( य० ३४अ० ५६म० ) इति पठित्वा देवानुत्थाप्य विसर्जयेत्। तत्रादौ गच्छ त्वं भगवन्नग्ने स्वस्थानं कुण्डमध्यतः। हव्यमादाय देवेभ्यः शीघ्र

देहि प्रसीद मे। गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर। यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशनेति मन्त्राभ्यां वह्निं विसृज्य सर्वा मण्डपदेवता द्वारदेवताश्च, यान्तु देवगणाः सर्वे पूजामादाय याज्ञिकात् (२ पार्थिवीम्)। इष्टकामसमृद्ध्यर्थं पुनरागमनाय चेत्यनेन पुष्पाक्षतप्रक्षेपेण विसर्जयेत्। ततो हैमप्रतिमाः सोपकरणमण्डपञ्चाचार्य्यायाभिलप्य दद्यात्। यज्ञपात्रपूजोपकरणानि तु संकल्पाभावेनैव तस्मै दद्यात् तस्य प्रतिपत्तिरूपत्वेन न संकल्पापेक्षा। ततो न्यूनातिरिक्ततापरिहारार्थं विष्णुस्मरणमहं करिष्ये इत्यभिलप्य विष्णुस्मरणं कुर्य्यात् प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिरित्युक्तेः। ततः मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्पितम्। तत्सर्वं पूर्णतां यातु भास्करस्य प्रसादत इति पठेत्। ततोऽनेन मत्कृतेनामुकद्रव्यतुलापुरुषदानेन भगवान् विष्णुः प्रीयतामिति वदेत्। ततोऽञ्जलिं बद्ध्वा विप्रान् प्रार्थयेत भोः श्रीमन्तो ब्राह्मणा मया यत् तुलापुरुषाख्यं कर्म कृत तद्देशतः कालतो मन्त्रतो भक्तितो द्रव्यतः शक्तितो यन्न्यूनातिरिक्तं तद्विष्णुस्मरणात् भवतां ब्राह्मणानां वचनात् परिपूर्णमस्त्विति भवन्तो ब्रूयुः इति यजमानेन प्रार्थिते परिपूर्णमस्त्विति सर्वे विप्रा वदेयुः। ततो ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्। ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिनेत्युच्चार्य्य कर्मफलं ब्रह्मणि अर्पयेत्। ततो नमो विश्वसृजे तुभ्यं विश्वरूपात्मने नमः। परमानन्दरूप त्वं पाहि संसारकर्दमात्। तेजोमयमिमं ध्येयं सदा पश्यन्ति योगिनः। स त्वं भवादुद्धर मां देहि मुक्तिं सनातनीम्। यथाहि भूरादिसमस्तलोकास्त्वयि स्थिता देववरेश नित्या। अमी सुरा ये सुरलोकपाला ब्रह्मादयो देवगणाश्च नित्यम्। त्वत्संप्रसा-

दादहमप्यशेषपापैर्विमुक्तस्तु यथा भवेयम्। तथा कुरु त्वं सततं मुरारे विष्णो नृसिंहेश नमो नमस्ते। ओं तत्सदित्युच्चार्य्य ब्राह्मणाशिषो गृह्णीयात्। ततः कुटुम्बबन्धुभिः सार्द्धं मिष्टान्नादिकं भुञ्जीत। रौप्यसुवर्णदानाशक्तौ नानाद्रव्यैः साध्यानुसारेण समपरिमाणैर्विषमपरिमाणैर्वा सुवर्णसहितैस्तुलापुरुषं दातुं शक्यते।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिततुलादानादिपद्धतौ तुलादानपद्धतिः समाप्ता।

सम्प्रति षोड़श महादानानां नामलक्षणानि प्रदर्श्यन्ते। हेमाद्रिदानपारिजातादौ मत्स्यपुराणम् आद्यन्तु सर्वदानानां १ तुलापुरुषसंज्ञितम्। २ हिरण्यगर्भदानञ्च ३ ब्रह्माण्डं तदनन्तरम्। ४ कल्पपादपदानञ्च ५ गोसहस्रञ्च पञ्चमम्। ६ हिरण्यकामधेनुश्च ७ हिरण्याश्वस्तथैव च। ८ हिरण्याश्वरथस्तद्वत् ९ हेमहस्तिरथस्तथा। १० पञ्चलाङ्गलकं तद्वत् ११ धरादानं ततः परम्। १२ द्वादशं विश्वचक्रञ्च ततः १३ कल्पलतात्मकम्। १४ सप्तसागरदानञ्च १५ रत्नधेनुस्तथैव च। १६ महाभूतघटस्तद्वत् षोड़शः परिकीर्त्तितः। एषु च सर्वेषु, विनायकादिग्रहलोकपालवस्वष्टकादित्यमरुद्गणानाम् ब्रह्माच्युतेशार्कवनस्पतीनां स्वमन्त्रतो होमचतुष्टयं स्यात्। जप्यानि सूक्तानि तथैव चेषामनुक्रमेणापि यथास्वरूपम्। इति मत्स्यपुराणेन पूज्या देवताः प्रदर्शिताः। विनायकादीत्यादिपदेन दुर्गावाय्वाकाशाश्विनीकुमाराणामेकादशरुद्राणाञ्च ग्रहणमिति हेमाद्रिप्रभृतयस्तेनात्रैकपञ्चाशद्देवताः प्रत्येकदेवतात्वपक्षे पञ्चाशीतिर्दवास्तेषाञ्च वेदचतुष्टयोक्तभिन्नभिन्नमन्त्रैर्होमाद्धोमचतुष्टयम्। तेषामेवानुक्रमेण ऋग्वेदादिक्रमेण सूक्तान्यपि यथास्वरूपं यथा वेदे पठितानि तथैव पाठ्यानि न पुनर्गायत्रीजपादिप्रतिनिध्या-

दिना जप्यानि यथास्वरूपमिति पदस्वरसादेवञ्च सूक्तजपाङ्गकत्वे सति विनायकाद्येकपञ्चाशद्दैवीयचतुर्वेदोक्त स्वस्वमन्त्रकरणक-होम चतुष्टयाङ्गकत्वं महादानत्वमिति सिद्धम्। अतस्तुलादि-दानेऽवश्यमेव तेषां सूक्तानि जप्यानि महादानताप्रयोजकता-दृशसूक्तजपाभावे चतुर्वेदीयभिन्नभिन्नमन्त्रकरणकहोमाभावे च तेषां स्वरूपमेव न सिद्ध्यति। सपिण्डीकरणे पिण्डदानाभावे प्रधानानिष्पत्तेरिव तेषामपि स्वरूपानिष्पत्तेर्न फलावाप्तिः। किञ्चैतेषां काम्यदानतया काम्ये सर्वशक्तिमानधिकारी भवतीति न्यायादङ्गवैगुण्ये विशेषतः स्वरूपाधायकाङ्गवैगुण्ये न फलसिद्धि-रित्यास्तां विस्तरः। धान्याचलादिदानेषु तु कुण्डमण्डपादि-सत्त्वेऽपि सूक्तजपाङ्गकत्वाभावात् चतुर्वेदीयमन्त्रकरणकविनय-कादिहोमाभावाच्च न महादानत्वमिति बोध्यम्।

एतेषु षोड़शसु महादानेषु तुलापुरुषदानमेवाधुनैतद्देशे प्रायशो बहुभिर्यथाकथञ्चिद्विधानेनैव क्रियमाणतयोपलच्यते तथा तुलापुरुषदानविधानमेव सर्वमहादानविधानप्रकृतीभूत-मन्यानि तु तद्विकृतीभूतानीत्यतः प्रथमं तुलापुरुषदानमेव स-प्रपञ्चमभिहितम्। अनेनैव विधानेन सर्वाण्यन्यानि कार्य्याणि। तत्रायं विशेषः पुण्याहवाचनादिस्तम्भमण्डपसंस्कारमातृपूजा-नान्दीमुखश्राद्धाद्यधिवासनान्तं कर्म सर्वेष्वपि समानं केवलं ततोऽधिकदेवतापूजादिकं तत्तद्विशेषदानेषु वर्त्तते तन्निरूपणं तेषां पञ्चदशानां दानानां स्वरूपनिरूपणञ्चाग्रे द्वितीयखण्डे करिष्यामः। धान्याचलादिदानेषु तु कुण्डमण्डपादिकर्मधिवास-नान्तं कर्मानेनैव विधानेन प्रायशः सर्वं कार्य्यम्। किन्तु तत्र, ग्रहाणां लोकपालानां ब्रह्मादीनाञ्च सर्वशः स्वमन्त्रेणैव सर्वेषु होमः शैलेषु पठ्यते इति, पूर्वेण हस्तमितमत्र विधाय कुण्ड-मिति च हेमाद्रिप्रभृतिधृतब्रह्मपुराणीयैनैककुण्डमात्रं विहित-

भेतस्तत्र स्वशाखोक्तवेदमन्त्रैणैक एव होमस्तथा तत्र विनायकादयो द्वात्रिंशद्दे वा द्वादशादित्या एकादशरुद्रा दश लोकपाला अष्टौ वसवः ब्रह्मविष्णुशिवसूर्य्याश्चत्वारः कामदेवधनदहंसकामधेनवश्चत्वारश्च इत्येता देवता आसामेवावहनपूजनहोमादिकं स्वस्वशाखोक्तमन्त्रैः कार्य्यं तत्र च प्रायशो बहूनामेव देवानां मन्त्रास्तुलादानविधाने दर्शिता अवशिष्टानां तु ध्यानपूजावाहनमन्त्राश्चाग्रे वक्ष्यन्ते। किञ्च तेषु दानमण्डपयागयोर्द्वाविव मण्डपौ कार्य्यौ एकस्मिन् मण्डपे समावेशाभावात्। अतएव धाम्नो धामान्तरं त्यक्त्वा मण्डपान्मण्डपान्तरमित्युक्तम्। तथा च मण्डपद्वये कर्त्तव्ये एकमण्डपपरिमाणान्तरितदेशे एव द्वितीयमण्डपं कार्य्यमिति प्रतिपादितमाकरे यजमानाभिषेकाद्यशेषोदीच्यकर्माणि तु सर्वत्र धान्याचलादौ समानानीति बोध्यम्।

अथेदानीं सर्वकर्मसाधारणनवग्रहयागविधानपद्धतिः प्रदर्श्यते। तत्र नवग्रहयागस्त्रिविधः अयुतहोमो लक्षहोमः कोटिहोमश्चेति तत्र लक्षहोमे विशेषो विस्तरभिया नोक्तः। तत्रायुतहोमविधानमुच्यते। श्रीकामादिर्ग्रहपीड़ायामुत्पातादौ शान्तिकामोऽभिचरन् वा नवग्रहमखाख्यमयुतहोमं कुर्य्यात्। यथा प्रशस्तेऽहनि शुभे मुहूर्त्ते संभृतोपकरणो यजमानः कृतनित्यक्रियः अद्येत्यादिना देशकालकीर्त्तनान्ते अमुककामोऽयुतहोमेनाहं नवग्रहयागं करिष्ये इति संकल्प्य पुण्याहवाचनादिकं (६पृ० २१पं०) मातृकापूजा नान्दीश्राद्धादिकञ्च (६पृ० ३पं०) प्रागुक्तदिशा विधाय चतुरो ब्राह्मणान् ऋत्विगादीन् (८ पृ० २पं०) प्रागुक्तदिशा वृत्वा स्वशाखोक्तदिशा मधुपर्केणार्हयेत्। तत आचार्य्यो यजमानगृहादुत्तरपूर्वदिशि प्रागुदक्प्रवणायां भूमौ दशहस्तमष्टहस्तं वा मण्डपं (१पृ० २२पं०) पूर्वोक्तदिशा विधाय तत्र भूमिसंस्कारं (१९पृ० ९पं०) प्राग्वत् कृत्वा तत्र-

त्यस्तम्भतोरणध्वजपताकादिषु तत्तद्देवताः (२२पृ० २५पं०) आवाह्य संपूज्य च तस्य मध्यभागे हस्तमात्रकुण्डं स्थण्डिलं वा विधाय तस्येशानदेशे वेदिकोपरि ग्रहदेवतादिस्थापनाय हस्तावस्तारदीर्घां वितस्त्युच्छ्रायां वप्रद्वयावृतां चतुरस्रामुदक्प्रवणां वेदिं कुर्य्यात्। तस्याः प्रथमो वप्रो द्व्यङ्गुलोच्छ्रायो द्वितीयस्त्र्यङ्गुलोच्छ्रायः द्वावपि द्व्यङ्गुलविस्तारवन्तौ कार्य्यौ। ततः (२१पृ० ३पं०) प्रागुक्तदिशा पञ्चगव्येन मण्डपं शोधयित्वा तत्र कुण्डस्य स्थण्डिलस्य वा मध्ये सिकतोपकार्णे स्वगृह्योक्तविधिना वह्निं स्थापयेत्। तत्र वह्निस्थापनप्रकारा वेदभेदेन प्राग्दर्शिताः। ततो ग्रहवेद्यां (४५ पृ० १८पं०) प्रागुक्तदिशा सर्वतोभद्रमण्डलं विलिख्य तत्र मण्डलदेवता आवाह्याभ्यर्च्य तदुपरि वस्त्रं प्रसार्य्य, तन्मण्डललिखनतदङ्गदेवतापूजनमन्त्रेण वा कुलाचारानुसारेण (५२पृ० १९पं० अवधि) प्रागुक्तदिशा ग्रहमण्डलं विलिख्य तत्र रव्यादीन् नवग्रहान् प्रधानदेवता ईश्वरादीन् नवाधिदेवान् वह्न्यादीन् नवप्रत्यधिदेवता विनायकदुर्गावायुकाशाश्विनीकुमाराख्यान् पञ्च लोकपालांश्च इति द्वात्रिंशद्देवान् समावाह्य स्थापयित्वा मनोजूतिरित्यादिना (३३पृ० १७पं०) तेषां प्राणप्रतिष्ठां कुर्य्यात्। अत्र इन्द्रादयो दिक्पाला अपि दश स्थाप्या इति केचित्। तेषामावाहनादिकमपि (६१ पृ० ५पं० अवधि) प्राग्वत् कार्य्यम्।

तत्र द्वात्रिंशद्देवानामावाहनमन्त्राः पौराणिकास्तुलादानादिष्वविगेऽपि ग्राह्याः किन्तु ग्रहयज्ञे तेषां स्थापनादौ कश्चिद्विशेषोऽस्तीति प्रमाणतस्तत् प्रदर्श्यते। विधानपारिजाते मात्स्ये देवानां स्थापनं कुर्य्यान्मण्डलेषु विधानतः। अग्निप्रणयनं कृत्वा वेद्यामावाहयेत् सुरान्। देवतास्तत्र संस्थाप्या विंशतिर्द्वादशाधिकाः। आदित्याभिमुखाः सर्वे साधिप्रत्यधि-

दैवता इत्युपक्रम्य अग्निं दूतं (६०पृ० १पं०) सहस्रांशोः सोमाय अप्सु म (१०९पृ० १५पं०) इत्यथ। स्योना पृथिवी (८० पृ० २०पं०) भौमाय, इदं विष्णु (८१पृ० ३ पं०) बुधाय च। इन्द्रं विश्वाः (१११पृ० २२पं०) सुरेज्याय शुक्र-ज्योतिः सिताय च। प्रजापते (११०पृ० १६पं) ऽथ सौराय आयं गौ (१८३पृ० १५पं०) रिति राहवे केतवे ब्रह्म जज्ञानं (१०८पृ० २६पं०) स्वैस्वैर्मन्त्रैः प्रतिष्ठिताः। एते च प्रायशो दर्शितपंक्तिपृष्ठादौ प्रकरणान्तरे उक्तास्तेऽत्र द्रष्टव्याः। किन्तु शुक्रज्योतिरित्यस्य कुत्राप्यनुक्तौ स एवात्राभिधीयते यथा शुक्र-ज्योतिरित्यस्य प्रजापतिर्ऋषिरुष्णिक् छन्दः शुक्रो देवता शुक्रस्थापने विनियोग इति स्मृत्वा। शुक्रज्योतिश्च चित्र-ज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च। शुक्रश्च ऋतपाश्चात्यंहाः। (य० १७अ० ८०म०) अत्र स्वैस्वैर्मन्त्रैरित्युक्तेः स्वस्वमन्त्रा अपि प्रतिष्ठायां पाठ्यास्ते चावाहनप्रकरणे दर्शिताः। अथाधि-देवादिस्थापनमन्त्राः विधानपारिजाते स्कान्दे ग्रहयज्ञोपक्रमे अथ स्थापनमन्त्रांश्च कथयाम्यनुपूर्वशः। ईश्वरं त्र्यम्बकं (५६पृ० २५पं०) चेति श्रीश्च ते चेति (५७पृ० ६पं०) पार्वतीम्। यद-क्रन्द इति (५७पृ १६पं०) स्कन्दं विष्णुं विष्णोरराटतः (५७पृ० २६पं०)। आ ब्रह्मन्निति (५८पृ० १२पं०) ब्रह्माणं सजोषे-न्द्रेति (५८पृ० २४पं०) वासवम्। यमाय त्वेति (५९पृ० ८पं०) च यमं कालं कार्षिरसीति च (५९पृ० १४पं०)। चित्रावस्विति (५९पृ० २०पं०) मन्त्रेण चित्रगुप्तं निधापयेत्। अग्निं दूत-मिति (६०पृ० १पं०) ह्यग्नेर्वरुणस्य उदुत्तमम् (११२पृ० १२पं०) स्योना पृथिवी (८०पृ० २०पं०) मेदिन्या इदं विष्णुस्तु (६१पृ० १पं०) विष्णवे। इन्द्रायेन्दो (१८३पृ० १६पं०) इतीन्द्रस्य उत्तानपर्णे (११०पृ० ६पं०) शचीस्थितौ। प्रजापते (११०पृ०

११पृ० ) प्रजेशस्य एष ब्रह्मेति (१८५पृ० ४पं०) वै विधेः। मन्त्रो नमोऽस्तु सर्पेभ्यः ( ६२पृ० १२पं० ) सर्पाणां स्थापने मतः। एते च मन्त्रास्तुलादानाङ्गावाहनमन्त्रैः प्रायशः समानाः किन्तु क्वचित् विशिष्टास्तेऽपि प्रकरणान्तरे चिह्नितपत्रादौ दर्शिताः। विनायकादिलोकपालानां स्थापने तु ग्रहयज्ञे विशेषतो मन्त्रानभिधानात् तुलादानाङ्गमन्त्रा एव ग्राह्याः ते च पूर्वं ( ६३पृ० ११पं० अवधि) दर्शिताः। दिक्पालानां देवतात्वपक्षेऽपि (६५पृ० १पं० अवधि) पूर्ववदेव स्थापनम्। ततः ( ७१पृ० १७पं अवधि ) प्रागुक्तदिशा ध्यात्वा द्वात्रिंशद्देवताः दिक्पालसहिता वा षोड़शभिरुपचारैः प्रत्येकं पूजयेत्। ग्रहाणां पूजायां चन्दन, पुष्प, विशिष्टवर्णवस्त्र, धूप, नैवेद्येषु विशेषः प्रागुक्तदिशाऽवसेयः। ततः शान्तिकलसं स्थापयेत्। यथा वेद्या ईशानभागेऽव्रणत्वादिलक्षणोपेतं तीर्थजलपूरितं पञ्चपल्लवरत्नमृत्तिकासर्वौषधियुक्तं शान्तिकुम्भं ( ३२पृ० १पं० अवधि ) प्रागुक्तविधिना प्रतिष्ठाप्य तत्र वरुणमावाह्य संपूज्य दध्यक्षतादिशोभितं कृत्वा तत्र गङ्गाद्या आवाहयेत्। यथा गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च। सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः। आयान्तु यजमानस्य दुरितक्षयकारणात्। इत्यावाह्य देवदानवेत्यादिना ( ३३पृ० २०पं० ) प्रागुक्तेन प्रार्थयेत। ततो वह्निसंस्कारादिकं स्वस्वशाखोक्तविधिना कार्य्यम्। तत आघाराज्यभागौ हुत्वा प्रधानहोमसंकल्पं कुर्य्यात्। यथा अद्येत्यादिदेशकालकीर्त्तनान्ते अमुककामनया मत्संकल्पितग्रहयागकर्मणि सूर्य्यादिनवग्रहरूपप्रधानदेवतानाम् ईश्वरादिनवाधिदेवतानाम् अग्न्यादिनवप्रत्यधिदेवतानां गणेशादिपञ्चलोकपालानाञ्च दिक्पालसहितानां वामुकामुकसंख्याभिः कोटिसमिद्भिरेकैकया चाज्याहुत्या एकैकया च चर्वाहुत्या तिलाज्याद्युपकल्पितद्रव्येण

दशभिर्दशभिराहुतिभिरयुतसंख्याभिश्च व्यस्तसमस्तमहाव्याहृतिभिस्तिलाज्याहुतिभिः शेषेण स्विष्टकृतश्च होमकर्माहं करिष्ये इति संकल्पं कृत्वा चरुं श्रपयेत्। तत्र सूर्य्याय त्वा जुष्टं निर्वपामीत्यादिप्रयोगेण द्वात्रिंशद्देवतानां प्रत्येकं चतुरश्चतुरो मुष्टीन् निर्वपेत्। ततः सूर्य्याय त्वा जुष्टं प्रोक्षामीत्यादिप्रयोगेण प्रोक्ष्य सर्वमेकत्र उदूखले स्थापयित्वा मुषलेणावहत्य शूर्पेण स्फोटयित्वा पुनरद्भिः प्रोक्ष्य समं विभज्य इदममुष्य सूर्य्यस्येत्यादिप्रयोगेण प्रतिदैवतं निर्दिशेत्। ततः क्रमेण द्वात्रिंशत्स्थालीषु, नवग्रहाणां नवसु स्थालीषु, ईश्वरादीनामन्येषामेकस्थाल्यामित्थं दशसु स्थालीषु, सर्वेषां चैकस्थाल्यां वा स्तोकं स्तोकं पचेत्। ततो वह्नौ दर्भं दत्त्वा यजमानः सर्वमेव होमद्रव्यजातं मनसा देवताश्च ध्यात्वा इदं यथादैवतमस्तु इत्यनेन त्यजेत्। ततो ग्रहाणामष्टाधिकसहस्रमष्टाधिकशतमष्टाविंशतिं वार्कादिसमिधो हुत्वा तदन्येषान्तु ततो न्यूनसंख्यया पलाशादिसमिद्भिर्होमं कुर्य्यात्। यथा यजमानस्तृष्ट आचार्य्य आघाराज्यभागौ हुत्वा महाव्याहृतिहोमं च विधाय सूर्य्याद्युद्देशेन प्रादेशमात्राः कनिष्ठाङ्गुलस्थूला व्रणादिरहिता अर्कादिसमिधस्त्रिमध्वक्ता आकृष्णेनेत्यादिमन्त्रैः संकल्पितसंख्यानुसारेण हुत्वा ततो न्यूनसंख्ययेश्वराद्युद्देशेन खदिरौदुम्बरपलाशाद्यन्यतमसमिधस्तत्तन्मन्त्रैर्जुहुयात्। ततः स्रुवेणैकैकाज्याहुतिं तत्तन्मन्त्रैः सर्वेभ्यो जुहुयात्। ततोऽवदानधर्मेणैकैकां चर्वाहुतिं तथैव जुहुयात्। जमदग्नीनां तु चरुं पञ्चावदातं कुर्य्यादिति विशेषः। ततः सर्वचरूनवदाय स्वस्वशाखीयेत्तराङ्गकर्मान्तर्गतमन्त्रेण प्रागुक्तेन स्विष्टकृद्धोमं कुर्य्यात्। ततः कामानुसारेण होमार्थं संकल्पितसर्पिर्यवतिलव्रीह्यादिद्रव्यं तत्तन्मन्त्रैः प्रत्येकं दश दशाहुतीःऋत्विजस्तां तां देवतां मनसा

ध्यायन्त उपांशु जुहुयुः । ततो ग्रहाणां दशासंख्यानुसारि-सहस्रसंख्यया सूर्य्यादिग्रहवैदिकमन्त्राणां विंशतिसहस्रोत्तर-लक्षजपे जापकैः कृते ऋत्विजः सावधानाः यजमानाभीष्टकामः समृद्ध्यतामिति ध्यायन्त वाग्यता आर्षादिज्ञानपूर्वकमयुत-संख्यया ओं भूर्भुवःस्वः स्वाहेति मन्त्रेण समिद्धेऽग्नौ दक्षिणं जानु पातयित्वा अन्तर्जानुहस्ता यज्ञोपवीतिनस्त्रिमध्वक्ततिलाज्यैः पूर्वाह्णे एव होमं कुर्य्युः । यावद्धोमसमाप्तिस्तावत् प्रतिदिनं होमाद्यन्तयोश्चन्दनपुष्पादिभिर्ग्रहादिदेवताः पूजयेयुः । अथै-तेषामाहुतिमन्त्राः प्रमाणतः प्रदर्श्यन्ते । तत्र ग्रहाणां, विधान-पारिजाते स्कान्दे । आ कृष्णेन ( १५०पृ० १८पं ) सहस्रांशो-रिमं देवा (१५०पृ० २२पं०) स्तथेन्दवे । अग्निर्मूर्द्धेति (१५१पृ० ३पं०) भौमाय उद्बुध्यस्व ( १५१पृ० ६पं० ) वुधाय च । बृहस्पते अति (१५१पृ० १२पं०) गुरोः शुक्रायान्नात् परिस्रुतः ( १५१पृ० १७पं० ) । शनैश्चरस्य मन्त्रोऽयं शन्नो देवो ( १५१पृ० २२पं० ) रुदाहृतः । कया न इति ( १५१पृ० २६पं० ) राहोश्च केतुं कृण्वं स्तु ( १५२पृ० ५पं० ) केतवे । विष्णुधर्मोत्तरे तु काण्डात् काण्डेति राहवे इति विशेष उक्तोऽतस्तत्र यथाचारं विकल्पः । काण्डादित्यस्याग्निर्ऋषिरनुष्टुप्छन्दो दूर्वा देवता राहुप्रीत्यर्थं दूर्वासमिद्धोमे वि० । काण्डात् काण्डात् प्ररोहन्ती परुषःपरुष-स्परि । एवानु दूर्वे प्रतनु सहस्रेण शतेन च ( य० १३अ० २०मं० ) । तत्रैव मात्स्ये आवो राजानं ( १८२पृ० २१पं० ) रुद्रस्य वलिं होमं समाचरेत् । आपो हिष्ठेत्यु (१८३पृ० १पं०) मायास्तु स्योनेति (१०८पृ० १८पं०) मेदिन्यास्तथा । विष्णोरिदं विष्णुरिति ( १०८पृ० ८पं० ) त्वमित्सेति ( १०८पृ० १२पं० ) स्वयंभुवः । इन्द्रमिद्देवतातये ( १८३पृ० ११पं० ) इन्द्रस्य जुहु-यात् पुनः । तथा यमस्य चायं गौ ( १८३पृ० १५पं० ) होमे

मन्त्रः प्रकीर्त्तितः। कालस्य ब्रह्म जज्ञानमिति (१०८पृ० १६पं०) मन्त्रः प्रशस्यते। चित्रगुप्तस्य चाज्ञातं (२०२पृ० ८पं०) मन्त्रं पौराणिका विदुः। अग्निं दूतं वृणीमहे इति (१०९पृ० ९पं०) वक्रे रुदाहृतः। उदुत्तमं वरुणेति (१७२पृ० १२पं०) अपां मन्त्रः प्रकीर्त्तितः। भूमेः पृथिव्यन्तरिक्षं (१८४पृ० ८पं०) विष्णोः सहस्रशीर्षेति (१८४पृ० १२पं०)। इन्द्रायेन्दो (१८४पृ० १६पं०) इतीन्द्रस्योत्तानपर्णे (११०पृ० ६पं०) शचीहुतौ। प्रजापते (११०पृ० ११पं०) प्रजेशस्य चायं गौरिति (११०पृ० १६पं०) सर्पके। ब्रह्मणो ब्रह्म जज्ञानमिति (११०पृ० २१पं०) मन्त्राः क्रमान्मताः। आतू न इन्द्रं (११०पृ० २६पं०) विघ्नेशे दुर्गाया जातवेदसे (१११पृ० ४पं०) आ नो नियुद्भि (६६पृ० २५पं०) र्वायोश्च आदित्प्रत्नस्य (१११पृ० १३पं०) वै दिवः। एषो उषा अपूर्व्येति (१११पृ० १७पृ०) अश्विनोर्मन्त्र ईरितः। एते च चिह्नितपत्रादिषु प्रागुक्तास्ते चार्षादिस्मरणपूर्वकं प्रणवादिस्वाहान्ता होमे पाठ्याः।

अथ होमे समिद्विशेषः स्कान्दे। प्रादेशमात्रा अर्कस्य समिधश्चार्कसम्भवाः। दधिमध्वाज्यसंयुक्ताः प्रतिदेवञ्च होमयेत्। पालाशीश्चैव सोमाय खादिरीर्लोहिताय च। आपामार्गीर्बुधायेति आश्वत्थीश्च बृहस्पतेः। औदुम्बरीश्च शुक्राय मन्दाय च शमीमयीः। दौर्वीराहोः कुशान् केतोर्होममन्त्रास्ततः परम्। समिल्लक्षणं चिन्तामणौ। समिधां लक्षणं वक्ष्ये संख्या तासां तथैव च। विशीर्णा विदला ह्रस्वा वक्राः सशुषिरा कृशा। अतिस्थूलातिदीर्घा च समिधः कार्य्यनाशिकाः। विशीर्णायुःक्षयकरी विदला पुत्रनाशिनी। शुषिरा व्याधिजननी कृशा च रिपुवर्द्धिनी। दीर्घा विदेशगमनी स्थूला चात्मविनाशिनी। अकृशा सुसमाऽस्थूला सार्द्रा च सुफलाशिनी। प्रादेशान्नाधिका

न्यूना समिधः सर्वकर्मणि। अथार्कादीनां फलं होमसंख्या च तत्रैव दर्शितं यथा। अर्को नाशयति व्याधिं पलाशः सर्वकामदः। खदिरश्चार्थलाभाय अपामार्गः सुदर्शनः। अश्वत्थः सर्वकामाय सौभाग्यौदुम्बरस्तथा। शमी शमयते पापं दूर्वायुष्यविवर्द्धिनी। कुशान् धर्मार्थकामानां रक्षणं रक्षसां विदुः। अष्टोत्तरन्तु साहस्रं शतमष्टाधिकं तु वा। अष्टाविंशतिमष्टौ वा एकैकस्य तु होमयेत्। देवानामपि सर्वेषामुपांशु परमार्थवित्। स्वेन स्वेनैव मन्त्रेण होतव्याः समिधः पृथक्। होतव्यं च घृताद्यत्र चरुभक्ष्यादिकं पुनः। मन्त्रैर्दशाहुतीर्दद्याद्धोमो व्याहृतिभिस्ततः॥ १॥ अत्र प्रकृतः सङ्कल्पितोऽयुतहोमो व्याहृतिभिः कार्य्य इत्यर्थः। एवमेव विधानपारिजातादयः॥ स्कान्दे जन्मभूर्गोत्रमग्निश्च वर्णस्थाने मुखानि च। योऽज्ञात्वा कुरुते शान्तिं ग्रहास्तेनावमानिता इत्युक्तेः शान्तिकाले तेषां जन्मभूम्यादिज्ञानमपेक्षितं तच्च विशेषणेन प्राग्दर्शितमपि प्रपञ्चार्थमिहोच्यते। तत्र रव्यादीनां जन्मभूम्यादयो यथा तत्रैव। उत्पन्नोऽर्कः कलिङ्गेषु यमुनायाञ्च चन्द्रमाः। अङ्गारकस्त्ववन्त्यां वै मगधायां हिमांशुजः। सैन्धवेषु गुरुर्जातः शुक्रो भोजकटे तथा शनैश्चरश्च सौराष्ट्रे राहुर्व्वर्व्वरके पुरे। अन्तर्वेद्यां तथा केतुरित्येता ग्रहभूमयः॥ यस्य यस्य च यद्गोत्रं तच्चे वक्ष्याम्यतः परम्। आदित्यः काश्यपे गोत्रे आत्रेयश्चन्द्रमा भवेत्। भारद्वाजो भवेद्भौमस्तथात्रेयश्च सोमजः। शक्रपूज्योऽङ्गिरोगोत्रः शुक्रो वै भार्गवस्तथा। शनिः काश्यप एवायं राहुः पैठिनसिस्तथा। केतवो जैमिनीयाश्च ग्रहाग्निस्तदनन्तरम्। आदित्ये कपिलो नाम पिङ्गलः सोम उच्यते। धूमकेतुस्तथा भौमे जाठरोऽग्निर्बुधे स्मृतः। गुरौ चैव शिखी नाम शुक्रे भवति हाटकः। शनैश्चरे महातेजा राहुकेत्वोर्हुताशन इति। इत्यमेव होमकाले तत्त-

ऽग्निनाम कृत्वा जुहुयात्। अथैषां वर्णादि तत्रैव। भास्करा-ङ्गारकौ रक्तौ शुक्लौ शुक्रनिशाकरौ। सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ। कृष्णः शनैश्चरस्तद्वत् राहुश्चित्रास्च केतवः। मध्ये तु भास्करं विद्याच्छशिनं पूर्वदक्षिणे। दक्षिणे लोहितं विद्यात् बुधं पूर्वोत्तरेण तु। उत्तरे तु गुरुं विद्यात् पूर्वतो भार्गवं न्यसेत्। पश्चिमेन शनिं विद्याद्राहुं दक्षिणपश्चिमे। पश्चिमोत्तरतः केतुः स्थाप्यो वै शुक्लतण्डुलैः। इति स्थानानि। अथ मुखं स्कान्दे। शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुज्ञौ तावुदङ्मुखौ। प्रत्यङ्मुखः शनिः सोमः शेषा दक्षिणतोमुखाः। अत्र प्राङ्मुखौ ऊर्द्ध्वदृष्टी, उद-ङ्मुखौ वामदृष्टी, प्रत्यङ्मुखोऽधोदृष्टिः, दक्षिणतोमुखा दक्षिण-दृष्टय इति व्याख्येयम् आदित्याभिमुखाः सर्वे इत्यनेन सर्वेषां सूर्य्याभिमुखत्वोक्तिः इति विधानपारिजातादयः। वर्णरूपगुणै-र्युक्तान् व्याहृत्यावाहयेत्तु तानिति स्कान्दोक्तेरावाहनसमयेऽपि वर्णभूम्यादिकीर्त्तनपूर्वकमावाहनं कार्य्यमेवमग्रेऽपि होमकाले तथा स्मरणमिति बोध्यम् ततो होमान्ते ग्रहादिभ्यस्तत्तन्मन्त्रेण (१४६पृ० २३पं०) प्रागुक्तप्रकारेण बलिं दत्त्वा भोः सूर्य्यग्रहास्य मम यजमानस्य आयुः कर्त्तेत्यादि प्राग्वत् प्रार्थयेत। एवमन्य-त्रापि।

ततः स्वस्वशाखीयमुत्तराङ्गं कर्म समाप्य पूर्णाहुतिं स्वशा-खोक्तविधिना दत्त्वा स्वशाखीयं शान्तिपाठं कुर्य्यात्। ततो वह्नेः पश्चिमे आसीनं सकुटुम्बं यजमानं साचार्य्या ऋत्विजः (२९५पृ० ५पं०) प्रागुक्तैः वैदिकैः पौराणिकैश्च मन्त्रैरभिषि-ञ्चेयुः। ततः सर्वौषधिस्नातो यजमानो धौते वस्त्रे परिधायाचार्य्यादिभ्यो दक्षिणामभिलप्य दद्यात्। तत्र ग्रहयज्ञे सूर्य्या-द्युद्देशेन ऋत्विगादिभ्यः (२९४पृ० ६पं०) प्रागुक्तदिशा कपि-लादयो दक्षिणात्वेन देयाः। अन्येषान्तु सुवर्णं तन्मूल्यं वा

डिति (१६३ पृ० २० पं०) सुवर्णकलसेनैवाचमनं कुरु केशव। पद्महस्तधरो देव कृपालो परमेश्वर। इत्याचमनम्। अथ पञ्चामृतस्नानम्। तत्र आप्यायस्वेति (१०६ पृ० ५ पं०) पठित्वा चन्दनादिभिः पञ्चोपचारैः संपूज्य। ओं भूर्भुवः स्वरिति षष्ठ्यधिकशतत्रयपलेन पयसा स्नपयेत् एवं सर्वत्र स्नाने। दधिक्राव्ण इति (२१ पृ० १५ पं०) दध्ना, तेजोऽसीति (२१ पृ० १९ पं०) घृतेन, मधुवाता इति (११ पृ० ९ पं०) मधुना, अपां रसमित्यस्य बृहस्पतीन्द्रावृषी अनुष्टुप् छन्दः शर्करा देवता तत्स्नपने विनियोग इति स्मृत्वा। अपां रसमुद्वयसं सूर्य्ये सन्तं समाहितम्। अपां रसस्य यो रसस्तं वो गृह्णाम्युत्तमम् (य० ९ अ० ३ म०) इति शर्करया, स्नानम्। ततः यत्पुरुषेणेति (१६४ पृ० ८ पं०) गङ्गा च यमुना चैव कृष्णा भीमरथा तथा एतासां पुण्यतोयेन स्नानं कुरु कृपार्णव इति पुरुषसूक्तेन च समग्रेण शुद्धोदकेन स्नानम्। पुनराचमनं दत्त्वा तं यज्ञमिति (१६३ पृ० २६ पं०) यज्ञोपवीतं परमं पवित्रं कर्मसाधनम्। गृहाण पुण्डरीकाक्ष भक्त्या तुभ्यं समर्पितम्। इति यज्ञोपवीतम्। तस्माद्यज्ञादिति (१६३ पृ० २१ पं०) पीतं वासो जगन्नाथ पीताम्बरधराव्यय। गृहाण देवदेवेश रमया सङ्गतानघ। इति वस्त्रम्। तस्माद्यज्ञादिति (१६३ पृ० २३ पं०) मुद्रिकासमलङ्कारैरङ्गदैर्बाहुभूषणैः। सहितं चन्दनं दत्तं स्मरतोऽनुगृहाण मे। गन्धमलङ्कारांश्च। तस्मादश्वा इति (१६३ पृ० २४ पं०) चम्पकैर्वकुलैर्नागैः पुन्नागैः कनकैर्दलैः। शतपत्रैर्मल्लिकाभिः पूजये जगदीश्वर इति पुष्पाणि। यत्पुरुषमिति (१६४ पृ० १ पं०) वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः। आघ्रेयः सर्वदेवानां धूपो गृह्यताम्। इति धूपम्। ब्राह्मणोऽस्येति (१६४ पृ० ३ पं०) कोटिभानुप्रतीकाशो विद्युज्ज्योतिःप्रकाशकः। अनेकरत्नसङ्काशो दीपो-

संपूज्य नारिकेलफलं गृहीत्वा तस्य प्रदक्षिणा कार्य्या। ततः अपराधसहस्राणि लक्षकोटिशतानि च। नश्यन्ति तत्क्षणादेव सत्येश तव सन्निधौ इति पठित्वा नमस्कुर्य्यात्। पुनः प्रदक्षिणान्ते अनेकजन्मसम्भूतं पातकं यत् मयार्जितम्। तत्सर्वं नाशमायातु सत्येश तव सन्निधौ। इति नमस्कुर्य्यात्। पुनः प्रदक्षिणान्ते पापोऽहं पापकर्माहं पापात्मा पापसम्भवः। त्राहि मां पुण्डरीकाक्ष सर्वपापहरो हरिः। इति नमस्कुर्य्यात्। पुनः प्रदक्षिणान्ते यानि कानि च पापानि ब्रह्महत्याशतानि च। नश्यन्तु तानि सर्वाणि सत्येश तव सन्निधौ। इति नमस्कुर्य्यात्। पुनः प्रदक्षिणान्ते ज्ञानाज्ञानकृतं वापि कायिकं वाचिकं तथा। तत्सर्वं नाशमायातु सत्येश तव सन्निधौ। इति नमस्कुर्य्यात्। ततः कस्मिंश्चिद्दिवसे पञ्च चतुरस्त्रीन् वा विदुष एकं वा अध्यात्मविदमुपवेश्य सचेलं स्नात्वा मौनी क्लिन्नवासाः अभुञ्जानस्तान् प्रदक्षिणीकृत्य हृदयेन दूयमानोऽवनौ साष्टाङ्गं प्रणम्य प्रार्थयेत। आब्रह्मस्तम्बपर्य्यन्तं भवद्वशमिदं जगत्। यक्षरक्षःपिशाचादिसदेवासुरमानुषम्। सर्वे धर्मविवेक्तारः सर्वे च शासकानघाः। मम देहस्य संशुद्धिं कुर्वन्तु द्विजसत्तमाः। पूज्यैः कृतः पवित्रोऽहं भविष्याम्यनघो यथा। प्रसादः क्रियतां मह्यं तथानुज्ञां प्रयच्छथ। पुरा कृतं मया घोरं ज्ञानाज्ञानेन किल्बिषम्। जन्मतोऽद्य दिनं यावत् तस्मात् पापात् पुनीत मामिति। ततस्तैः किं ते कार्य्यमित्यादिष्टे पर्षदग्रे गोवृषौ तत्प्रत्याम्नायत्वेन तन्मूल्यं स्वर्णरूप्यादि वा यथाशक्ति स्थापयित्वा बन्ध्यत्वबालनाशादिजन्यदुःखेनातिपीड़ितस्य मे चिकीर्षिते विष्णुयागसहितग्रहयागादावधिकारितासिद्ध्यर्थं जन्मान्तरीणानपत्यतादोषनिमित्तदुरितनिरासार्थं प्रायश्चित्तमुपदिश्य मामनुगृह्णन्तु भवन्त इति निवेद्य पुनः प्रणमेत्॥

एतच्च प्रकृतानुसारि अन्यत्र यथायथं तत्तद्दुरितनिरासार्थमित्यूह्यम्। ततस्ते सभ्यास्तमुत्थाप्य तस्य शरीरद्रव्यशक्तिमनुसृत्योत्तममध्यमाधमपक्षांश्च विचार्य्य अस्मिन् पक्षेऽयं समर्थ इति निश्चित्य पुस्तकवाचनपूर्वकं कथयेयुः। कर्त्ता तु चन्दनपुष्पादिभिः पुस्तकं सभ्यांश्च संपूज्य निबन्धपूजार्हं किञ्चिद्द्रव्यं यथाशक्ति सभ्याग्रे निधाय कृताञ्जलिपुटो नम्रस्तिष्ठन् तदुपदिष्टं शृणुयात्। सभ्याश्च साध्यानुसारेण षडब्दादिचान्द्रायणान्तेषु कञ्चन पक्षं यथाशास्त्रमुपदिशेयुः। उपदेशश्च सर्वानुमत्यैकेनैव कार्य्य इदं प्रायश्चित्तं साङ्गेऽस्मिन्ननुष्ठिते कृतार्थो भविष्यसीति। व्रताद्यशक्तौ तु तत्प्रत्याम्नायत्वेन होमगवादिकमुपकल्पयेयुः। एतैरुपदिष्टं प्रायश्चित्तं भवदनुग्रह इत्यङ्गीकृत्य सम्मानपूर्वकं प्रणम्य सभ्यान् विसर्जयेत्। तस्मिन् दिने चोपवासः कार्य्योऽशक्तौ हविष्यमश्नीयात्। ततो विरिक्तायामष्टमीरहितायां तिथौ कृतमाध्याह्निकः सायं गङ्गादौ वहिर्नगरे गत्वा देशकालकीर्त्तनान्ते अन्यजन्मार्जितानपत्यत्वादिकारणीभूतदुरितप्रशमनार्थं करिष्यमाणविष्णुयागसहितनवग्रहयागकर्मणि अधिकारितासिद्ध्यर्थममुकं प्रायश्चित्तममुकप्रत्याम्नायतया यथाशक्ति श्वः करिष्ये इति संकल्पं कुर्य्यात्। अन्यत्र यथायथं दुरितविशेषनाशार्थमिति कामनायां निवेश्यम्। एवं प्रधानसंकल्पं विधाय अद्येत्यादि कीर्त्तनान्ते वपनदन्तधावनभस्मगोमयमृद्वारिपञ्चगव्यस्नानानि पञ्चगव्यप्राशनादीनि च तदङ्गानि करिष्ये इति संकल्प्य यानि कानि च पापानि ब्रह्महत्यासमानि च। केशानाश्रित्य तिष्ठन्ति तस्मात् केशान् वपाम्यहमिति पठित्वा शिखाकक्षोपस्थवर्जं केशनखलोमानि वापयेत्। स्त्रियास्तु द्व्यङ्गुलमात्रवपनम्। केशधारणेच्छायान्तु द्विगुणं प्रायश्चित्तम्। तत्रापि महापातकिगोघ्नादेर्वपनमत्य-

न्तावश्यकम्। अतो द्वादशाङ्गुलं क्षीरिवृक्षादिभवं दन्तकाष्ठमादाय अन्नाद्याय व्यूहध्वं सोमो राजायमागमत्। तस्मै मुखं प्रमार्ष्टे ते यशसा च भगेन च। आयुर्बलं यशो वर्चः प्रजाः पशुधनानि च। ब्रह्म प्रज्ञाञ्च मेधाञ्च तन्नो धेहि वनस्पते इत्यनेन दन्तान् शोधयेत्। ततो मौनी स्नात्वा भस्मादिस्नानं कुर्य्यात्। तत्रायं क्रमः। ओं तत्पुरुषाय इति मुखे। ओं अघोराय नम इति हृदये। ओं वामदेवाय नम इति गुह्ये। सद्यो जाताय नम इति पादयोः। ओमिति सर्वाङ्गे। अग्निरिति भस्म जलमिति भस्म स्थलमिति भस्म वायुरिति भस्म व्योमेति भस्म सर्वं ह वा इदं भस्मेति मन्त्रैर्वा भस्मानुलिप्य स्नायात्॥ १॥ अथ गोमयेन गन्धद्वारामिति (२३७पृ० ४पं०) प्रागुक्तेन अग्रमग्रं चरन्तीनामोषधीनां वने वने। तस्मादृषभपत्नीनां पवित्रं कायशोधनम्। तन्मे रोगांश्च शोकांश्च नुद गोमय सर्वदेति मन्त्रेण च सर्वाङ्गे तदनुलिप्य स्नायात्॥ २॥

अथ मृदा स्नानम्। तत्र बलित्थेत्यस्यात्रेयो भौम ऋषिरनुष्टुप् छन्दः पृथिवी देवता भूमिप्रार्थने वि०। बलित्था पर्वतानां छिद्रं बिभर्षि पृथिवि। प्र या भूमिं प्रवत्वतिमह्ना जिनोषि महिनि (१ म० ऋ० ५८४ सू०) इत्यनेन पृथिवीं प्रार्थ्य मा वो रिषदित्यस्य बन्धुर्ऋषिरनुष्टुप् छन्द ओषधयो देवताः भूमिखनने वि०। मा वो रिषत् खनिता यस्मै चाहं खनामि वः। द्विपाच्चतुष्पादस्माकं सर्वमस्त्वनातुरम् (य० १२ अ० ९५ क०) भूमिं खनित्वा स्योना पृथिवीत्यादिना (८०पृ० २०पं०) प्रागुक्तेन मृदं गृहीत्वा काण्डादित्यादिना (३१४पृ० १९पं०) प्रागुक्तेन दूर्वां गृहीत्वा गायत्र्या अभ्युक्ष्य भूमौ निधायाचम्य मृदं कुशोदकेनाभ्युक्षेत्। ततो दिक्षु त्रातारमित्यादिना (१५६पृ० ८पं०) प्रागुक्तेन प्राच्याम्, यमाय

त्वेत्यादिना ( १५६ पृ० १६ पं० ) प्रागुक्तेन दक्षिणतः, तत्त्वा यामीत्यादिना (८७पृ० ११पं०) प्रागुक्तेन पश्चात्, वयं सोमे-त्यादिना ( १५७पृ० ६पं० ) प्रागुक्तेनोत्तरतः, तत्सूर्य्यमित्यस्य व्यश्वपुत्र ऋषिरुष्णिक् छन्दः मित्रावरुणौ देवते मृत्तिकाक्षेपणे वि०। तत्सूर्य्यं रोदसी उभे दोष वस्तोरुपब्रुवे। भोजेष्वस्माँ अभ्युच्चर: सदा (ऋ० ८म० २५सू० २१म०) इत्यनेनोपरिष्टाच्च मृदं क्षिपेत्। ततः पुरुषसूक्तेन (१२५पृ० २६पं०) प्रागुक्तेन गात्रो-द्वर्त्तनं कुर्य्यात्। ततः अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे। मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्। उद्धृतासि वरा-हेण कृष्णेन शतबाहुना। आरुह्य मम गात्राणि सर्वपापं प्रमोचय। नमस्ते सर्वभूतानां प्रभवाविनि सुव्रते इत्यनेन सतिलदूर्वां मृदं शिरसि दद्यात्। इति मृदा स्नानम् २। ततो जलस्नानाय तीर्थं प्रार्थयेत। गङ्गे च यमुने चैव गोदावरि सरस्वति। नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु इति। विष्णोः पादप्रसूतासि वैष्णवी विष्णुपूजिता। पाहि नस्त्वेनसस्तस्मादाजन्ममरणान्तिकात्। तिस्रः कोट्यर्द्धकोटी च तीर्थानां वायुरब्रवीत्। दिवि भुव्यन्तरिक्षे च तानि ते सन्ति जाह्नवि। नन्दिनीत्येव ते नाम देवेषु नलिनीति च। वृन्दा पृथ्वी च सुभगा विश्वकाया शिवा सिता। विद्याधरी सुप्रसन्ना तथा लोकप्रसादिनी। क्षमा च जाह्नवी चैव शान्ता शान्ति-प्रदायिनी। एतानि पुण्यनामानि स्नानकाले प्रकीर्त्तयेत्। भवेत् सन्निहिता गङ्गा तत्र त्रिपथगामिनी। इति पठेत्। ततः सुमित्रिया इत्यस्य प्रजापतिर्ऋषिश्छन्दोऽभावः वरुणो देवता जलस्पर्शे वि०। सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः ( य०-७अ०० २२ क० ) इति। समुद्रज्येष्ठा इति चतुर्ऋचस्य वसिष्ठ-

ऋषिस्त्रिष्टुप् छन्द आपो देवता अभिषेके वि०। समुद्रज्येष्ठाः सलिलस्य मध्यात् पुनाना यन्त्यनिविशमानाः। इन्द्रो या वज्री वृषभो रराद ता आपो देवीरिह मामवन्तु ॥ १ ॥ या आपो दिव्या उत वा स्रवन्ति खनित्रिमा उत वा याः स्वयंजाः। समुद्रार्था याः शुचयः पावकास्ता आपो देवीरिह मामवन्तु ॥ २ ॥ यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम्। मधुश्चुतः शुचयो याः पावकास्ता आपो देवीरिह मामवन्तु ॥ ३ ॥ यासु राजा वरुणो यासु सोमो विश्वे देवा यासूर्जं मदन्ति। वैश्वानरो यास्वग्निः प्रविष्टस्ता आपो देवीरिह मामवन्तु ॥ (ऋ०७म०५०सू०) इति चतुर्ऋचम्। पावमानसूक्तान्तर्गतं (२५८पृ० १पं०) प्रागुक्तं तरत्समन्दीति सूक्तम्। आपो हिष्ठेति तृचं च पठित्वा मार्जनं कृत्वा गायत्र्या जलमालोड्य ऋतं च सत्यञ्चेति सन्ध्याप्रयोगान्तर्गतं तृचं जपेत्। ततः शुद्धोदकेन स्नानम् ॥ ४ ।

अथ पञ्चगव्येन स्नानम्। तत्र गायत्र्या गोमूत्रेण, ५। गन्धद्वारामिति (२३७पृ० ४पं०) प्रागुक्तेन गोमयेन, ६। आप्यायस्वेत्यादिना (१०६पृ० ५पं०) प्रागुक्तेन क्षीरेण, ७। दधिक्राव्ण इत्यादिना (२१पृ० १६पं०) प्रागुक्तेन दध्ना, ८। तेजोऽसीत्यादिना (२१पृ० १९पं०) प्रागुक्तेन घृतेन ९। देवस्य त्वेत्यादिना (२१पृ० २३पं०) प्रागुक्तेन कुशोदकेन च स्नानं कुर्यात् १०। एवं दश स्नानानि विधाय धौते वाससी परिधाय द्विराचम्य विष्णूद्देशेन श्राद्धं गोदानं च विधाय स्वगृह्योक्तदिशाग्निमाधायाज्येन व्याहृतिभिरष्टोत्तरशतं जुहुयात्। ततः ब्रह्मकूर्चाख्यं पञ्चगव्यं शोधयेत्। यथा सुवर्णादिपात्रे पद्मादिपत्रे वा ताम्रवर्णाया गोस्त्रिपलं मूत्रं गायत्र्या, श्वेताया गोर्गोमयमङ्गुष्ठार्द्धपरिमितं गन्धद्वारामित्यनेन, कपिलाया गोः सप्तपलं क्षीरमा-

प्यायस्वेति मन्त्रेण, नीलाया गोः सप्तपलं दधि दधिक्राव्ण इत्यादिना, कृष्णाया गोर्घृतमेकपलं तेजोऽसीत्यादिना च संशोध्य तत्रैकपलं कुशोदकमापोहिष्ठेत्यादिना दत्त्वा प्रणवेनालोड्य तेनैव निर्मथ्य तेनैव अभिमन्त्र्य तानि एकत्रीकृत्य सप्तपत्रैर्हरितैः कुशैर्दशाहुतीर्जुहुयात् । तत्र दशाहुतौ मन्त्राः । इरावतीत्यस्य वशिष्ठ ऋषिस्त्रिष्टुप् छन्दः पृथिवी देवता कूर्चहोमे वि० । इरावती धेनुमती हि भूतं सूयवसिनी मनवे दशस्या । व्यास्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा ॥१॥ ( य० ५अ० १६म० ) । इति पृथिव्यै, १ । इदं विष्णुरिति (७०पृ० १७पं०) प्रागुक्तेन स्वाहान्तेन विष्णवे, २ । मा नस्तोक इत्यादिना (२१पृ० ७पं०) प्रागुक्तेन स्वाहान्तेन रुद्राय, । ३ । ब्रह्म जज्ञानमित्यादिना ( ७०पृ० ८पं० ) प्रागुक्तेन तथैव ब्रह्मणे, ४ । अग्निं दूतमित्यादिना ( ६०पृ० १पं० ) प्रागुक्तेन स्वाहान्तेन अग्नये ॥ ५ ॥ वयं सोमेत्यादिना ( ६७पृ० ८पं० ) प्रागुक्तेन स्वाहान्तेन सोमाय, ६ । गायत्र्या स्वाहान्ताय सूर्य्याय, ७ । प्रणवेन स्वाहान्तेन प्रजापतये, ८ । भूर्भुवः स्वः स्वाहेति च प्रजापतये, ९ । अग्नये स्विष्टकृते स्वाहेति स्विष्टकृते अग्नये, १० । इत्येवमेताभ्यो दशाहुतीर्दद्यात् । ततः देशकालकीर्त्तनान्ते श्वः कर्त्तव्यामुकप्रायश्चित्तार्थमद्य सायं व्रतग्रहणं करिष्ये इति संकल्प्य द्विजान् प्रति पृष्टे द्विजैश्च कुरुष्वेति प्रत्युक्तः प्रणवेन होमावशिष्टं सर्वमशक्तौ किञ्चिन्मात्रं वा पिबेत् । एवं कृत्वा गृहमागत्य विष्णुं स्मरन् मौनी निशामतिवाह्य परदिने प्रातर्व्रतानुकल्पधेनुदानादिरूपं प्रायश्चित्तं संकल्पपूर्वकं कृत्वा दक्षिणां दत्त्वा शुद्ध्यर्थं पार्वणश्राद्धं कुर्य्यात् । पार्वणश्राद्धप्रयोगस्तु मत्कृतगयाश्राद्धादिपद्धतौ अनुसन्धेयः । केचित्त्वत्र विष्णूद्देशेन श्राद्धं कार्य्यमित्यूचिरे । यथा कुलाचारश्च तत् अनु-

ष्ठेयम् । ततो व्याहृतिभिः पूर्ववदेव होमं कुर्य्यात् । ततो दश दानानि अभिलप्य सभ्याय प्रतिपादयेत् । तत्र दश दाना-न्युक्तानि विधानपारिजाते । गोभूतिलहिरण्याज्यवासोधान्य-गुड़ानि च । रौप्यं लवणमित्याहुर्दश दानान्यनुक्रमात् । ततः, मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्पितम् । सर्वं तत् पूर्णतां यातु भास्करस्य प्रसादत इति पठित्वा अच्छिद्रावधारणं विधाय विष्णुं स्मरेत् । ततो यथाशक्ति ब्राह्मणान् भोजयेत् । ततः परगवे घासादिग्रासं दद्यादिति प्रायश्चित्तप्रयोगः ।

अथ विष्णुयागः । नवग्रहसहितं विष्णुयागं चिकीर्षुः पूर्वोक्तविधिना प्रायश्चित्तं कृत्वा कृतपापक्षयो मलमासशुक्रा-स्तादिवर्जिते काले पूर्वोक्तमण्डपादिसम्भारान् विधाय देश-कालादिकीर्त्तनान्ते मम अनपत्यत्वमृतापत्यत्वदोषनिदानदुरि-तक्षयद्वारा अस्याश्च भार्य्यायाश्चतुर्विधवन्ध्यात्वनिदानदुरितक्षय-द्वारा बहुदीर्घायुःसुपुत्रप्राप्तिकामनया अनया भार्य्यया सह यथाशक्ति नवग्रहयागसहितं विष्णुयागं करिष्ये इति संकल्प्य इमं श्लोकं पठेत् । आत्मनो बहुसद्वृत्तदीर्घायुःपुत्रलब्धये । गर्भदोषापहृतये विष्णुयागं समारभे । ततः पूर्वोक्तदिशा नवग्रहयागं कृत्वा वेदिमध्ये सर्वतोभद्रमण्डलं विलिख्य तत्र देवानावाह्य पूजयित्वा तदुपरि वस्त्रं प्रसार्य्य तन्मध्ये धान्य-राशौ स्वर्णादिकलसं ( २१पृ० १५पं० ) प्राग्वत् स्थापयित्वा चन्दनकुङ्कुमादिलिखिते अष्टदले निष्केण तदर्द्धेन वा सुवर्णेन यथाशक्ति निर्मितं सगरुड़ासनं सलक्ष्मीकं विष्णुमग्न्युत्तारणा-दिना संस्कृत्य तत्र स्थापयेत् । तस्य सव्यदक्षिणयोः धान्य-राशिस्थकलसद्वये सौवर्णं रुद्रं ब्रह्माणञ्च तथैव संस्कृत्य स्थाप-येत् । तत्पुरतस्तिलमाषयवव्रीहिकङ्गुश्यामाकमुद्गरूपाणि सप्त धान्यानि प्रत्येकं द्रोणमितानि यथाशक्ति वा स्थापयेत् । तेषां

पुरत ईशानादिषु तण्डुलपुञ्जेषु वक्ष्यमाणा देवताः स्थापयेत्। यथा स्कन्दः, बलिः, व्यासः, स्वयम्भूः, औशनसः, क्रतुः, दक्ष-प्रजापतिः, भीष्मः, कपिलः, च्यवनः, अर्जुनः, पुलस्त्यः, पुलहः, अगस्त्यः, वसिष्ठः, आथर्वणः, रुक्माङ्गदः, भरतः, धौम्यः, सुनन्दः नन्दवर्द्धनः, प्रह्लादः, नारदः, वैन्यः, नन्दनः, वायुनन्दनः, विष्वक्सेनः, जयः, भद्रः, सुग्रीवः, विभीषणश्चेति। पूर्वादिषु इन्द्रादिलोकपालाः, उत्तरस्यां दुर्गा, क्षेत्रपालः, गणपतिश्च स्वस्वमन्त्रैः स्थाप्याः। विष्णोः पुरतो गरुडं स्थापयेत्।

अथ न्यासः। सहस्रशीर्षेति (१६३पृ० १३पं०) वामकरे, पुरुष एवेति (१६३पृ० १५पं०) दक्षिणकरे, एतावानस्येति (१६३पृ० १६पं०) वामपादे, त्रिपादूर्द्ध इति (१६३पृ० १८पं०) दक्षिणपादे, ततो विराडिति (१६३पृ० २०पं०) वामजानौ, यत्पुरुषेणेति (१६४पृ० ८पं०) दक्षिणजानौ, तं यज्ञमिति (१६३पृ० २६पं०) वामकट्याम्, तस्माद्यज्ञादिति (१६३पृ० २३पं०) दक्षिणकट्याम्, तस्माद्यज्ञादिति (१६३पृ० २१पं०) नाभौ, तस्मादश्वा इति (१६३पृ० २४पं०) हृदये, यत्पुरुष-मिति (१६४पृ० १पं०) कण्ठे, ब्राह्मणोऽस्येति (१६४ पृ० ३पं०) वामबाहौ, चन्द्रमा इति (१६४ पृ० ५ पं०) दक्षिणबाहौ, नाभ्या इति (१६४ पृ० ६ पं०) आस्ये, सप्ता-स्येति (१६४पृ० ९पं०) नेत्रयोः, यज्ञेनेति (१६४पृ० ११पं०) मूर्ध्नि न्यसेत्। अथ पञ्चाङ्गन्यासः। ब्राह्मणोऽस्येति (१६४पृ० ३ पं०) हृदयाय नमः, चन्द्रमा मनस इति (१६४पृ० ५पं०) शिरसे स्वाहा, नाभ्या इति (१६४पृ० ६पं०) इति शिखायै वषट् सप्तास्येति (१६४पृ० ९पं०) कवचाय हुँ, यज्ञेनेति (१६४पृ० ११पं०) अस्त्राय फट्, एवं न्यस्य पूर्वोक्ताः पीठ-देवताः संपूज्य ध्यायेत्। यथा नमस्कृत्य महाविष्णुं संस्मरेत

क्षीरसागरम्। क्षीरसागरमध्यस्थं श्वेतद्वीपं विचिन्तयेत्। कोटियोजनविस्तीर्णं भानुकोटिसमप्रभम्। तन्मध्ये तु महा- दिव्यं प्रासादं रत्ननिर्मितम्। प्रासादमध्ये चन्द्राभं सिंहासन- मनुत्तमम्। तस्योपरि महानागं शेषाख्यं मणिमण्डितम्। तदासने महाविष्णुं तत्फणाव्याप्तमस्तकम्। वेदसूक्तैः स्तूय- मानं नानारत्नविभूषितम्। घननीलतनुं देवमप्सरोगणसेवि- तम्। तृणादिब्रह्मपर्य्यन्तविश्वगं विश्वसाक्षिणम्। चराचर- गुरुं देवं घनश्यामं चतुर्भुजम्। ब्रह्माद्यैरर्चितं विष्वक् सर्वा- भरणभूषितम्। एवं ध्यायेत् महाविष्णुं गदाब्जासिसुशङ्खकम्। वामभागे स्थितां देवीं नीलकुञ्चितमूर्द्धजाम्। हेमारविन्दप्र- तिमां मौक्तिकाभरणोज्ज्वलाम्। दाड़िमं सव्यहस्ते तु दक्षिणा- लिङ्गसन्ततिम्। श्रीविष्णुभिमुखां ध्यायेद्भक्ताभीष्टफलप्रदाम्। इति ध्यानम्। एतस्य फलं विधानपारिजाते। इदं ध्यानं कृतं येन यथा भीष्मोऽभवद्वरः। यथा पृथात्मजो जिष्णुस्तथा पुत्रो भवेत्तत इति एवं ध्यात्वा मानसैः संपूज्य आवाहयेत्। सहस्र- शीर्षेत्यादि (१६२ पृ० १२पं०) पठित्वा आगच्छ भगवन् विष्णो स्थाने चात्र सुरैः सह। यावत् कर्म समाप्येत तावत्त्वं सन्निधौ भवेति। ततो मनोजूतिरित्यादिना (३२पृ० १७पं०) प्राणप्रतिष्ठां विधाय आसनादीनुपचारान् दद्यात्। तत्रासनम्। पुरुष एवेति (१६२पृ० १५पं०) शेषमञ्चं महादिव्यं फणाम- णिसहस्रकम्। कोटिसूर्य्यप्रतीकाशं गृहाणासनमीश्वर इति च पठित्वा दद्यादेवं सर्वत्र। एतावानस्येति (१६२ पृ० १६पं०) नमस्ते पद्मजाराध्य नमस्ते विश्ववन्दित। पाद्यं गृहाण देवेश घननीलप्रभाकर इति चोक्त्वा पाद्यम्। त्रिपादूर्द्ध इति (१६२पृ० १८पं०) श्रीमत् कृष्णाय देवाय क्षीराब्धिशयनाय च। इदमर्घ्यं मया दत्तं ब्रह्माद्यैः संहिताय च। इति चार्घ्यम्। ततो विरा-

डिति (१६३ पृ० २० पं०) सुवर्णकलसेनैवाचमनं कुरु केशव। पद्महस्तधरो देव कृपालो परमेश्वर। इत्याचमनम्। अथ पञ्चामृतस्नानम्। तत्र आप्यायस्वेति ( १०६पृ० ५पं० ) पठित्वा चन्दनादिभिः पञ्चोपचारैः संपूज्य। ओं भूर्भुवः स्वरिति षष्ठ्यधिकशतत्रयपलेन पयसा स्नपयेत् एवं सर्वत्र स्नाने। दधिक्राव्ण इति (२१पृ० १५पं०) दध्ना, तेजोऽसीति (२१पृ० १८पं०) घृतेन, मधुवाता इति (११पृ० ८पं०) मधुना, अपां रसमित्यस्य बृहस्पतीन्द्रावृषी अनुष्टुप् छन्दः शर्करा देवता तत्स्नपने विनियोग इति स्मृत्वा। अपां रसमुद्वयसं सूर्य्यें सन्तं समाहितम्। अपां रसस्य यो रसस्तं वो गृह्णाम्युत्तमम् ( य० ९अ० ३म० ) इति शर्करया, स्नानम्। ततः यत्पुरुषेणेति ( १६४पृ० ८पं० ) गङ्गा च यमुना चैव कृष्णा भीमरथा तथा एतासां पुण्यतोयेन स्नानं कुरु कृपार्णव इति पुरुषसूक्तेन च समग्रेण शुद्धोदकेन स्नानम्। पुनराचमनं दत्त्वा तं यज्ञमिति ( १६३पृ० २६पं० ) यज्ञोपवीतं परमं पवित्रं कर्मसाधनम्। गृहाण पुण्डरीकाक्ष भक्त्या तुभ्यं समर्पितम्। इति यज्ञोपवीतम्। तस्माद्यज्ञादिति ( १६३पृ० २१पं० ) पीतं वासो जगन्नाथ पीताम्बरधराव्यय। गृहाण देवदेवेश रमया सङ्गतानघ। इति वस्त्रम्। तस्माद्यज्ञादिति (१६३पृ० २३पं०) मुद्रिकासमलङ्कारैरङ्गदैर्बाहुभूषणैः। सहितं चन्दनं दत्तं स्मरतोऽनुगृहाण मे। गन्धमलङ्कारांश्च। तस्मादश्वा इति ( १६३पृ० २४पं० ) चम्पकैर्वकुलैर्नागैः पुन्नागैः कनकैर्दलैः। शतपत्रैर्मल्लिकाभिः पूजये जगदीश्वर इति पुष्पाणि। यत्पुरुषमिति ( १६४ पृ० १पं० ) वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः। आघ्रेयः सर्वदेवानां धूपो गृह्यताम्। इति धूपम्। ब्राह्मणोऽस्येति ( १६४पृ० ३पं० ) कोटिभानुप्रतीकाशो विद्युज्ज्योतिःप्रकाशकः। अनेकरत्नसङ्काशो दीपो-

ऽयं प्रतिगृह्यताम्। इति दीपम्। चन्द्रमा इति (१६४पृ० ५पं०) शर्कराखण्डपक्वान्नं दधिक्षीरघृतानि च। षड्रसं भक्तिसंयुक्तं नैवेद्यं प्रतिगृह्यताम्। इति नैवेद्यम्। पुनराचमनं दत्त्वा नाभ्या आसीदिति (१६४ पृ० ६ पं०) नारिकेलं सखर्जूरं द्राक्षाचूतफलादिकम्। कदल्यादिफलं तुभ्यं दत्तं श्रीपुरुषोत्तम। इति फलानि। सप्तास्येति (१६४ पृ० ८ पं०) पूगीफलं महादिव्यं नागवल्लीदलैर्युतम्। कर्पूरैलाफलैर्युक्तं ताम्बूलं प्रतिगृह्यताम्। इति ताम्बूलम्। यज्ञेनेति (१६४पृ० ११पं०) हिरण्यगर्भ इति (३२पृ० १५पं०) इत्येताभ्यां दक्षिणाम् श्रिये इत्यस्य प्रजापतिरृषिस्त्रिष्टुप् छन्दः श्रीर्देवता नीराजने विनियोग इति स्मृत्वा श्रिये जातः श्रिय आनिरियाय श्रियं वयो जरितृभ्यो दधाति। श्रियं वसाना अमृतत्वमायन् भवन्ति सत्यान् समिथामितद्रौ (ऋ० ८ म० ८४ सू० ४ म०) इति नीराजनम्। कृष्णाय रामभद्राय जगन्नाथाय धन्विने। प्रणतक्लेशनाशाय गोविन्दाय नमो नम इति पुष्पाञ्जलित्रयं दद्यात्। नारायणं सहस्राक्षं नरकार्णवतारकम्। वन्दे तं जगदात्मानं वासुदेवं सनातनम्। इति साष्टाङ्गप्रणामः। कृष्णेति कृष्ण कृष्णेति कृष्ण राम हरेऽच्युत। प्रदक्षिणीकृतात् पुण्यात्तुष्टस्त्वं कृपया भव। इति प्रदक्षिणा। गोप्रिय व्यजनेनाथ चामरेणातपत्रतः गान्धर्वगीतवाद्येन प्रीतो भव रमाप्रिय। इति भजनादि। कृष्णाय गोकुलेशाय वंशरक्षाकराय च। यशोदानन्द भद्राय नमोऽस्तु गुणसिन्धवे। सुतान् देहि सुतान् देहि त्वं पूजाक्षयपुण्यतः। वासुदेव जगन्नाथ कृपालो भक्तवत्सल। इति प्रार्थना। ततो वामकलसोपरि रुद्रं त्र्यम्बकमिति (५६पृ २५पं०) मन्त्रेण दक्षिणकलसोपरि च ब्रह्माणं ब्रह्म जज्ञानमिति (७०पृ० ८पं०)

मन्त्रेण षोड़शभिरुपचारैः संपूज्य ध्रुवादिपीठदेवता यथाशक्ति संपूजयेत् । ततः पुरुषसूक्तेन प्रणमेत् । ततः स्थापितवह्नौ स्वगृह्योक्तविधिना विष्णुमुद्दिश्य चरुं पृथक् श्रपयित्वा चरुणा अश्वत्थसमिद्भिस्तिलाज्येन च प्रतिद्रव्यमिदं विष्णुरिति (७०पृ० १७पं०) मन्त्रेण अष्टाधिकसहस्रं जुहुयात् । चरुहोमः समिद्धोमस्तिलाज्यहोमश्चेति त्रिधा होमः कार्य्यः । केचित्तु भारतोक्तविष्णुसहस्रनामभिः विष्णुरित्यादिभिः सर्वप्रहरणायुध इत्यन्तैः सहस्रसंख्यया उक्तत्रिविधद्रव्येण त्रिधा होमः कार्य्य इत्याहुः । संप्रदायविदस्तु उभययथापि होमः कार्य्य इति प्राहुः । एवं रुद्रब्रह्मणोऽपि यथाशक्ति प्रागुक्तमन्त्राभ्यां होमः कार्य्यः । ततो ध्रुवादीनामपि प्रणवादिस्वाहान्तनाममन्त्रैः यथाशक्ति होमं कुर्य्यात् । ततः प्राग्वत् सर्वमुदीच्यं कार्य्यम् । अत्रायं विशेषः । वैष्णवचरुशेषमितराहारपरिहारपूर्वकं दम्पती पवित्रौ भूत्वा भुञ्जीयाताम् । रात्रौ च पत्नी पतिं नारायणरूपतया मनसा ध्यात्वा तेन सह उपसङ्गम्य वामपार्श्वशायिनी भवेत् । पतिश्च यावद्गर्भाधानमन्यां स्त्रियं परिहरेत् । यावत् पुत्रोत्पत्तिर्न्न भवेत् तावत् ब्राह्मणा भोजनादिना प्रतिदिनं तर्पयितव्याः असामर्थ्ये वर्षपर्य्यन्तम् । एवं विष्णुयागस्य फलमपि विधानपारिजातादौ दर्शितं यथा । प्राप्नुयाद्वैष्णवं पुत्रं चिरायुःसन्ततिप्रदम् । अपुत्रा मृतपुत्रा वा या च कन्यां प्रसूयते इति, यः सिद्धमन्त्रः सततं द्विजेन्द्रः संपूज्य विष्णुं विधिवत् सुतार्थी । इदं विधानं विदधाति सम्यक् स पुत्रमाप्नोति हरिप्रसादात् इति च । अस्मद्देशीयास्तु एतदज्ञानात् यथाकथञ्चित् प्रकारेणैव विष्णुयागसहितं नवग्रहयागं कुर्वन्ति इत्यतो बहुयत्नेन बहुपुस्तकदर्शनेन इदं मया तेषां प्रबोधाय संगृहीतम् ।

अविधानेन कर्मभ्यः फलावाप्तिर्लघीयसी । विधानात् फल-

भूयस्त्वमित्युक्तः सद्विधिर्मया। येषां शास्त्रेषु विश्वासो न च तत्रास्त्यनादरः। तेषां समादरो भूयादित्येव प्रार्थना मम। एतद्ग्रन्थेषु या काचित् पद्धतिः परिकल्पिता। न तत्र होम-मन्त्रादिर्न च सूक्तादिसंग्रहः। समालोच्य प्रयत्नेन बह्वीः प्राचीनपद्धतीः। वेदेभ्यः सूक्तमन्त्रादीनादायैषा कृता मया। सुधियः शोधयन्त्वेतां विनयाञ्जलियाचिताः। मत्प्रयासं विलोक्यास्य यतध्वं सुप्रचारणे। वासुदेवो जगन्नाथो भक्ताभीष्ट-फलप्रदः। अनेन तोषमाप्नोतु तेनैव मत्कृतार्थता। ओं तत्सत् शुभमस्तु।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचितायां
तुलादानादिपद्धतौ तुलादानविधानो नाम
प्रथमखण्डः समाप्तः।

मन्त्रेण पं
संपूजयेत्
स्वगृहोत
अश्वत्थस
(१७पं०) 
स्तिलाज्य
विष्णुसह
सहस्रसंख
संप्रदार्या
ब्रह्मणोऽ
भ्रुवादीन्
कुर्य्यात् ।
वैष्णवचर
भुञ्जीयात
ध्यात्वा ति
यावन्नभा
भवेत् त
असामर्थ्ये
पारिजात
स्वये ।
सिद्धमन्त्र
इदं विधान्
इति च ।
णेव विष
बहुपुस्तक
अवि

# एतत् पुस्तके साङ्केतिक शब्दार्थज्ञापनम् ।

| सङ्केतशब्दः | | तदर्थः |
|---|---|---|
| ऋ० | ... | ऋग्वेदे |
| (१म) म० | ... | मण्डले |
| सू० | .. | सूक्ते |
| (२य) म० | ... | मन्त्रः |
| य० | ... | यजुर्वेदे |
| अ० | .. | अध्याये |
| म० | ... | मन्त्रः |
| सा० | ... | सामार्चिके |
| प्र० | .. | प्रपाठके |
| द० | ... | दशतौ |
| म० | ... | मन्त्रः |
| ब्रा० | ... | ब्राह्मणे |
| गा० | .. | गानम् |
| (१म०) अ० | ... | अथर्ववेदे |
| (२य) अ० | ... | अध्याये |
| म० | ... | मन्त्रः |
| (१म०) पं० | ... | पङ्क्तौ |
| पृ० | ... | पृष्ठे |
| (२य) पं० | ... | पङ्क्तौ |